# गीताप्रवेशः ५

द्वितीयभागः - द्वितीयखण्डः

## भवताम् अध्ययनस्य अनुकूलतायै संस्कृतभारत्या सज्जीकृताः सन्ति अन्येऽपि बहवः ग्रन्थाः । यथा -

भाषाभ्यासाय -

▸ अभ्यासपुस्तकम् ▸ विभक्तिवल्लरी ▸ शतृशानजन्तमञ्जरी ▸ अभ्यादर्शिनी
▸ सम्भाषणसोपानम् ▸ कालबोधिनी ▸ णत्वणिजन्तम् ▸ सन्देशसंस्कृतम्
▸ सम्भाषणसंस्कृतम् (ध्वनिमुद्रिकासहितम्) ▸ प्रयोगाः (ध्वनिमुद्रिकासहितम्)

भाषाज्ञानवर्धनाय व्याकरणपरिज्ञानाय च -

▸ समासः ▸ सन्धिः ▸ कारकम् ▸ शुद्धिकौमुदी ▸ भाषापाकः ▸ इड्व्यवस्था ▸ धातु-रूपनन्दिनी ▸ प्रक्रियानुसारी पाणिनीयधातुपाठः ▸ अष्टाध्यायीसूत्रपाठः ▸ इडागमः ▸ तिङ्कृत्कोषः - १ (सार्वधातुकखण्डः ▸ तिङ्कृत्कोषः - २ (आर्धधातुकखण्डः) ▸ पाणिनीयमूलधातुपाठः ▸ पाणिनीयधातुपाठः (सार्थः) ▸ सनाद्यन्तधातुपाठः ▸ लकारसरणिः - प्रथमो भागः (लट्, लोट्, लङ्, विधिलिङ्, इत्येते, सार्वधातुकलकाराः) ▸ लकारसरणिः - द्वितीयो भागः (लृट्, लृङ्, लुट्, आशीर्लिङ्, इत्येते चत्वारो लकाराः) लकारसरणि - तृतीयो भागः (लिट् लकारः) ▸ लकारसरणिः - चतुर्थो भागः (लुङ् लकारः) ▸ यङन्तकोषः नामधातुकोषश्च ▸ यङ्लुगन्तकोषः ▸ णिजन्तकोषः ▸ सन्नन्तकोषः ▸ सस्वरः पाणिनीयधातुपाठः (सार्वधातुकप्रत्ययोपयोगी) ▸ सस्वरः पाणिनीयधातुपाठः (आर्धधातुकप्रत्ययोपयोगी)

पुस्तकानि ध्वनिमुद्रिकाश्च प्राप्तुं भवतां केन्द्रसंयोजकस्य सम्पर्कं कुर्वन्तु ।

# गीताप्रवेशः

## द्वितीयभागः

### द्वितीयखण्डः

(५-१८ अध्यायाः)

संस्कृतभारती
नवदेहली

प्रकाशनम्
संस्कृतभारती
मातामन्दिरगली, झण्डेवाला
नवदेहली - 110055



मुखपुटविन्यासः - सुधाकर दर्बे
आन्तरसज्जता - शान्तला
साहाय्यम् - हरिणाक्षी

प्रथममुद्रणम् - २००६ - ५०००
द्वितीयमुद्रणम् - २०१२ - ३०००

मूल्यम् - रू. ३००/- (खण्डद्वयस्य कृते)

मुद्रणम् - Printech International,
Jhilmil Industrial Area,
Delhi-110095

ISBN - 978-81-87276-40-1

GEETAAPRAVESHAH (DVITEEYABHAAGAH) Part - 2
A text book to learn Samskrit through Bhagavadgeetaa written by various authors.
Publisher - Samskrita Bharati, Mata Mandir Gali, Jhandewala, New Delhi-110055.-(011)23517689.
Website - www.samskritabharati.in
Pages - IV +.....220 Second Print - 2012
Printed at - Printech International, B-36, DSIDC Complex, Jhilmil Industrial Area, Delhi-110095 Ph: 22596269,9868525848

# गीताप्रवेशः

## द्वितीयभागः

द्वितीयखण्डः

(५-१८ अध्यायाः)

**मार्गदर्शकसमितिः**

चमू कृष्णशास्त्री

जनार्दन हेगडे

**सम्पादकसमितिः**

डा. विश्वासः

डा. चान्दकिरण सलूजा

डा. विठ्ठल भावे

चारुहासिनी भावे

रा. गायत्री मुरलीकृष्णः

सो. ल. सीतारामशर्मा

**परिशोधकः**

डा. एन्. लक्ष्मीनारायणभट्टः

---

संस्कृतभारती

नवदेहली

# सङ्केताक्षरसूची

अ.= अकारान्तः
आ.= आकारान्तः
इ.= इकारान्तः
ई.= ईकारान्तः
उ.= उकारान्तः
ऊ.= ऊकारान्तः
औ.= औकारान्तः
ऋ.= ऋकारान्तः
च.= चकारान्तः
त.= तकारान्तः
द.= दकारान्तः
ध.= धकारान्तः
न.= नकारान्तः
प.= पकारान्तः
म.= मकारान्तः
ष.= षकारान्तः
स.= सकारान्तः
सर्व.= सर्वनाम

पुं.= पुंलिङ्गः
स्त्री.= स्त्रीलिङ्गः
नपुं.= नपुंसकलिङ्गः

प्र.= प्रथमाविभक्तिः
द्वि.= द्वितीयाविभक्तिः
तृ.= तृतीयाविभक्तिः
च.= चतुर्थीविभक्तिः
पं.= पञ्चमीविभक्तिः
ष.= षष्ठीविभक्तिः
स.= सप्तमीविभक्तिः
सम्बो.= सम्बोधनप्रथमाविभक्तिः

एक.= एकवचनम्
द्विव.= द्विवचनम्
बहु.= बहुवचनम्

आत्म.= आत्मनेपदी
पर.= परस्मैपदी

प्रपु.= प्रथमपुरुषः
मपु.= मध्यमपुरुषः
उपु.= उत्तमपुरुषः

लट्.= लट्लकारः
लिट्.= लिट्लकारः
लुट्.= लुट्लकारः
लृट्.= लृट्लकारः
लङ्.= लङ्लकारः
लृङ्.= लृङ्लकारः
वि.लिङ्.= विधिलिङ्लकारः
लुङ्.= लङ्लकारः

क्रियावि. = क्रियाविशेषणम्

## श्रीमद्भगवद्गीता

अथ पञ्चमोऽध्यायः

# कर्मसन्न्यासयोगः

**अर्जुन उवाच –** **सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥5.1॥**

**पदार्थः** – कृष्ण = हे कृष्ण ! कर्मणाम् = यज्ञादीनाम्, सन्न्यासम् = परित्यागम्, पुनः = भूयः, योगं च = तेषामेव परिग्रहम्, शंससि = ब्रवीषि, एतयोः = अनयोः, यत् श्रेयः = यत् हितम्, सुनिश्चितम् = निर्णीतम्, तत् = तत्, एकम् = एकमेव, मे ब्रूहि = मां वद ।

**अन्वयः** – कृष्ण ! कर्मणां सन्न्यासं पुनः योगं च शंससि । एतयोः यत् श्रेयः तत् सुनिश्चितम् एकं मे ब्रूहि ।

**तात्पर्यम्** – हे कृष्ण ! भवान् कर्मसन्न्यासं वदति, कर्मयोगमपि वदति । कर्मणां त्यागः, तेषां परिग्रहश्च विरुद्धत्वात् युगपत् सर्वथा न सम्भवति । तस्मात् श्रेष्ठत्वेन यत् भवता निश्चितं तत् मे कथयतु ।

**रामानुजीयमतम्** – सन्न्यासः = ज्ञानयोगः, योगः = कर्मयोगः ।

**प्रश्नाः** –

5.1.1. कृष्णः अर्जुनं प्रति केषां सन्न्यासं कथयति ? 5.1.2. कृष्णः अर्जुनं प्रति केषां योगं शंसति?
5.1.3. यत् श्रेयः तत् ब्रूहि इति कः कं प्रति वदति ? 5.1.4. कर्मणां सन्न्यासः इत्यस्य अर्थः कः ?
5.1.5. अत्र श्लोके सम्बोधनपदं किम् ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | पुनर्योगम् | – | पुनः + योगम् | विसर्गसन्धिः (रेफः) |
| | यच्छ्रेयः | – | यत् + श्रेयः | छत्वसन्धिः, श्चुत्वम् |
| | यच्छ्रेय एतयोः | – | यच्छ्रेयः + एतयोः | विसर्गसन्धिः (लोपः) |
| | एतयोरेकम् | – | एतयोः + एकम् | विसर्गसन्धिः (रेफः) |
| | तन्मे | – | तत् + मे | अनुनासिकसन्धिः |
| **(ख) कृदन्तः** | सुनिश्चितम् | – | सु + निस् + चि + क्त (कर्मणि) । | |

**श्रीभगवानुवाच –** **सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसन्न्यासात्कर्मयोगो विशिष्यते ॥5.2॥**

**पदार्थः** – सन्न्यासः = कर्मपरित्यागः, कर्मयोगः च = कर्मपरिग्रहः च, उभौ = द्वौ, निःश्रेयसकरौ = मोक्षप्रदौ, तयोः तु = किन्तु द्वयोः, कर्मसन्न्यासात् = कर्मपरित्यागात्, कर्मयोगः = कर्मपरिग्रहः, विशिष्यते = प्रशस्यते ।

**अन्वयः** – सन्न्यासः कर्मयोगः च उभौ निःश्रेयसकरौ । तयोः तु कर्मसन्न्यासात् कर्मयोगः विशिष्यते ।

---

**वि.सू.** – अस्मिन् अध्याये षष्ठे च अध्याये प्रतिश्लोकं केचन प्रश्नाः प्रदत्ताः सन्ति । श्लोकस्य अन्वयस्य तात्पर्यस्य च पठनेन एतेषां प्रश्नानाम् उत्तराणि स्वयमेव अवगन्तुं शक्यन्ते । प्रश्नान् पठत, उत्तराणि च वदत ।

**तात्पर्यम्** – कर्मसन्यासः कर्मयोगः च इति एतौ उभौ अपि मोक्षकारकौ। किन्तु कर्मसन्यासात् कर्मपरिग्रहः विशिष्यते।

**प्रश्नाः** –

5.2.1. कौ निःश्रेयसकरौ ?
5.2.2. कर्मसन्यासात् कः विशिष्यते ?
5.2.3. कयोः कर्मयोगः विशिष्यते ?
5.2.4. कर्मयोगः इत्यस्य अर्थः कः ?
5.2.5. कर्मयोगो विशिष्यते इति कः उवाच ?

**व्याकरणम्** –

**(क) सन्धिः** कर्मयोगश्च – कर्मयोगः + च विसर्गसन्धिः (सकारः) श्चुत्वम्
निःश्रेयसकरावुभौ – निःश्रेयसकरौ + उभौ यान्तवान्तादेशसन्धिः
तयोस्तु – तयोः + तु विसर्गसन्धिः (सकारः)
कर्मयोगो विशिष्यते – कर्मयोगः + विशिष्यते विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** कर्मयोगः – दृश्यताम् – 3.3
कर्मसन्यासः – कर्मणां सन्यासः – षष्ठीतत्पुरुषः।

**ज्ञेयः स नित्यसन्यासी यो न द्वेष्टि न काङ्क्षति।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥5.3॥**

**पदार्थः** – महाबाहो = हे अर्जुन ! यः = यः पुरुषः, न द्वेष्टि = न वैरं कुरुते, न काङ्क्षति = न इच्छति, सः = सः पुरुषः, नित्यसन्यासी = सततसन्यासी, ज्ञेयः = ज्ञातव्यः, निर्द्वन्द्वः = रागद्वेषशून्यः, बन्धात् = बन्धनात्, सुखम् = अनायासेन, प्रमुच्यते = मुक्तो भवति।

**अन्वयः** – महाबाहो ! यः न द्वेष्टि न काङ्क्षति सः नित्यसन्यासी ज्ञेयः। निर्द्वन्द्वः बन्धात् सुखं प्रमुच्यते।

**तात्पर्यम्** – हे अर्जुन ! यः अन्यान् न द्वेष्टि, किञ्चिदपि न काङ्क्षति सः कर्मयोगी नित्यसन्यासी इति ज्ञातव्यम्। रागद्वेषशून्यः सः सुखेन कर्मबन्धात् मुक्तो भवति।

**प्रश्नाः** –

5.3.1. नित्यसन्यासी कीदृशो भवति ?
5.3.2. यो न द्वेष्टि न काङ्क्षति सः कः ज्ञेयः ?
5.3.3. निर्द्वन्द्वः कस्मात् प्रमुच्यते ?
5.3.4. निर्द्वन्द्वः इत्यस्य कः अर्थः ?
5.3.5. निर्द्वन्द्वः कथं बन्धात् प्रमुच्यते ?

**व्याकरणम्** –

**(क) सन्धिः** स नित्यसन्यासी – सः + नित्यसन्यासी विसर्गसन्धिः (लोपः)
यो न – यः + न विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
निर्द्वन्द्वो हि – निर्द्वन्दः + हि विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** नित्यसन्यासी – नित्यं सन्यासी – सुप्समासः।
निर्द्वन्द्वः – दृश्यताम् – 2.45
महाबाहो – दृश्यताम् – 2.26

(ग) **तद्धितान्तः** सन्यासी - सन्यास + इनि (मतुबर्थे)। सन्यासः अस्य अस्मिन् वा अस्ति।

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥5.4॥**

**पदार्थः** - बालाः = मन्दाः, साङ्ख्ययोगौ = साङ्ख्यं च योगं च, पृथक् = भिन्नम्, प्रवदन्ति = कथयन्ति, पण्डिताः = ज्ञानिनः, न = न, एकम् = अन्यतरत्, आस्थितः = आश्रितः, अपि = अपि, सम्यक् = साधु, उभयोः = द्वयोः, फलम् = प्रयोजनम्, विन्दते = लभते।

**अन्वयः** - बालाः साङ्ख्ययोगौ पृथक् प्रवदन्ति, पण्डिताः न। एकम् अपि सम्यक् आस्थितः उभयोः फलं विन्दते।

**तात्पर्यम्** - कर्मसन्यासः कर्मयोगः च पृथक् इति ये वदन्ति ते नूनं बालाः। ज्ञानिनः कदापि तथा न वदन्ति। यतः तयोः एकतरस्य आचरणेन मानवः उभयोः अपि फलं प्राप्नोति।

**माध्वमतम्**-अज्ञानिनः ज्ञानयोगः कर्मयोगश्च पृथगिति मन्यन्ते। किन्तु ईषत्कर्मसहकृतेन भगवत्तत्त्वज्ञानेन, तत्त्वज्ञानपूर्वकेण कर्मानुष्ठानेन च मोक्षः लभ्यते। तदेवम् एकमपि सम्यगाचरन्ति चेत् उभयोः फलं विन्दते इति ज्ञानिनः मन्यन्ते।

**प्रश्नाः** -

5.4.1. बालाः किं वदन्ति ?
5.4.2. सांख्ययोगौ पृथक् न इति के वदन्ति ?
5.4.3. कम् आस्थितः उभयोः फलं विन्दते ?
5.4.4. एकं कथम् आस्थितः उभयोः फलं प्राप्नोति ?
5.4.5. सः कयोः उभयोः फलम् अवाप्नोति ?

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अप्यास्थितः | - अपि + आस्थितः | यणसन्धिः |
| | सम्यगुभयोर्विन्दते | - सम्यक् + उभयोः | जश्त्वसन्धिः |
| | | - सम्यगुभयोः + विन्दते | विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | साङ्ख्ययोगौ | - साङ्ख्यं च योगश्च - द्वन्द्वः। | |
| **(ग) कृदन्तः** | आस्थितः | - दृश्यताम् - 3.20 | |

**यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥5.5॥**

**पदार्थः** - यत् = यत्, स्थानम् = पदम्, साङ्ख्यैः = ज्ञानिभिः, प्राप्यते = लभ्यते, तत् = तत्, योगैः = कर्मयोगिभिः, अपि = अपि, गम्यते = लभ्यते, यः = यः पुरुषः, साङ्ख्यं च = ज्ञानमार्गं च, योगं च = योगमार्गं च, एकम् = समानफलम्, पश्यति = वीक्षते, सः पश्यति = स एव सम्यक् पश्यति।

**अन्वयः** - यत् स्थानं साङ्ख्यैः प्राप्यते तत् योगैः अपि गम्यते। यः साङ्ख्यं च योगं च एकं पश्यति सः पश्यति।

**तात्पर्यम्** - ज्ञाननिष्ठैः सन्यासिभिः यत् स्थानं प्राप्यते तदेव स्थानं कर्मयोगिभिः अपि प्राप्यते। यः ज्ञानयोगं कर्मयोगं च समानप्रयोजनं पश्यति सः एव सम्यक् पश्यति, नान्यः।

**रामानुजीयमतम्** - साङ्ख्याः= ज्ञाननिष्ठाः, योगाः = कर्मयोगनिष्ठाः।

**प्रश्नाः -**

5.5.1. सांख्यैः किं गम्यते ?
5.5.2. योगैरपि किं गम्यते ?
5.5.3. यः पश्यति सः सांख्यं योगं च कीदृशं पश्यति ?
5.5.4. सांख्यैः इत्यस्य अर्थः कः ?
5.5.5. अत्र द्वितीयस्य पश्यति शब्दस्य अर्थः कः ?

**व्याकरणम् -**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | तद्योगैरपि | - | तत् + योगैरपि | जश्त्वसन्धिः |
| | | - | योगैः + अपि | विसर्गसन्धिः (रेफः) |
| | स पश्यति | - | सः पश्यति | विसर्गसन्धिः (लोपः) |

**सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥5.6॥**

**पदार्थः** - महाबाहो = हे अर्जुन ! सन्न्यासः तु = ज्ञानयोगः तु, अयोगतः = कर्मयोगं विना, आप्तुम् = लब्धुम् दुःखम् = कष्टम्, योगयुक्तः = फलनिरपेक्षः कर्मयुक्तः, मुनिः = शान्तः पुरुषः, नचिरेण = शीघ्रम्, ब्रह्म = परामात्मानम् । अधिगच्छति = प्राप्नोति ।

**अन्वयः** - महाबाहो ! सन्न्यासः तु अयोगतः आप्तुं दुःखम् । योगयुक्तः मुनिः नचिरेण ब्रह्म अधिगच्छति ।

**तात्पर्यम्** - महाबाहो ! कर्मयोगात् ऋते ज्ञानयोगस्य प्राप्तिः दुश्शका एव । कर्मयोगी मुनिः तु शीघ्रं ब्रह्म अधिगच्छति ।

**प्रश्नाः -**

5.6.1. कः आप्तुं दुष्करः ?
5.6.2. संन्यासः कस्मात् ऋते न प्राप्तुं शक्यते ?
5.6.3. कः ब्रह्म अचिरेण अधिगच्छति ?
5.6.4. कीदृशो मुनिः अचिरेण ब्रह्म अवाप्नोति ?
5.6.5. योगयुक्तो मुनिः ब्रह्म कथं प्राप्नोति ?

**व्याकरणम् -**

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | सन्न्यासस्तु | - | सन्न्यासः + तु | विसर्गसन्धिः (सकारः) |
| | मुनिर्ब्रह्म | - | मुनिः + ब्रह्म | विसर्गसन्धिः (रेफः) |
| | योगयुक्तो मुनिर्ब्रह्म | - | योगयुक्तः + मुनिर्ब्रह्म | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | नचिरेणाधिगच्छति | - | नचिरेण +अधिगच्छति | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | योगयुक्तः | - | योगेन युक्तः - तृतीयातत्पुरुषः । | |
| | महाबाहो | - | दृश्यताम् - 1.18 | |
| **(ग) तद्धितान्तः** | अयोगतः | - | न योगः, तस्मात् - नञ्तत्पुरुषः । | |
| | अयोगतः | - | अयोग + तसि (स्वार्थे) कर्मयोगाभावात् इत्यर्थः । | |

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥5.7॥**

**पदार्थः** - योगयुक्तः = कर्माचरणयुक्तः, विशुद्धात्मा = विशुद्धचित्तः, विजितात्मा = स्वच्छशरीरः, जितेन्द्रियः =

इन्द्रियनिग्रहवान्, सर्वभूतात्मभूतात्मा = सम्यग्दर्शी, कुर्वन्नपि = आचरन् अपि, न लिप्यते = न बध्यते ।

**अन्वयः** – योगयुक्तः विशुद्धात्मा विजितात्मा जितेन्द्रियः सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ।

**तात्पर्यम्** – योगयुक्तः, विशुद्धचित्तः, स्वच्छशरीरः, जितेन्द्रियः, यथार्थदर्शी च पुरुषः कर्म कुर्वन्नपि तेन लिप्तः न भवति ।

**माध्वमतम्**– यः इन्द्रियाणि मनश्च संयम्य, तानि भगवति आधाय, तं सर्वोत्तमं स्वस्वामी इति मनुते तस्य कर्मजन्यलेपः नास्ति ।

**प्रश्नाः** –

5.7.1. कः कुर्वन्नपि न लिप्यते ? 5.7.2. सर्वभूतात्मभूतात्मा कीदृशो भवति ?

5.7.3. विशुद्धात्मा इत्यस्य अर्थः कः ? 5.7.4. केन युक्तः कर्म कुर्वन्नपि तल्लेपं न प्राप्नोति ?

5.7.5. विजितात्मा इत्यस्य अर्थः कः ?

**व्याकरणम्** –

**(क) सन्धिः** योगयुक्तो विशुद्धात्मा – योगयुक्तः + विशुद्धात्मा विसर्गसन्धिः (सकारः)रेफः,उकारः, गुणः

कुर्वन्नपि – कुर्वन् + अपि ङमुडागमसन्धिः

**(ख) समासः** योगयुक्तः – दृश्यताम् – 5.6

विशुद्धात्मा – विशुद्धः आत्मा यस्य सः – बहुव्रीहिः ।

विजितात्मा – विजितः आत्मा येन सः – बहुव्रीहिः ।

जितेन्द्रियः – जितानि इन्द्रियाणि येन सः – बहुव्रीहिः ।

सर्वभूतात्मभूतात्मा – सर्वाणि भूतानि – सर्वभूतानि – कर्मधारयः ।

सर्वभूतानाम् आत्मभूतः सर्वभूतात्मभूतः – षष्ठीतत्पुरुषः ।

सर्वभूतात्मभूतः आत्मा यस्य सः – बहुव्रीहिः ।

**(ग) कृदन्तः** भूतः – भू + क्त । (कर्तरि)

**नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥5.8॥**
**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥5.9॥**

**पदार्थः** – युक्तः = योगी, तत्त्ववित् = सम्यग्दर्शी, पश्यन् = अवलोकयन्, शृण्वन् = आकर्णयन्, स्पृशन् = स्पर्शं कुर्वन्, जिघ्रन् = गन्धं जानन्, अश्नन् = खादन्, गच्छन् = चरन्, स्वपन् = शयानः, श्वसन् = प्राणन्, प्रलपन् = वदन्, विसृजन् = मुञ्चन्, गृह्णन् = स्वीकुर्वन्, उन्मिषन् = उन्मीलन्, निमिषन् अपि = निमीलन् अपि, इन्द्रियाणि = नेत्रादीनि, इन्द्रियार्थेषु = विषयेषु, वर्तन्ते इति = प्रसरन्ति इति, धारयन् = निश्चयं कुर्वन् न एव किञ्चित् = न ईषत् अपि, करोमि इति = आचरामि इति, मन्येत = चिन्तयेत् ।

**अन्वयः** – युक्तः तत्त्ववित् पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् प्रलपन् विसृजन् गृह्णन्

उन्मिषन् निमिषन् अपि इन्द्रियाणि इन्द्रियार्थेषु वर्तन्ते इति धारयन् 'न एव किञ्चित् करोमि' इति मन्येत।

**तात्पर्यम्** - तत्त्ववित् ज्ञानी यः अस्ति सः पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन् अपि इन्द्रियाणि इन्द्रियविषयेषु वर्तन्ते इति मनसि भावनां धारयन् 'अहं न किञ्चित् करोमि' इति मन्यते।

**प्रश्नाः** -

5.8.1. किञ्चिदपि नैव करोमि इति कीदृशः तत्त्ववित् मन्यते ? 5.8.2. युक्तः तत्त्ववित् किं मन्यते ?

5.8.3. किञ्चिदपि अहं न करोमि इति कः जानाति ?

5.8/9.4. तत्त्ववित् किं किं कुर्वन्नपि 'अहं न करोमि' इति मन्यते ?

5.9.5. तत्त्ववित् इन्द्रियाणि कुत्र वर्तन्ते इति धारयति ?

**व्याकरणम्** -

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | नैव | - | न + एव | वृद्धिसन्धिः |
| | करोमीति | - | करोमि + इति | सवर्णदीर्घसन्धिः |
| | युक्तो मन्येत | - | युक्तः + मन्येत | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | पश्यञ्शृण्वन् | - | पश्यन् + शृण्वन् | श्चुत्वसन्धिः |
| | स्पृशञ्जिघ्रन् | - | स्पृशन् + जिघ्रन् | श्चुत्वसन्धिः |
| | जिघ्रन्नश्नन् | - | जिघ्रन् + अश्नन् | ङमुडागमसन्धिः |
| | स्वपञ्श्वसन् | - | स्वपन् + श्वसन् | श्चुत्वसन्धिः |
| | गृह्णन्नुन्मिषन् | - | गृह्णन् + उन्मिषन् | ङमुडागमसन्धिः |
| | निमिषन्नपि | - | निमिषन् + अपि | ङमुडागमसन्धिः |
| **(ख) समासः** | इन्द्रियार्थेषु | - | दृश्यताम् - 2.58 | |

| | | | | | | |
|---|---|---|---|---|---|---|
| **(ग) कृदन्तः** | पश्यन् | - दृशिर् + शतृ | (कर्तरि) | शृण्वन् | - श्रु + शतृ | (कर्तरि) |
| | स्पृशन् | - स्पृश् + शतृ | (कर्तरि) | जिघ्रन् | - घ्रा + शतृ | (कर्तरि) |
| | अश्नन् | - अश् + शतृ | (कर्तरि) | गच्छन् | - गम् + शतृ | (कर्तरि) |
| | स्वपन् | - स्वप् + शतृ | (कर्तरि) | श्वसन् | - श्वस् + शतृ | (कर्तरि) |
| | प्रलपन् | - प्र + लप् + शतृ | (कर्तरि) | विसृजन् | - वि + सृज् + शतृ | (कर्तरि) |
| | गृह्णन् | - ग्रह् + शतृ | (कर्तरि) | उन्मिषन् | - उत् + मिष् + शतृ | (कर्तरि) |
| | निमिषन् | - नि + मिष् + शतृ | (कर्तरि) | धारयन् | - धृ+णिच्(प्रेरणार्थे)शतृ | (कर्तरि) |

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥5.10॥**

**पदार्थः** - यः = यः पुरुषः, ब्रह्मणि = परमात्मनि, आधाय = निक्षिप्य, सङ्गम् = फलासक्तिम्, त्यक्त्वा = विसृज्य, कर्माणि = नियतकर्माणि, करोति = आचरति, सः = सः पुरुषः, अम्भसा = जलेन, पद्मपत्रम्

इव = कमलपर्णम् इव, पापेन = पापेन, न लिप्यते = न स्पृश्यते ।

**अन्वयः** – यः ब्रह्मणि आधाय सङ्गं त्यक्त्वा कर्माणि करोति सः अम्भसा पद्मपत्रम् इव पापेन न लिप्यते ।

**तात्पर्यम्** – यः पुरुषः सर्वाणि अपि कर्माणि ब्रह्मणे अर्पयित्वा सङ्गं त्यक्त्वा स्वाम्यर्थं भृत्यः इव कर्माणि आचरति सः पद्मपत्रं सरोवरे वर्तमानमपि जलेन यथा न लिप्यते तथा पापेन न लिप्यते ।

**रामानुजीयमतम्** – ब्रह्म = प्रकृतिः ।

**प्रश्नाः** –

5.10.1. कर्माणि कुत्र आधाय स्थितः पापेन न लिप्यते ? 5.10.2. कं त्यक्त्वा स्थितः पापेन न लिप्यते ?

5.10.3. पापेन पुरुषः केन किम् इव न लिप्यते ? 5.10.4. सङ्गः इत्यस्य कः अर्थः ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | स पापेन | – | सः + पापेन | विसर्गसन्धिः (लोपः) |
| | इवाम्भसा | – | इव + अम्भसा | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | पद्मपत्रम् | – | पद्मस्य पत्रम् – षष्ठीतत्पुरुषः | |
| **(ग) कृदन्तः** | आधाय | – | आ + धा + ल्यप् । | |
| | त्यक्त्वा | – | दृश्यताम् – 1.33 | |

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥5.11॥**

**पदार्थः** – योगिनः = कर्मयोगिनः, कायेन = शरीरेण, मनसा = चित्तेन, बुद्ध्या = मत्या, केवलैः = ईश्वरार्पणबुद्ध्या विधानेन ममताशून्यैः, इन्द्रियैः अपि = नेत्रादिभिः अपि, सङ्गम् = आसक्तिम्, त्यक्त्वा = विहाय, आत्मशुद्धये = चित्तशुद्धये, कर्म = कर्तव्यम्, कुर्वन्ति = आचरन्ति ।

**अन्वयः** – योगिनः कायेन मनसा बुद्ध्या केवलैः इन्द्रियैः अपि सङ्गं त्यक्त्वा आत्मशुद्धये कर्म कुर्वन्ति ।

**तात्पर्यम्** – योगिनः शरीरेण मनसा बुद्ध्या 'ईश्वराय एव कर्म करोमि, न मम फलाय' इति ममतां विना इन्द्रियैश्च कर्म आचरन्ति तेन तेषां चित्तं शुद्धं भवति ।

**प्रश्नाः** –

5.11.1. के कर्म कुर्वन्ति ? 5.11.2. योगिनः कं त्यक्त्वा कर्म कुर्वन्ति ?

5.11.3. योगिनः किमर्थं कर्म कुर्वन्ति ? 5.11.4. योगिनः केन केन कर्म कुर्वन्ति ?

5.11.5. योगिनः कीदृशैः इन्द्रियैः कर्म कुर्वन्ति ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | केवलैरिन्द्रियैरपि | – | कैवलैः + इन्द्रियैरपि | विसर्गसन्धिः (रेफः) |
| | | | इन्द्रियैः + अपि | विसर्गसन्धिः (रेफः) |
| | त्यक्त्वात्मशुद्धये | – | त्यक्त्वा + आत्मशुद्धये | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | आत्मशुद्धये | – | आत्मनः शुद्धिः, तस्यै – षष्ठीतत्पुरुषः । | |

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥5.12॥**

**पदार्थः** – युक्तः = समाहितः, कर्मफलम् = कर्मणां प्रयोजनम्, त्यक्त्वा = परित्यज्य, नैष्ठिकीं शान्तिम् = मोक्षम्, (निष्ठा = स्वाभाविकी स्थितिः, तत्सम्बन्धिनीं शान्तिम्) आप्नोति = विन्दते, अयुक्तः = असमाहितः, कामकारेण = इच्छावशात् प्रवृत्त्या, फले = प्रयोजने, सक्तः = सम्बद्धः, निबध्यते = बन्धं प्राप्नोति ।

**अन्वयः** – युक्तः कर्मफलं त्यक्वा नैष्ठिकीं शान्तिम् आप्नोति । अयुक्तः कामकारेण फले सक्तः निबध्यते ।

**तात्पर्यम्** – 'ईश्वराय कर्माणि करोमि, न फलाय' इति भावयन् समाहितः कर्मफलानि त्यक्त्वा मोक्षं प्राप्नोति । यस्तु फलाकाङ्क्षी कर्मसु प्रवर्तते सः बद्धो भवति ।

**प्रश्नाः** –

5.12.1. कः नैष्ठिकीं शान्तिमाप्नोति ?
5.12.2. युक्तः किं त्यक्त्वा नैष्ठिकीं शान्तिमाप्नोति ?
5.12.3. कः निबध्यते ?
5.12.4. पुरुषः केन फले सक्तो निबध्यते ?
5.12.5. नैष्ठिकी शान्तिः इत्यस्य कोऽर्थः ?

**व्याकरणम्** –

**(क) सन्धिः** सक्तो निबध्यते – सक्तः + निबध्यते विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः**
कर्मफलम् – दृश्यताम् – 4.14
अयुक्तः – दृश्यताम् – 2.61
कामकारेण – कामेन कारः, तेन – तृतीयातत्पुरुषः ।

**(ग) कृदन्तः**
युक्तः – दृश्यताम् – 2.39
त्यक्त्वा – दृश्यताम् – 1.33
सक्तः – दृश्यताम् – 3.7

**(घ) तद्धितान्तः** नैष्ठिकी – निष्ठा + ठक् (इयम् इत्यर्थे) + ङीप्(स्त्री प्रत्ययः)निष्ठासम्बन्धिनी ।

**सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥5.13॥**

**पदार्थः** – वशी = जितेन्द्रियः, देही = पुरुषः, नवद्वारे पुरे = नवद्वारसहिते शरीरे, सर्वकर्माणि = सर्वाणि कर्माणि, मनसा = चित्तेन, सन्न्यस्य = परित्यज्य, न एव कुर्वन् = किमपि अकुर्वन्, न कारयन् = किमपि अकारयन्, सुखम् = सुखेन, आस्ते = तिष्ठति ।

**अन्वयः** – वशी देही नवद्वारे पुरे सर्वकर्माणि मनसा सन्न्यस्य न एव कुर्वन् न कारयन् सुखम् आस्ते ।

**तात्पर्यम्** – यः जितेन्द्रियः अस्ति सः पुरुषः किमपि कर्म अकुर्वन् अकारयन् च नवद्वारयुते शरीररूपे नगरे सर्वाणि अपि कर्माणि मनसा परित्यज्य सुखेन तिष्ठति । परमात्मन्येव तिष्ठति इत्यर्थः ।

**प्रश्नाः** –

5.13.1. कः सुखम् आस्ते ?
5.13.2. देही कानि सन्न्यस्य सुखम् आस्ते ?
5.13.3. देही केन सर्वकर्माणि सन्न्यस्यति ?
5.13.4. देही सर्वकर्माणि सन्न्यस्य कथं तिष्ठति ?
5.13.5. देही कुत्र सुखं तिष्ठति ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | सन्न्यस्यास्ते | – | सन्न्यस्य + आस्ते | सवर्णदीर्घसन्धिः |
| | नैव | – | न + एव | वृद्धिसन्धिः |
| **(ख) समासः** | सर्वकर्माणि | – | दृश्यताम् – 3.26 | |
| | नवद्वारे | – | नव द्वाराणि यस्मिन् तत्, तस्मिन् – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | सन्न्यस्य | – | दृश्यताम् – 3.30 | |
| | कुर्वन् | – | दृश्यताम् – 4.21 | |
| | कारयन् | – | कृ + णिच् + शतृ (कर्तरि) । | |
| **(घ) तद्धितान्तः** | देही | – | दृश्यताम् – 2.13 | |

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥5.14॥**

**पदार्थः** – प्रभुः = परमात्मा, लोकस्य = जनस्य, कर्तृत्वम् = विधातृत्वम्, न सृजति = न करोति, कर्माणि = कर्तव्यानि, न = न करोति, कर्मफलसंयोगम् = कर्मप्रयोजनयोः सम्बन्धम्, न = न कुरुते, स्वभावः तु = अविद्या तु, प्रवर्तते = प्रचरति ।

**अन्वयः** – प्रभुः लोकस्य कर्तृत्वं न सृजति । कर्माणि न, कर्मफलसंयोगं न । स्वभावः तु प्रवर्तते ।

**तात्पर्यम्** – परमात्मा लोकस्य कर्तृत्वं न उत्पादयति । कर्माणि अपि न सृजति । कर्मफलसंयोगमपि न जनयति । अविद्यालक्षणा प्रकृतिः प्रवर्तते ।

**माध्वमतम्**– परमेश्वरः कर्मसु, तज्जन्यफलेषु वा जीवानां स्वातन्त्र्यं न ददाति । किन्तु स्वयमेव स्वातन्त्र्येण प्रवर्तते ।

**रामानुजीयमतम्** – प्रभुः = स्वाभाविकस्वरूपेण अवस्थितः आत्मा, लोकः = प्रकृतिसंसर्गेण वर्तमानः जनः ।

**प्रश्नाः** –

5.14.1. प्रभुः लोकस्य किं किं न सृजति ?
5.14.2. कः प्रवर्तते ?
5.14.3. प्रभुः कः ?
5.14.4. कस्य स्वभावः प्रवर्तते ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | स्वभावस्तु | – | स्वभावः + तु | विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | कर्मफलसंयोगः | – | कर्म च फलं च कर्मफले – द्वन्द्वः । | |
| | | | कर्मफलयोः संयोगः – षष्ठीतत्पुरुषः । | |
| | स्वभावः | – | स्वस्य भावः – षष्ठीतत्पुरुषः | |

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥5.15॥**

**पदार्थः** – विभुः = परमेश्वरः, कस्यचित् = कस्यचिदपि जीवस्य, पापम् = दुरितम्, न आदत्ते = न स्वीकरोति, सुकृतं च = पुण्यमपि, न एव = नैव स्वीकरोति, ज्ञानम् = ज्ञानम्, अज्ञानेन = अज्ञानेन, आवृतम् = आच्छन्नम्, तेन = तेन, जन्तवः = जीवाः, मुह्यन्ति = मोहं प्राप्नुवन्ति । (भ्राम्यन्ति)

**अन्वयः** – विभुः कस्यचित् पापं न आदत्ते । सुकृतं च एव न । ज्ञानम् अज्ञानेन आवृतम् । तेन जन्तवः मुह्यन्ति ।

**तात्पर्यम्** – परमात्मा कस्यापि जीवस्य पापं पुण्यं वा नैव गृह्णाति । अज्ञानेन ज्ञानम् आवृतं भवति । तेन सर्वेऽपि जन्तवः मोहम् उपगच्छन्ति ।

**रामानुजीयमतम्** – विभुः = न क्वाचित्कः, न कस्यचित् सम्बन्धी ।

**प्रश्नाः** –

5.15.1. विभुः किं किं नादत्ते ?
5.15.2. ज्ञानं केन आवृतम् ?
5.15.3. के मुह्यन्ति ?
5.15.4. जन्तवः किमर्थं मुह्यन्ति ?
5.15.5. अज्ञानेन आवृतं किम् ?

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | चैव | – च + एव | वृद्धिसन्धिः |
| | अज्ञानेनावृतम् | – अज्ञानेन + आवृतम् | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अज्ञानम् | – न ज्ञानम् – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | सुकृतम् | – सु + कृ + क्त । (नपुंसके भावे) | |
| | आवृतम् | – आ + वृ + क्त । (कर्मणि) | |

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥5.16॥**

**पदार्थः** – आत्मनः = भगवतः, ज्ञानेन = ज्ञानेन, येषाम् = येषां प्राणिनाम्, अज्ञानम् = अविद्या, नाशितम् = विनाशिता, तेषां तु = तेषां प्राणिनां तु, आदित्यवत् = सूर्यः इव, ज्ञानम् = आत्मज्ञानम्, तत् परम् = तत् परमतत्त्वम्, प्रकाशयति = विशदयति ।

**अन्वयः** – आत्मनः ज्ञानेन येषाम् अज्ञानम् नाशितं तेषां तु तत् ज्ञानम् आदित्यवत् परं प्रकाशयति ।

**तात्पर्यम्** – येषाम् अज्ञानम् आत्मनः ज्ञानेन नाशितं भवति तेषां तत् ज्ञानं सूर्यः यथा समस्तं रूपजातं प्रकाशयति तथा परमात्मार्थतत्त्वं प्रकाशयति ।

**माध्वमतम्**– शास्त्राध्ययनजन्येन भगवत्तत्त्वज्ञानेन येषाम् अज्ञानं नष्टं तेषां ज्ञानं परमात्मानं सूर्यवत् विषयीकरोति ।

**रामानुजीयमतम्** – परं ज्ञानम् इत्यन्वयः । अपरिमितम् असङ्कुचितं ज्ञानम् इत्यर्थः ।

**प्रश्नाः** –

5.16.1. किं परं (तत्त्वम्) प्रकाशयति ?
5.16.2. ज्ञानं किम् इव तत्त्वं प्रकाशयति ?
5.16.3. अज्ञानं केन नाशितं भवति ?
5.16.4. केषां ज्ञानं परतत्त्वं प्रकाशयति ?
5.16.5. परम् इत्यस्य कः अर्थः ?

**व्याकरणम्** –

**(क) सन्धिः** तदज्ञानम् – तत् + अज्ञानम् जश्त्वसन्धिः
आदित्यवज्ज्ञानम् – आदित्यवत् + ज्ञानम् श्चुत्वसन्धिः
**(ख) समासः** अज्ञानम् – दृश्यताम् – 5.15
**(ग) कृदन्तः** नाशितम् – नश् + णिच् + क्त। (कर्मणि)
**(घ) तद्धितान्तः** आदित्यवत् – आदित्य + वतुप् (तुल्यार्थे) आदित्यसदृशम् इत्यर्थः।

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥5.17॥**

**पदार्थः** – तद्बुद्धयः = परमात्मनिष्ठमतयः, तदात्मानः = परमात्मनिष्ठचित्ताः, तन्निष्ठाः = परमात्मनिष्ठस्थितयः तत्परायणाः = परमात्मैव परो मार्गः येषाम्, ज्ञाननिर्धूतकल्मषाः = आत्मज्ञानविनिर्गतपापाः, अपुनरावृत्तिम् = पुनः अनागमनम् (मोक्षम्), गच्छन्ति = लभन्ते।

**अन्वयः** – तद्बुद्धयः तदात्मानः तन्निष्ठाः तत्परायणाः ज्ञाननिर्धूतकल्मषाः अपुनरावृत्तिं गच्छन्ति।

**तात्पर्यम्** – येषां बुद्धिः परमात्मनि रमते, चित्तं तत्रैव विहरति, स्थितिः सर्वदा तत्रैव सम्भवति, प्राप्यं च तत्त्वं स एव भवति तादृशाः ज्ञानेन कल्मषं नाशयन्तः पुरुषाः यतः पुनरागमनं न भवति तादृशं मोक्षं प्राप्नुवन्ति।

**रामानुजीयमतम्** – अपुनरावृत्तिः = यदवस्थातः आत्मनः पुनरावृत्तिः न विद्यते स आत्मा अपुनरावृत्तिः।

**प्रश्नाः** –

5.17.1. ज्ञाननिर्धूतकल्मषाः कां गच्छन्ति ?
5.17.2. ज्ञाननिर्धूतकल्मषाः कीदृशाः भवन्ति ?
5.17.3. अपुनरावृत्तिः इत्यस्य कोऽर्थः ?
5.17.4. ज्ञाननिर्धूतकल्मषानां कुत्र बुद्धिः भवति ?
5.17.5. ज्ञाननिर्धूतकल्मषानां परम् अयनं किम् ?

**व्याकरणम्** –

**(क) सन्धिः** तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः
– तद्बुद्धयः + तदात्मानः विसर्गसन्धिः (सकारः)
– तदात्मानः + तन्निष्ठाः विसर्गसन्धिः (सकारः)
– तन्निष्ठाः + तत्परायणाः विसर्गसन्धिः (सकारः)
गच्छन्त्यपुनरावृत्तिम् – गच्छन्ति + अपुनरावृत्तिम् यणसन्धिः
**(ख) समासः** तद्बुद्धयः – तस्मिन् बुद्धिः येषां ते – बहुव्रीहिः।
तदात्मानः – तस्मिन् आत्मा येषां ते – बहुव्रीहिः।

तन्निष्ठाः – तस्मिन् निष्ठा येषां ते – बहुव्रीहिः ।
तत्परायणाः – परम् अयनम्, परायणम् – कर्मधारयः ।
तत् परायणं येषां ते – बहुव्रीहिः ।
ज्ञाननिर्धूतकल्मषाः – ज्ञानेन निर्धूतम् ज्ञाननिर्धूतम् – तृतीयातत्पुरुषः ।
– ज्ञाननिर्धूतं कल्मषं येषां ते – बहुव्रीहिः ।
अपुनरावृत्तिम् – न पुनरावृत्तिः, ताम् – नञ्तत्पुरुषः ।

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥5.18॥**

**पदार्थः** – पण्डिताः = ज्ञानिनः, विद्याविनयसम्पन्ने = विद्याविनयाभ्यां युक्ते, ब्राह्मणे = विप्रे, गवि = धेनौ, हस्तिनि = गजे, शुनि च एव = शुनके च, श्वपाके च = चण्डाले च, समदर्शिनः = समानदृष्टयः ।

**अन्वयः** – पण्डिताः विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि शुनि च एव श्वपाके च समदर्शिनः भवन्ति ।

**तात्पर्यम्** – पण्डिताः विद्याविनयसम्पन्ने ब्राह्मणे धेन्वां गजे कुक्कुरे चण्डाले च समदर्शिनः भवन्ति । एतेषु सर्वेषु अपि समानं ब्रह्म पश्यन्ति इत्यर्थः । (विद्या आत्मनो बोधः । विनयः विषयाणाम् उपशमः ।)

**माध्वमतम्** – ज्ञानिनः विद्याविनयसम्पन्ने ब्राह्मणे, गवि, गजे, शुनि, श्वपाके च विद्यमानानि भगवद्रूपाणि समानि पश्यन्ति । ब्राह्मणादिषु दोषसद्भावेऽपि तत्रस्थानि भगवद्रूपाणि निर्दुष्टानि गुणपूर्णानि विलसन्ति ।

**रामानुजीयमतम्** – विद्याविनयसम्पन्नः, ब्राह्मणः, गौः, हस्ती, श्वा, श्वपाकः – इति षट्स्वपि विषयेषु पण्डिताः = आत्मयाथार्थ्यविदः समदर्शिनः । ज्ञानैकाकारतया आत्मा तु सर्वत्र समः इति पश्यन्ति ।

**प्रश्नाः** –

5.18.1. के समदर्शिनः ?
5.18.2. ब्राह्मणः कीदृशो भवति ?
5.18.3. पण्डिताः केषु केषु समदृष्टयः भवन्ति ?

**व्याकरणम्** –

**(क) सन्धिः** चैव – च + एव वृद्धिसन्धिः ।
**(ख) समासः** विद्याविनयसम्पन्ने – विद्या च विनयश्च विद्याविनयौ – द्वन्द्वः ।
विद्याविनयाभ्यां सम्पन्नः, तस्मिन् – तृतीयातत्पुरुषः ।

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥5.19॥**

**पदार्थः** – येषाम् = ज्ञानिनाम्, साम्ये = गोब्राह्मणशुनकादौ समानतायाम्, मनः = चित्तम्, स्थितम् = स्थितम्, तैः = समदर्शिभिः, सर्गः = संसारः, इह एव = अस्मिन् भूलोके एव, जितः = विजितः, हि = यस्मात्, समम् = सर्वेषु अपि प्राणिषु समत्वेन स्थितम्, ब्रह्म = परवस्तु, निर्दोषम् = दोषरहितम्, तस्मात् = अतः, ते = ज्ञानिनः, ब्रह्मणि = परमात्मनि, स्थिताः = अवस्थिताः ।

**अन्वयः** – येषां साम्ये मनः स्थितं तैः सर्गः इह एव जितः । समं हि ब्रह्म निर्दोषम् । तस्मात् ते ब्रह्मणि स्थिताः ।

**तात्पर्यम्** – अयम् उच्चः अयं नीचः इति बुद्ध्यभावात् ये सर्वेषु अपि प्राणिषु समानाः भवन्ति ते जीवन्तः एव अस्मिन् लोके सर्वथा विनष्टसंसारबन्धाः सन्ति । इदं ब्रह्म निर्विकारं सर्वेषु प्राणिषु समानं च । तस्मात् ते तत्रैव सर्वदा भवितुम् इच्छन्ति ।

**माध्वमतम्** – येषां मनः परमात्मनः रूपेषु साम्यं चिन्तयति तैः जन्ममरणादिरूपः संसारः जितः । तस्मात् समदर्शिनः एव ब्रह्मज्ञानिनः इत्युच्यन्ते ।

**प्रश्नाः** –
5.19.1. कैः सर्गः जितः ?
5.19.2. तैः कुत्र एव सर्गः जितः ?
5.19.3. ते कुत्र स्थिताः ?
5.19.4. ब्रह्म कीदृशम् ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | इहैव | – | इह + एव | वृद्धिसन्धिः |
| | तैर्जितः | – | तैः + जितः | विसर्गसन्धिः (रेफः) |
| | सर्गो येषाम् | – | सर्गः + येषाम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | तस्माद्ब्रह्मणि | – | तस्मात् + ब्रह्मणि | जश्त्वसन्धिः |
| **(ख) कृदन्तः** | जितः | – | जि + क्त (कर्मणि) । | |
| | स्थितम् | – | दृश्यताम् – 1.14 | |
| **(ग) तद्धितान्तः** | साम्ये | – | सम + ष्यञ् । (भावे) समस्य भावः । समता इत्यर्थः । | |

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसम्मूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥5.20॥**

**पदार्थः** – ब्रह्मवित् = ब्रह्मज्ञानी, ब्रह्मणि = परमात्मनि, स्थितः = वर्तमानः, स्थिरबुद्धिः = निश्चलमनाः, असम्मूढः = व्यामोहरहितः, प्रियम् = इष्टम्, प्राप्य = लब्ध्वा, न प्रहृष्येत् = न सन्तुष्येत्, अप्रियम् = अनिष्टम्, प्राप्य च = लब्ध्वा अपि, न उद्विजेत् = न विषीदेत् ।

**अन्वयः** – ब्रह्मवित् ब्रह्मणि स्थितः स्थिरबुद्धिः असम्मूढः प्रियं प्राप्य न प्रहृष्येत् । अप्रियं प्राप्य च न उद्विजेत् ।

**तात्पर्यम्** – यः ब्रह्मवित् सर्वदा ब्रह्मणि एव स्थिरबुद्धिः सम्मोहवर्जितश्च भवति सः इष्टं प्राप्य न प्रहृष्यति । अनिष्टं च प्राप्य खेदं न याति ।

**प्रश्नाः** –

5.20.1. ब्रह्मवित् कुत्र स्थितो भवति ?
5.20.2. ब्रह्मवित् कीदृशो भवति ?
5.20.3. ब्रह्मवित् किं प्राप्य न प्रहृष्यति ?
5.20.4. ब्रह्मवित् किं प्राप्य न विषीदति ?
5.20.5. स्थिरबुद्धिः असम्मूढो ब्रह्मणि स्थितश्च कः ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | नोद्विजेत् | – | न + उद्विजेत् | गुणसन्धिः |
| | चाप्रियम् | – | च + अप्रियम् | सवर्णदीर्घसन्धिः |

स्थिरबुद्धिरसम्मूढः - स्थिरबुद्धिः + असम्मूढः विसर्गसन्धिः (रेफः)
ब्रह्मविद्ब्रह्मणि - ब्रह्मवित् + ब्रह्मणि जश्त्वसन्धिः
असम्मूढो ब्रह्मविद् - असम्मूढः + ब्रह्मविद् विसर्गसन्धिः (सकारः) रेफः,उकारः,गुणः

**(ख) समासः** अप्रियम् - न प्रियम् - नञ्तत्पुरुषः ।
स्थिरबुद्धिः - स्थिरा बुद्धिः यस्य सः - बहुव्रीहिः ।
असम्मूढः - न सम्मूढः - नञ्तत्पुरुषः ।
ब्रह्मवित् - ब्रह्म वेत्ति ब्रह्मवित् - कर्तरि क्विप् उपपदसमासश्च ।

**(ग) कृदन्तः** प्राप्य - दृश्यताम् - 2.57
स्थितः - दृश्यताम् - 1.14

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥5.21॥**

**पदार्थः** - बाह्यस्पर्शेषु = बाह्यविषयेषु, असक्तात्मा = असंलग्नचित्तः, आत्मनि = स्वस्मिन्, यत् सुखम् = यम् आनन्दम्, विन्दति = प्राप्नोति, सः = सः पुरुषः, ब्रह्मयोगयुक्तात्मा = ब्रह्मसमाधिचित्तः, अक्षयम् = अविनाशि, सुखम् = आनन्दम्, अश्नुते = अनुभवति ।

**अन्वयः** - बाह्यस्पर्शेषु असक्तात्मा आत्मनि यत् सुखं विन्दति सः ब्रह्मयोगयुक्तात्मा अक्षयं सुखम् अश्नुते ।

**तात्पर्यम्** - शब्दादिषु बाह्येषु इन्द्रियविषयेषु यः अनासक्तः भवति सः आत्मनि यत् प्राप्नोति ब्रह्मयोगेन युक्तान्तःकरणः सः तदेव सुखम् अक्षयं प्राप्नोति ।

**प्रश्नाः** -

5.21.1. कुत्र असक्तात्मा सुखं प्राप्नोति ? 5.21.2. ब्रह्मयोगयुक्तात्मा कीदृशं सुखम् अश्नुते?
5.21.3. अक्षयं सुखम् अश्नुते कः ? 5.21.4. बाह्यस्पर्शेषु कीदृशः आत्मनि सुखं विन्दति ?

**व्याकरणम्** -

**(क) सन्धिः** बाह्यस्पर्शेष्वसक्तात्मा - बाह्यस्पर्शेषु + असक्तात्मा यणसन्धिः
विन्दत्यात्मनि - विन्दति + आत्मनि यणसन्धिः
स ब्रह्मयोगयुक्तात्मा - सः + ब्रह्मयोगयुक्तात्मा विसर्गसन्धिः (लोपः)

**(ख) समासः** असक्तः - दृश्यताम् - 3.7
असक्तात्मा - असक्तः आत्मा यस्य सः - बहुव्रीहिः ।
बाह्यस्पर्शेषु - बाह्याः स्पर्शाः, तेषु - कर्मधारयः ।
ब्रह्मयोगयुक्तात्मा - ब्रह्मणो योगः ब्रह्मयोगः - षष्ठीतत्पुरुषः ।
- ब्रह्मयोगेन युक्तः ब्रह्मयोगयुक्तः - तृतीयातत्पुरुषः ।
- ब्रह्मयोगयुक्तः आत्मा यस्य सः - बहुव्रीहिः ।
अक्षयम् - न विद्यते क्षयः यस्य तत्, तत् - बहुव्रीहिः ।

**(ग) तद्धितान्तः** बाह्यः – बहिः + यञ् (भवार्थे)। बहिः भवः इत्यर्थः।

**ये हि संस्पर्शजा भोगाः दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥5.22॥**

**पदार्थः** – कौन्तेय = हे अर्जुन ! ये हि = यस्मात् अमी, संस्पर्शजाः = विषयजन्याः, भोगाः = आनन्दाः (सन्ति), ते = ते आनन्दाः, आद्यन्तवन्तः = उत्पत्तिविनाशसहिताः, दुःखयोनयः एव = विषादहेतवः एव, बुधः = पण्डितः, तेषु = भोगेषु, न रमते = न क्रीडति।

**अन्वयः** – कौन्तेय ! ये संस्पर्शजा भोगाः ते आद्यन्तवन्तः दुःखयोनयः एव हि। बुधः तेषु न रमते।

**तात्पर्यम्** – कौन्तेय ! विषयजन्याः सर्वेऽपि भोगाः परिमिताः दुःखजनकाश्च भवन्ति। तस्मात् विद्वान् तेषु भोगेषु न रमते।

**प्रश्नाः** –

5.22.1. संस्पर्शजाः भोगाः कीदृशाः ? 5.22.2. दुःखयोनयः के ?
5.22.3. बुधः केषु न रमते ? 5.22.4. आद्यन्तवन्तः इत्यस्य कः अर्थः ?
5.22.5. कृष्णः अर्जुनं केन शब्देन सम्बोधयति ?

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | संस्पर्शजा भोगाः | – | संस्पर्शजाः + भोगाः विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | संस्पर्शजाः | – | संस्पर्शात् जाताः – कर्तरि डप्रत्ययः उपपदसमासश्च। |
| | दुःखयोनयः | – | दुःखस्य योनयः – षष्ठीतत्पुरुषः। |
| | आद्यन्तौ | – | आदिश्च अन्तश्च – द्वन्द्वः। |
| **(ग) तद्धितान्तः** | आद्यन्तवन्तः | – | आद्यन्त + मतुप्। आद्यन्तौ एषाम् एषु वा स्तः। |

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥5.23॥**

**पदार्थः** – यः = यः पुरुषः, इह एव = अत्र एव, शरीरविमोक्षणात् = देहत्यागात्, प्राक् = पूर्वम्, कामक्रोधोद्भवम् = रागद्वेषजन्यम्, वेगम् = वेगसदृशं विकारम्, सोढुम् = जेतुम्, शक्नोति = समर्थो भवति, सः नरः = सः पुरुषः, युक्तः = योगी, सः (एव च) = सः पुरुषः एव च, सुखी = आनन्दी।

**अन्वयः** – यः इह एव शरीरविमोक्षणात् प्राक् कामक्रोधोद्भवं वेगं सोढुं शक्नोति सः नरः युक्तः, सः (एव च) सुखी।

**तात्पर्यम्** – यः इह जगति एव शरीरत्यागात् पूर्वं कामक्रोधोद्भवं वेगं सोढुं शक्नोति सः नरः योगी। सः एव च सुखी।

**प्रश्नाः** –

5.23.1. वेगः कीदृशः ? 5.23.2. तादृशं वेगं यः सोढुं शक्नोति सः कीदृशः ?
5.23.3. युक्तः कामक्रोधोद्भवं वेगं किं कर्तुं शक्नोति ? 5.23.4. सः तं वेगं कस्मात् पूर्वं सोढुं शक्नोति ?

व्याकरणम् –

(क) सन्धिः शक्नोतीहैव – शक्नोति + इह सवर्णदीर्घसन्धिः
– शक्नोतीह + एव वृद्धिसन्धिः
स युक्तः – सः + युक्तः विसर्गसन्धिः (लोपः)
स सुखी – सः सुखी विसर्गसन्धिः (लोपः)

(ख) समासः कामक्रोधोद्भवम् – कामश्च क्रोधश्च कामक्रोधौ – द्वन्द्वः ।
कामक्रोधाभ्याम् उद्भवः, तम् – पञ्चमीतत्पुरुषः ।

(ग) कृदन्तः सोढुम् – सह् + तुमुन् ।
विमोक्षणात् – वि + मोक्ष् + ल्युट्, (भावे) तस्मात् ।
युक्तः – दृश्यताम् – 2.39

(घ) तद्धितान्तः सुखी – सुख + इनि (मतुबर्थे) । सुखम् अस्य अस्मिन् वा अस्ति ।

**योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥24॥**

**पदार्थः** – यः = यः पुरुषः, अन्तःसुखः = आत्मनि एव सुखवान्, अन्तरारामः = आत्मनि एव रममाणः, तथा यः एव = एवं यः जनः, अन्तर्ज्योतिः = आत्मनि एव ज्ञानवान्, सः = सः जनः, ब्रह्मभूतः = ब्रह्मणा एकीभावं प्राप्तवान्, योगी = योगी, ब्रह्मनिर्वाणम् = ब्रह्मणि लयम् (मोक्षम्), अधिगच्छति = प्राप्नोति ।

**अन्वयः** – यः अन्तःसुखः अन्तरारामः तथा यः एव अन्तर्ज्योतिः सः योगी ब्रह्मभूतः ब्रह्मनिर्वाणम् अधिगच्छति।

**तात्पर्यम्** – यः आत्मन्येव सुखमनुभवति न विषयसम्बन्धि, यः आत्मन्येव विहरति, न तु विषयेषु, यः आत्मज्ञानेन ज्ञानवान् न विषयज्ञानेन तादृशः योगी ब्रह्माभिन्नः सन् ब्रह्मण्येव लयं गच्छति ।

**माध्वमतम्**– योगी स्वरूपभूतसुखं हृदये भगवद्दर्शनजन्यसुखमपि अनुभवति । एतादृशः योगी श्रवण–मननादिभिः वारं वारं हृदये भगवन्तं चिन्तयन् प्राकृतशरीररहितं परमात्मानं सेवते ।

**रामानुजीयमतम्** – ब्रह्मनिर्वाणम् = आत्मानुभवसुखम् ।

**प्रश्नाः** –

5.24.1. कः ब्रह्मनिर्वाणम् अधिगच्छति ?
5.24.2. योगी ब्रह्मनिर्वाणं कीदृशः सन् अधिगच्छति ?
5.24.3. योगी किम् अधिगच्छति ?
5.24.4. योगी कीदृशो भवति ?
5.24.5. ब्रह्मनिर्वाणम् इत्यस्य कः अर्थः ?

**व्याकरणम्** –

(क) सन्धिः योऽन्तःसुखोऽन्तरारामः – यः + अन्तःसुखः विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः, पूर्वरूपं च
– अन्तःसुखः + अन्तरारामः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च

| | | | |
|---|---|---|---|
| | अन्तरारामस्तथा | - अन्तरारामः + तथा | विसर्गसन्धिः (सकारः) |
| | तथान्तर्ज्योतिरेव | - तथा+ अन्तर्ज्योतिः | सवर्णदीर्घसन्धिः |
| | | - अन्तर्ज्योतिः + एव | विसर्गसन्धिः (रेफः) |
| | स योगी | - सः + योगी | विसर्गसन्धिः (लोपः) |
| | ब्रह्मभूतोऽधिगच्छति | - ब्रह्मभूतः + अधिगच्छति | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| **ख) समासः** | अन्तस्सुखः | - अन्तः एव सुखं यस्य सः - बहुव्रीहिः । | |
| | अन्तरारामः | - अन्तः एव आरामः (आक्रीडा) यस्य सः - बहुव्रीहिः । | |
| | अन्तर्ज्योतिः | - अन्तः एव ज्योतिः यस्य सः - बहुव्रीहिः । | |
| | ब्रह्मनिर्वाणम् | - ब्रह्मणि निर्वाणम्, तत् - सप्तमीतत्पुरुषः । | |
| | ब्रह्मभूतः | - ब्रह्म भूतः - द्वितीयातत्पुरुषः ॥ | |
| **(ग) कृदन्तः** | भूतः | - भू + क्त । (कर्तरि) | |
| **(घ) तद्धितान्तः** | योगी | - दृश्यताम् - 3.3 | |

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥5.25॥**

**पदार्थः** - क्षीणकल्मषाः = नष्टपापाः, छिन्नद्वैधाः = अपगतसंशयाः, यतात्मानः = जितेन्द्रियाः, सर्वभूतहिते = सर्वभूतसुखे, रताः = आसक्ताः, ऋषयः = मुनयः, ब्रह्मनिर्वाणम् = मोक्षम्, लभन्ते = प्राप्नुवन्ति ।

**अन्वयः** - क्षीणकल्मषाः छिन्नद्वैधाः यतात्मानः सर्वभूतहिते रताः ऋषयः ब्रह्मनिर्वाणं लभन्ते ।

**तात्पर्यम्** - येषां पापानि विनष्टानि सन्ति, संशयाः च विनष्टाः, चित्तं च नियन्त्रितम् अस्ति, ये सर्वभूतानां हिते रताः सन्ति ते ब्रह्मवेत्तारः ऋषयः मोक्षं प्राप्नुवन्ति ।

**माध्वमतम्**- ज्ञानिनः ज्ञानप्रतिबन्धकानि पापानि अतीत्य, श्रवणादिभिः भगवत्तत्त्वे दार्ढ्यं संपादयन्ति । अपि च लोकोपकारिणः सन्तः प्राकृतशरीररहितं परमात्मानं सेवन्ते ।

**प्रश्नाः** -

5.25.1. के ब्रह्मनिर्वाणं लभन्ते ?
5.25.2. क्षीणकल्मषाः के ?
5.25.3. ऋषयः कीदृशाः ?
5.25.4. छिन्नद्वैधा इत्यस्य कः अर्थः ?
5.25.5. ऋषयः किं लभन्ते ?

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | छिन्नद्वैधा यतात्मानः | - छिन्नद्वैधाः + यतात्मानः | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | ब्रह्मनिर्वाणम् | - दृश्यताम् - 2.72 | |
| | क्षीणकल्मषाः | - क्षीणानि कल्मषाणि येषां ते - बहुव्रीहिः । | |
| | छिन्नद्वैधाः | - छिन्नं द्वैधं यैः ते - बहुव्रीहिः । | |

यतात्मानः - यतः आत्मा यैः ते – बहुव्रीहिः ।
सर्वभूतहिते - सर्वाणि भूतानि – सर्वभूतानि – कर्मधारयः ।
सर्वभूतानां हितम्, तस्मिन् – षष्ठीतत्पुरुषः ।

**(ग) कृदन्तः** यतः - यम + क्त (कर्मणि) ।
हितः - धा (हि इति आदेशः) + क्त। (कर्तरि)
रतः - रम् + क्त (कर्तरि) ।

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥5.26॥**

**पदार्थः** – कामक्रोधवियुक्तानाम् = रागद्वेषरहितानाम्, यतचेतसाम् = नियतबुद्धीनाम्, विदितात्मनाम् = आत्मज्ञानाम्, यतीनाम् = सन्यासिनाम्, ब्रह्मनिर्वाणम् = मोक्षः, अभितः = सर्वतः, वर्तते = विद्यते ।

**अन्वयः** – कामक्रोधवियुक्तानां यतचेतसां विदितात्मनां यतीनां ब्रह्मनिवाणम् अभितः वर्तते ।

**तात्पर्यम्** – कामक्रोधाभ्यां वियुक्तानां संयतान्तःकरणानां विदितात्मनां सन्यासिनां जीवतां मृतानां चेति उभयतः अपि मोक्षः वर्तते ।

**माध्वमतम्** – कामक्रोधरहितानां, निगृहीतमनस्कानां ब्रह्मज्ञानिनां यतीनां सर्वत्र प्राकृतशरीररहितस्य परमात्मनः दर्शनं भवति ।

**प्रश्नाः** –

5.26.1. केषां ब्रह्मनिर्वाणं वर्तते ?
5.26.2. कीदृशानां यतीनां ब्रह्मनिर्वाणं वर्तते ?
5.26.3. यतयः काभ्यां वियुक्ताः भवन्ति ?
5.26.4. यतीनां ब्रह्मनिर्वाणं कुत्र भवति ?

**व्याकरणम्** –

**(क) सन्धिः** अभितो ब्रह्मनिर्वाणम् - अभितः + ब्रह्मनिर्वाणम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** कामक्रोधौ - दृश्यताम् – 5.23
कामक्रोधवियुक्तानाम् - कामक्रोधाभ्यां वियुक्ताः, तेषाम् – तृतीयातत्पुरुषः ।
यतचेतसाम् - यतं चेतः यैः ते, तेषाम् – बहुव्रीहिः ।
ब्रह्मनिर्वाणम् - दृश्यताम् – 2.72

**(ग) कृदन्तः** यतः - दृश्यताम् – 5.25

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥5.27॥**
**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥5.28॥**

**पदार्थः** – यः = यः मानवः, स्पर्शान् = शब्दादीन् विषयान्, बाह्यान् = बहिः वर्तमानान्, बहिः = बहिर्भागे,

चक्षुः च एव = नेत्रम् अपि, भ्रुवोः = भ्रुवोः, अन्तरे = मध्ये (कृत्वा), नासाभ्यन्तरचारिणौ = नासिकान्तर-सञ्चारिणौ, प्राणापानौ = प्राणापानवायू, समौ = तुल्यौ, कृत्वा = विधाय, यतेन्द्रियमनोबुद्धिः = वशीकृतेन्द्रियचित्तमतिः, मोक्षपरायणः = मोक्षरतः, विगतेच्छाभयक्रोधः = विनष्टरागद्वेषभयः, मुनिः = यतिः, सः = सः पुरुषः, सदा = सततम्, मुक्तः एव = विमुक्तः एव ।

**अन्वयः** – यः स्पर्शान् बाह्यान् बहिः चक्षुः च एव भ्रुवोः अन्तरे कृत्वा नासाभ्यन्तरचारिणौ प्राणापानौ समौ कृत्वा यतेन्द्रियमनोबुद्धिः मोक्षपरायणः विगतेच्छाभयक्रोधः मुनिः (वर्तते) सः सदा मुक्तः एव ।

**तात्पर्यम्** – यः सर्वान् अपि इन्द्रियार्थान् बहिरेव कृत्वा (तान् अविचिन्त्य), दृष्टिं भ्रुवोः मध्ये संस्थाप्य, नासिकायां संचरन्तौ प्राणापानौ समौ कृत्वा, इन्द्रियाणि मनः बुद्धिं च नियन्त्र्य मोक्षपरायणः भवति, यश्च इच्छाभयक्रोधादिरहितः अस्ति सः सदा मुक्तः एवेति निर्णयः ।

**प्रश्नाः** –

5.27.1. स्पर्शाः के ?
5.27.2. मुनिः स्पर्शान् कीदृशान् करोति ?
5.27.3. मुनेः चक्षुः कुत्र भवति ?
5.27.4. मुनिः कौ समौ करोति ?
5.27.5. प्राणापानौ कीदृशौ ?
5.28.6. विगतेच्छाभयक्रोधः कः ?
5.28.7. मुनिः कीदृशः भवति ?

**व्याकरणम्** –

**(क) सन्धिः** बहिर्बाह्यांश्चक्षुश्चैवान्तरे

| | |
|---|---|
| – बहिः + बाह्यान् | विसर्गसन्धिः (रेफः) |
| – बहिर्बाह्यान् + चक्षुः | सत्वसन्धिः रुत्वम्, विसर्गः, अनुस्वारः सकारः श्चुत्वं च |
| – बहिर्बाह्यांश्चक्षुः + च | विसर्गसन्धिः(सकारः) श्चुत्वम् |
| – बहिर्बाह्यांश्चक्षुश्च + एव | वृद्धिसन्धिः |
| – बहिर्बाह्यांश्चक्षुश्चैव + अन्तरे | सवर्णदीर्घसन्धिः |

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः

| | |
|---|---|
| – यतेन्द्रियमनोबुद्धिः + मुनिः | विसर्गसन्धिः (रेफः) |
| – ....बुद्धिर्मुनिः + मोक्षपरायणः | विसर्गसन्धिः (रेफः) |

विगतेच्छाभयक्रोधो यः – विगतेच्छाभयक्रोधः + यः विसर्गसन्धिः(सकारः) रेफः,उकारः, गुणः

**(ख) समासः** प्राणापानौ – प्राणश्च अपानश्च – द्वन्द्वः ।

नासाभ्यन्तरचारिणौ – नासायाः अभ्यन्तरम् – नासाभ्यन्तरम् – षष्ठीतत्पुरुषः ।
– नासाभ्यन्तरे चरतः तच्छीलौ – ताच्छीलिके कर्तरि णिनिः उपपदसमासश्च ।

यतेन्द्रियमनोबुद्धिः – इन्द्रियाणि च मनश्च बुद्धिश्च इन्द्रियमनोबुद्धयः – द्वन्द्वः ।

| | | |
|---|---|---|
| | | - यताः इन्द्रियमनोबुद्धयः येन सः - बहुव्रीहिः । |
| | मोक्षपरायणः | - मोक्षः परायणं यस्य सः - बहुव्रीहिः । |
| | विगतेच्छाभयक्रोधः | - इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः - द्वन्द्वः । |
| | | - विगताः इच्छाभयकोधाः यस्मात् सः - बहुव्रीहिः । |
| **(ग) कृदन्तः** | स्पर्शान् | - दृश्यताम् - 2.14 |
| | विगतः | - दृश्यताम् - 2.56 |
| | मुक्तः | - मुच् + क्त (कर्मणि) |

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।।5.29।।**

**पदार्थः** - यज्ञतपसाम् = यज्ञानां तपसां च, भोक्तारम् = पालकम्, सर्वलोकमहेश्वरम् = सकलभुवननाथम्, सर्वभूतानाम् = सकलप्राणिनाम्, सुहृदम् = मित्रम्, माम् = माम्, ज्ञात्वा = विदित्वा, शान्तिम् = मोक्षम्, ऋच्छति = विन्दति ।

**अन्वयः** - यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं मां ज्ञात्वा शान्तिम् ऋच्छति ।

**तात्पर्यम्** - सोऽयं मुनिः भगवन्तं मां यज्ञतपसां पालकम्, सर्वलोकानां महेश्वरम्, सर्वभूतानां मित्रं च ज्ञात्वा मोक्षं प्राप्नोति।

**रामानुजीयमतम्** - सर्वलोकमहेश्वरः = श्रीकृष्णः परमात्मा । टिप्पणी - अन्यत्र महेश्वरः देहमात्रपरमात्मा जीवः, यथा - भर्ता भोक्ता महेश्वरः इत्यत्र ।

**प्रश्नाः** -

5.29.1. यज्ञतपसां भोक्ता कः ? 5.29.2. कृष्णः केषाम् सुहृत् ?
5.29.3. कृष्णः केषां भोक्ता ? 5.29.4. कृष्णः केषां महेश्वरः ?
5.29.5. कृष्णं ज्ञात्वा किम् ऋच्छति ?

**व्याकरणम्** -

| | | |
|---|---|---|
| **(ख) समासः** | यज्ञतपसाम् | - यज्ञाश्च तपांसि च, तेषाम् - द्वन्द्वः । |
| | सर्वलोकमहेश्वरम् | - सर्वे लोकाः, सर्वलोकाः - कर्मधारयः । |
| | | - महान् ईश्वरः महेश्वरः - कर्मधारयः । |
| | | - सर्वलोकानां महेश्वरः, तम् - षष्ठीतत्पुरुषः । |
| | सर्वभूतानाम् | - सर्वाणि भूतानि, तेषाम् - कर्मधारयः । |
| **(ग) कृदन्तः** | भोक्ता | - भुज् + तृच् । (कर्तरि) |

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मसन्न्यासयोगो नाम पञ्चमोऽध्यायः ।

श्रीमद्भगवद्गीता

अथ षष्ठोऽध्यायः

## ध्यानयोगः

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स सन्यासी च योगी च न निरग्निर्न चाक्रियः ॥6.1॥**

**पदार्थः** – यः = यः पुरुषः, कर्मफलम् = कर्मणः प्रयोजनम्, अनाश्रितः = अनालम्बमानः, कार्यम् = कर्तव्यम् कर्म = कृत्यम्, करोति = आचरति, सः = सः पुरुषः, सन्यासी च = यतिः च, योगी च = युक्तः च, निरग्निः न = अग्निसाध्यश्रौतकर्मपरित्यागी न भवति, अक्रियः च = अग्निनिरपेक्षस्मार्तकर्मपरित्यागी अपि, न = न भवति ।

**अन्वयः** – यः कर्मफलम् अनाश्रितः कार्यं कर्म करोति सः सन्यासी च योगी च (भवति) । निरग्निः न, अक्रियः च न भवति ।

**तात्पर्यम्** – यः कर्मफलम् अनपेक्षमाणः कर्म करोति सः सन्यासी इति उच्यते । सः एव योगी अपि । अग्नित्यागमात्रेण कोऽपि जनः सन्यासी न भवति । कर्मत्यागमात्रेण कोऽपि जनः योगी अपि न भवति । (अग्निरक्षणं गृहस्थस्य धर्मः । सन्यासाश्रमस्वीकारावसरे अग्नित्यागः क्रियते ।)

**प्रश्नाः** –

6.1.1. कः सन्यासी, योगी च ?
6.1.2. सन्यासी किम् अनाश्रितः कर्म करोति ?
6.1.3. निरग्निः कः न भवति ?
6.1.4. अक्रियः कः न भवति ?
6.1.5. निरग्निः इत्यस्य अर्थः कः ?
6.1.6. अक्रियः इत्यस्य अर्थः कः ?

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | स सन्यासी | – सः + सन्यासी | विसर्गसन्धिः (लोपः) |
| | निरग्निर्न | – निरग्निः + न | विसर्गसन्धिः (रेफः) |
| | चाक्रियः | – च + अक्रियः | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अनाश्रितः | – न आश्रितः – नञ्तत्पुरुषः । | |
| | अक्रियः | – न विद्यते क्रिया यस्य सः – बहुव्रीहिः । | |
| | कर्मफलम् | – दृश्यताम् – 4.14 | |
| | निरग्निः | – निर्गताः अग्नयः यस्मात् सः – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | आश्रितः | – आ + श्रि + क्त (कर्तरि) । | |
| **(घ) तद्धितान्तः** | योगी | – दृश्यताम् – 3.3 | |

**यं सन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥6.2॥**

**पदार्थः** – पाण्डव = हे अर्जुन, यम् = यम्, संन्यासम् इति = कर्मसन्न्यास इति, प्राहुः = कथयन्ति, तम् = तम्, योगम् = कर्मयोगम्, विद्धि = जानीहि, हि = यस्मात्, असन्न्यस्तसङ्कल्पः = अभिलाषम् अपरित्यजन्, कश्चन = कोऽपि योगी = कर्मयोगी, न भवति = न भवति ।

**अन्वयः** – पाण्डव ! यं सन्यासम् इति प्राहुः तं योगं विद्धि । असंन्यस्तसङ्कल्पः हि कश्चन योगी न भवति ।

**तात्पर्यम्** – श्रुतिस्मृतिविदः यं सन्यास इति वदन्ति तमेव कर्मयोगं मन्यस्व । कुतः ? यस्मिन् कर्मसन्न्यासो वर्तते तस्मिन् कर्मफलविषयकः अभिलाषो न भवति, तथा यस्मिन् कर्मयोगो वर्तते तस्मिन्नपि स कर्मफलविषयकः अभिलाषो न वर्तते । एवं कर्मफलविषयकाभिलाषत्यागस्य उभयत्र सद्भावात् तयोः सादृश्यमिति तौ उभौ एक एव न अनेकः ।

**प्रश्नाः** –

6.2.1. यः सन्यासः सः कस्मात् अभिन्नः ? 6.2.2. श्लोके अर्जुनस्य केन शब्देन सम्बोधनम् ?

6.2.3. योगी कीदृशो न भवति ? 6.2.4. कर्मसन्न्यासिनि कर्मयोगिनि च कः न वर्तते ?

**व्याकरणम्** –

**(क) सन्धिः** प्राहुर्योगम् – प्राहुः + योगम् विसर्गसन्धिः (रेफः)

ह्यसन्न्यस्तसङ्कल्पो योगी – हि + असन्न्यस्तसङ्कल्पः यण्सन्धिः

ह्यसन्न्यस्तसङ्कल्पः + योगी विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** असन्न्यस्तसङ्कल्पः – सन्न्यस्तः सङ्कल्पः येन सः सन्न्यस्तसङ्कल्पः – बहुव्रीहिः ।

– न सन्न्यस्तसङ्कल्पः – नञ्बहुव्रीहिः ।

**(ग) कृदन्तः** सन्न्यस्तः – दृश्यताम् – 4.41

**(घ) तद्धितान्तः** पाण्डव – दृश्यताम् – 1.14

योगी – दृश्यताम् – 3.3

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥6.3॥**

**पदार्थः** – योगम् = ज्ञानयोगम्, आरुरुक्षोः = आरोढुमिच्छतः, मुनेः = मुनीभविष्यतः गृहस्थस्य, कर्म = कर्माचरणम्, कारणम् = साधनम्, उच्यते = कथ्यते, योगारूढस्य = ज्ञानयोगम् आरूढस्य, तस्य एव = मुनीभूतस्य तस्यैव, शमः = उपशमः, कारणम् = ज्ञानपरिपाके साधनम्, उच्यते = निगद्यते ।

**अन्वयः** – योगम् आरुरुक्षोः मुनेः कर्म कारणम् उच्यते । योगारूढस्य तस्य एव (कर्मसन्न्यासे) शमः कारणम् उच्यते ।

**तात्पर्यम्** – समत्वबुद्धिरूपं योगं यः आरोढुम् इच्छति तस्य निष्कामबुद्ध्या कर्माचरणं तत्र कारणं भवति । यदा तादृशं योगम् आरूढः तदा तु ज्ञानपरिपाके शमः कारणं भवति ।

**माध्वमतम्** – यः अपरोक्षज्ञानं काङ्क्षति तस्य निष्कामकर्मानुष्ठानम् अपरोक्षज्ञानप्राप्तये साधनं भवति । यस्य अपरोक्षज्ञानं वर्तते तस्य ध्यानप्रवचनादि कर्मानुष्ठानं मोक्षे आनन्दसाधनं भवति ।

**प्रश्नाः** –

6.3.1. कम् आरुरुक्षोः मुनेः कर्म कारणम् ?
6.3.2. योगमारुरुक्षोः मुनेः किं कारणम् ?
6.3.3. कीदृशस्य मुनेः शमः कारणम् ?
6.3.4. योगारूढस्य मुनेः कः कारणम् ?
6.3.5. कर्म कारणं कीदृशस्य मुनेः ?
6.3.6. सर्वकर्मसन्न्यासे शमः कारणं कस्य ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | आरुरुक्षोर्मुनेर्योगम् | – | आरुरुक्षोः + मुनेः | विसर्गसन्धिः (रेफः) |
| | | | आरुरुक्षोर्मुनेः + योगम् | विसर्गसन्धिः (रेफः) |
| | तस्यैव | – | तस्य + एव | वृद्धिसन्धिः |
| **(ख) समासः** | योगारूढस्य | – | योगम् आरुढः, तस्य – द्वितीयातत्पुरुषः । | |
| **(ग) कृदन्तः** | आरुरुक्षोः | – | आ + रुह् + सन् (इच्छायाम्) + उ,(कर्तरि) तस्य । | |

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते ॥6.4॥**

**पदार्थः** – यदा हि = यस्मिन् समये, इन्द्रियार्थेषु = शब्दादिषु विषयेषु, न अनुषज्जते = न सक्तो भवति, कर्मसु = कर्माचरणेषु अपि, न (अनुषज्जते) = न सक्तो भवति, तदा = तस्मिन् समये, सर्वसङ्कल्पसन्न्यासी = सर्वेषाम् इन्द्रियविषयाणां तत्साधनानां च श्रवणादिक्रियाणां परित्यक्ता, योगारूढः = ज्ञानयोगम् आरूढः, उच्यते = वर्ण्यते ।

**अन्वयः** – यदा हि इन्द्रियार्थेषु न अनुषज्जते, कर्मसु (अपि) न तदा सर्वसङ्कल्पसन्न्यासी योगारूढः उच्यते ।

**तात्पर्यम्** – यदा पुरुषः इन्द्रियार्थेषु रूपरसगन्धादिषु तत्साधनेषु दर्शनास्वादनघ्राणादिषु कर्मसु च आसक्तो न भवति तदा तस्य तेषु विषयेषु तत्साधनेषु च कर्मसु इच्छैव न भवति । तदानीं सः ज्ञानयोगम् आरूढः अर्थात् ज्ञानवान् इति उच्यते ।

**प्रश्नाः** –

6.4.1. कः योगारूढः उच्यते ?
6.4.2. सर्वसङ्कल्पसन्न्यासी कीदृशः उच्यते ?
6.4.3. सर्वसङ्कल्पसन्न्यासी इत्यस्य कः अर्थः ?
6.4.4. योगारूढः इत्यस्य कः अभिप्रायः ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | नेन्द्रियार्थेषु | – | न + इन्द्रियार्थेषु | गुणसन्धिः |
| | कर्मस्वनुषज्जते | – | कर्मसु + अनुषज्जते | यण्सन्धिः |
| | योगारूढस्तदोच्यते | – | योगारूढः + तदा | विसर्गसन्धिः (सकारः) |
| | | | योगारूढस्तदा + उच्यते | गुणसन्धिः । |
| **(ख) समासः** | इन्द्रियार्थेषु | – | दृश्यताम् – 2.58 | |
| | योगारूढः | – | दृश्यताम् – 6.3 | |
| | सर्वसङ्कल्पसन्न्यासी | – | सर्वे च सङ्कल्पाश्च सर्वसङ्कल्पाः – कर्मधारयः । | |
| | | | सर्वसङ्कल्पानां सन्न्यासी – षष्ठीतत्पुरुषः । | |

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥6.5॥**

**पदार्थः** – आत्मानम् = स्वम्, आत्मना = विषयसङ्गरहितेन मनसा, उद्धरेत् = उन्नयेत्, आत्मानम् = स्वम्, न अवसादयेत् = न नाशयेत्, आत्मा एव = मनः एव, आत्मनः = स्वस्य, बन्धुः = बान्धवः, आत्मा एव = विषयसङ्गविशिष्टं मनः एव, आत्मनः = स्वस्य, रिपुः = शत्रुः ।

**अन्वयः** –आत्मानम् आत्मना उद्धरेत् । आत्मानं न अवसादयेत् । आत्मा एव हि आत्मनः बन्धुः । आत्मा एव आत्मनः रिपुः ।

**तात्पर्यम्** – संसारसागरे निमग्नम् आत्मानं विषयसङ्गरहितेन मनसा उद्धारयेत् न तु कदापि विषयसङ्गविशिष्टेन संसारसागरे पुनः निमज्जयेत् । कुतः? विषयसङ्गरहितं मनः आत्मनः पोषकम् । तत्सङ्गसहितं तु मनः आत्मनो मारकम् ।

**प्रश्नाः** –

6.5.1. आत्मानं किं कुर्यात् ?
6.5.2. आत्मानं केन उद्धरेत् ?
6.5.3. आत्मानं किं न कुर्यात् ?
6.5.4. आत्मनो बन्धुः कः ?
6.5.5. आत्मनो रिपुः कः ?
6.5.6. आत्मा इत्यस्यार्थः कः ?

**व्याकरणम्** –

| **(क) सन्धिः** | | | |
|---|---|---|---|
| | उद्धरेदात्मनात्मानम् | – उद्धरेत् + आत्मना | जश्त्वसन्धिः |
| | | – उद्धरेदात्मना + आत्मानम् | सवर्णदीर्घसन्धिः |
| | नात्मानम् | – न + आत्मानम् | सवर्णदीर्घसन्धिः |
| | आत्मैव | – आत्मा + एव | वृद्धिसन्धिः |
| | ह्यात्मनो बन्धुरात्मैव | – हि + आत्मनः | यणसन्धिः |
| | | ह्यात्मनः + बन्धुः | विसर्गसन्धिः(सकारः) रेफः, उकारः, गुणः |
| | | बन्धुः + आत्मा | विसर्गसन्धिः (रेफः) |
| | | बन्धुरात्मा + एव | वृद्धिसन्धिः |
| | रिपुरात्मनः | – रिपुः + आत्मनः | विसर्गसन्धिः (रेफः) |

**बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥6.6॥**

**पदार्थः** – येन = येन पुरुषेण, आत्मना = स्वेन, आत्मा एव = मनः एव, जितः = विषयेभ्यः निवर्तितम्, तस्य = तादृशस्य पुरुषस्य, आत्मा = मनः, आत्मनः = स्वस्य, बन्धुः = हितः, अनात्मनः तु = अवशीकृतमनस्कस्य तु, आत्मा एव = मनः एव, शत्रुवत् = शत्रुवत्, शत्रुत्वे = अपकरणे, वर्तेत = स्यात् ।

**अन्वयः** – येन आत्मना आत्मा एव जितः तस्य आत्मनः आत्मा बन्धुः । अनात्मनः तु आत्मा एव शत्रुवत् शत्रुत्वे वर्तेत ।

**तात्पर्यम्** – येन पुरुषेण मनः विषयेभ्यः विमुखीकृतं तस्य मनः बन्धुवत् हितकारि। यस्तु तादृशो न भवति तस्य तदेव मनः शत्रुवत् पीडाकारि। विषयासक्तं मनः बन्धकम्, तद्रहितं तु मोचकमिति यावत्।

**प्रश्नाः** –

6.6.1. कस्य आत्मा बन्धुः ? 6.6.2. येन आत्मना आत्मा जितः तस्य कः बन्धुः ?
6.6.3. अनात्मनः शत्रुत्वे कः वर्तते ? 6.6.4. कस्य शत्रुत्वे आत्मा भवति ?
6.6.5. अत्र आत्मा इत्यस्य कः अर्थः ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | बन्धुरात्मात्मनस्तस्य | – | बन्धुः + आत्मा, बन्धुरात्मा | विसर्गसन्धिः (रेफः) |
| | | | बन्धुरात्मा + आत्मनः, बन्धुरात्मात्मनः | सवर्णदीर्घसन्धिः |
| | | | बन्धुरात्मात्मनः + तस्य | विसर्गसन्धिः (सकारः) |
| | येनात्मैवात्मना | – | येन + आत्मा, येनात्मा | सवर्णदीर्घसन्धिः |
| | | | येनात्मा + एव, येनात्मैव | वृद्धिसन्धिः |
| | | | येनात्मैव + आत्मना | सवर्णदीर्घसन्धिः |
| | अनात्मनस्तु | – | अनात्मनः + तु | विसर्गसन्धिः (सकारः) |
| | वर्तेतात्मैव | – | वर्तेत + आत्मा वर्तेतात्मा | सवर्णदीर्घसन्धिः |
| | | | वर्तेतात्मा + एव | वृद्धिसन्धिः |
| **(ख) समासः** | अनात्मनः | – | न विद्यते आत्मा यस्य सः, तस्य – नञ्बहुव्रीहिः। | |

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥6.7॥**

**पदार्थः** - शीतोष्णसुखदुःखेषु = शीते उष्णे सुखे दुःखे च सति, तथा = एवम्, मानापमानयोः = सम्मानापमानयोः सतोः, प्रशान्तस्य = रागद्वेषशून्यस्य, जितात्मनः = वशीकृतचित्तस्य, परमात्मा = परमात्मा, समाहितः = समाधेः विषयो भवति।

**अन्वयः** – शीतोष्णसुखदुःखेषु तथा मानापमानयोः प्रशान्तस्य जितात्मनः परमात्मा समाहितः।

**तात्पर्यम्** – यः जितमनस्कः भवति, रागद्वेषशून्यश्च भवति तस्य परमात्मा समाधेः विषयो भवति। सः शीतोष्णयोः सुखदुःखयोः, मानापमानयोश्च समानः भवति।

**रामानुजीयमतम्** – परमात्मा = प्रत्यगात्मा, पूर्वपूर्वावस्थापेक्षया तस्यापि परमात्मत्वात्।

**प्रश्नाः** –

6.7.1. कः समाहितो भवति ? 6.7.2. कस्य परमात्मा समाहितो भवति ?
6.7.3. जितात्मनः प्रशान्तस्य च परमात्मा कीदृशो भवति ? 6.7.4. केषु सत्सु परमात्मा समाहितः भवति ?

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) समासः** | जितात्मनः | – जितः आत्मा येन सः, तस्य – बहुव्रीहिः। |
| | परमात्मा | – परमः आत्मा – कर्मधारयः |

शीतोष्णसुखदुःखेषु – शीतं च उष्णं च सुखं च दुःखं च, तेषु – द्वन्द्वः ।
मानापमानयोः – मानश्च अपमानश्च, तयोः – द्वन्द्वः ।

**(ग) कृदन्तः** प्रशान्तस्य – प्र + शम् + क्त (कर्तरि) ।
समाहितः – सम् + आ + धा (हि आदेशः) + क्त । (कर्तरि)

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥6.8॥**

**पदार्थः** – ज्ञानविज्ञानतृप्तात्मा = ज्ञानानुभवसन्तुष्टचित्तः, कूटस्थः = निर्विकारः, समलोष्टाश्मकाञ्चनः = मृत्पाषाणसुवर्णेषु समानबुद्धिः, विजितेन्द्रियः = वशीकृतेन्द्रियः, युक्तः = समाहितचित्तः, योगी इति = योगी इति, उच्यते = अभिधीयते ।

**अन्वयः** – ज्ञानविज्ञानतृप्तात्मा कूटस्थः समलोष्टाश्मकाञ्चनः विजितेन्द्रियः युक्तः योगी इति उच्यते ।

**तात्पर्यम्** – गुरुणा उपदिष्टस्य ज्ञानेन प्रत्यक्षानुभवेन च यस्य चित्तं प्रसन्नं वर्तते यश्च निर्विकारः यश्च इन्द्रियाणां वशीकर्ता वर्तते, यस्य च मृत्पिण्डे पाषणे सुवर्णे च समानताबुद्धिः सञ्जाता, तादृशः समाधौ मग्नः योगी इति कथ्यते । (ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम् । विज्ञानं शास्त्रतो ज्ञातानां तथा एव स्वानुभवविषयीकरणम् ।)

**प्रश्नाः** –

6.8.1. योगिनः आत्मा काभ्यां तृप्तो वर्तते ?
6.8.2. समलोष्टाश्मकाञ्चनः कः ?
6.8.3. योगी कीदृशो भवति ?
6.8.4. युक्तः इति कः उच्यते ?
6.8.5. योगी कीदृशः इत्युच्यते ?
6.8.6. कूटस्थः इत्यस्य अर्थः कः ?

**व्याकरणम्** –

**(क) सन्धिः** कूटस्थो विजितेन्द्रियः – कूटस्थः + विजितेन्द्रियः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
युक्त इत्युच्यते – युक्तः + इत्युच्यते विसर्गसन्धिः (लोपः)
– इति + उच्यते यण्सन्धिः

**(ख) समासः** ज्ञानविज्ञानतृप्तात्मा – ज्ञानं च विज्ञानं च ज्ञानविज्ञाने – द्वन्द्वः ।
– ज्ञानविज्ञानाभ्यां तृप्तः ज्ञानविज्ञानतृप्तः – तृतीयातत्पुरुषः ।
– ज्ञानविज्ञानतृप्तः आत्मा यस्य सः – बहुव्रीहिः ।
विजितेन्द्रियः – विजितानि इन्द्रियाणि येन सः – बहुव्रीहिः ।
समलोष्टाश्मकाञ्चनः – लोष्टं च अश्मा च काञ्चनं च लोष्टाश्मकाञ्चनानि – द्वन्द्वः ।
– समानि लोष्टाश्मकाञ्चनानि यस्य सः – बहुव्रीहिः ।

**(ग) कृदन्तः** कूटस्थः – कूट + स्था + क्त (कर्तरि) । कूटम् अयोधनः, तद्वत् तिष्ठति । निर्विकार इति यावत् ।
युक्तः – दृश्यताम् – 2.39

**(घ) तद्धितान्तः** योगी – दृश्यताम् – 3.3

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥6.9॥**

**पदार्थः** – सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु = सुहृत्, मित्रम्, शत्रुः, उदासीनः, मध्यस्थः, द्वेष्यः, बन्धुः, इत्येतेषु, साधुषु = सज्जनेषु, पापेषु अपि च = दुर्जनेषु च, समबुद्धिः = तुल्यमतिः, विशिष्यते = अतिरिच्यते।

**अन्वयः** – सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु साधुषु पापेषु अपि च समबुद्धिः विशिष्यते।

**तात्पर्यम्** – सुहृत् मित्रम्, शत्रुः, मध्यस्थः, द्वेष्यः, बन्धुः, साधवः, पापिनः च इत्येतेषु सर्वेषु अपि यः रागद्वेषशून्यः भवति सः योगारूढेषु उत्तमः। (सुहृत् स्वभावेनैव उपकर्ता, मित्रम् स्नेहेन उपकर्ता, अरिः स्वभावेन अपकर्ता, उदासीनः विवदमानयोः उभयोरपि तिरस्कारकः, मध्यस्थः विवदमानयोः उभयोरपि हिताकाङ्क्षी, द्वेष्यः कारणविशेषेण अपकर्ता, बन्धुः सम्बन्धेन उपकर्ता)

**माध्वमतम्** – सुहृत् = प्रत्युपकारनिरपेक्षोपकारकृत्, मित्रम् = क्लेशस्थानं विज्ञाप्य ततो रक्षाकृत्, अरिः = वधादिकर्ता, उदासीनः = अपकारे उपकारे च कर्तव्ये यः उदास्ते सः, मध्यस्थः = अपकारोपकारोभयकृत्, द्वेष्यः= अवाञ्छितकृत्, बन्धुः = उपकर्ता।

**प्रश्नाः** –

6.9.1. सुहृत् कः ? मित्रं च कः ?
6.9.2. कः विशिष्यते ?
6.9.3. केषु समबुद्धिः विशिष्यते ?
6.9.4. विवदमानयोः उभयोरपि तिरस्कारकः कः ?
6.9.5. अरिः कः ? कश्च द्वेष्यः ?
6.9.6. मध्यस्थः इत्यस्य अर्थः कः ?

**व्याकरणम्** –

**(क) सन्धिः** साधुष्वपि – साधुषु + अपि यणसन्धिः
समबुद्धिर्विशिष्यते – समबुद्धिः + विशिष्यते विसर्गसन्धिः (रेफः)

**(ख) समासः** सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु – सुहृत् च मित्रं च अरिश्च उदासीनश्च मध्यस्थश्च द्वेष्यश्च बन्धुश्च, तेषु – द्वन्द्वः।
समबुद्धिः – समा बुद्धिः यस्य सः – बहुव्रीहिः।

**(ग) कृदन्तः** उदासीनः – उत् + आस् + शानच्। (कर्तरि)

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥6.10॥**

**पदार्थः** – यतचित्तात्मा = नियतमनोदेहः, निराशीः = अपगततृष्णः, अपरिग्रहः = परिग्रहरहितः, एकाकी = सहायरहितः, योगी = योगी, रहसि = विजने, स्थितः = वर्तमानः, सततम् = सदा, आत्मानम् = मनः, युञ्जीत = योजयेत् (समाधिमग्नं कुर्यात्)।

**अन्वयः** – यतचित्तात्मा निराशीः अपरिग्रहः एकाकी योगी रहसि स्थितः सततम् आत्मानं युञ्जीत।

**तात्पर्यम्** – योगी जनान्तरेण रहितः, वशीकृतचित्तः, तृष्णाविहीनः परिग्रहशून्यश्च सन् निर्जनप्रदेशे स्थित्वा मनः सततम् आत्मविषयकं कुर्यात्।

प्रश्नाः -

6.10.1. योगी सततं कं युञ्जीत ?
6.10.2. योगी कुत्र स्थितः आत्मानं युञ्जीत ?
6.10.3. योगी आत्मानं कथं युञ्जीत ?
6.10.4. कीदृशो योगी आत्मानं युञ्जीत ?
6.10.5. निराशीः इत्यस्य कोऽर्थः ?
6.10.5. रहसि स्थितः कः आत्मानं युञ्जीत ?

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | निराशीरपरिग्रहः | - | निराशीः + अपरिग्रहः विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | यतचित्तात्मा | - | दृश्यताम् 4.21 |
| | अपरिग्रहः | - | न विद्यते परिग्रहः यस्य सः - बहुव्रीहिः । |
| **(ग) कृदन्तः** | स्थितः | - | दृश्यताम् 1.14 |
| **(घ) तद्धितान्तः** | योगी | - | दृश्यताम् 3.3 |

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥6.11॥**
**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥6.12॥**

**पदार्थः** - यतचित्तेन्द्रियक्रियः = नियतेन्द्रियव्यापारः, शुचौ = परिशुद्धे, देशे = स्थाने, स्थिरम् = अचलम्, नात्युच्छ्रितम् = नात्युन्नतम्, नातिनीचम् = नातिनिम्नम्, चैलाजिनकुशोत्तरम् = वस्त्रकृष्णाजिनदर्भोत्तरम्, आत्मनः = स्वस्य, आसनम् = पीठम्, प्रतिष्ठाप्य = संस्थाप्य, तत्र = तस्मिन्, आसने = पीठे, उपविश्य = उपविश्य, मनः = चित्तम्, एकाग्रम् = संलग्नम्, कृत्वा = विधाय, आत्मविशुद्धये = अन्तःकरणनैर्मल्याय, योगम् = समाधिम्, युञ्ज्यात् = युञ्जीत ।

**अन्वयः** - यतचित्तेन्द्रियक्रियः शुचौ देशे स्थिरं नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् आत्मनः आसनं प्रतिष्ठाप्य तत्र आसने उपविश्य मनः एकाग्रं कृत्वा आत्मविशुद्धये योगं युञ्ज्यात् ।

**तात्पर्यम्** - शुद्धे स्थाने अधोभागे तादृशम् आसनं भवेत् यत् न अत्युन्नतं नापि अतिनीचम् । तस्मिंश्च आसने कुशान् अजिनं मृदुवस्त्रं च क्रमेण प्रसार्य, तत्र उपविश्य अवधानेन मनःप्रभृतीनां सर्वेषाम् इन्द्रियाणां क्रियां नियन्त्र्य चित्तशुद्धये समाधिं कुर्यात् ।

**रामानुजीयमतम्** - चैलाजिनकुशोत्तरम् - दारुपीठे कुशाः, तदुपरि अजिनम्, तदुपरि चैलम् इति सम्प्रदायः ।

**प्रश्नाः** -

6.11.1. योगी आसनं कुत्र प्रतिष्ठापयेत् ?
6.11.2. आसनं कीदृशं भवेत् ?
6.11.3. प्रथमं कुशाः ततः अजिनम्, ततः चैलं कुत्र भवेत् ?
6.12.1. आसने उपविश्य मनः कीदृशं कृत्वा योगं युञ्ज्यात् ?
6.12.2. आसने योगी कीदृशः उपविश्य योगं युञ्ज्यात् ?
6.12.6. योगी किमर्थं योगं युञ्ज्यात् ?

व्याकरणम् -

(क) **सन्धिः** नात्युच्छ्रितम् - न + अत्युच्छ्रितम् सवर्णदीर्घसन्धिः
नातिनीचम् - न + अतिनीचम् सवर्णदीर्घसन्धिः
तत्रैकाग्रम् - तत्र + एकाग्रम् वृद्धिसन्धिः
युञ्ज्याद्योगम् - युञ्ज्यात् + योगम् जश्त्वसन्धिः

(ख) **समासः** चैलाजिनकुशोत्तरम् - चैलं च अजिनं च चैलाजिने - द्वन्द्वः ।
- कुशेभ्यः उत्तरे, कुशोत्तरे - पञ्चमीतत्पुरुषः
- चैलाजिने कुशोत्तरे यस्मिन् तत्, तत् - बहुव्रीहिः ।

एकाग्रम् - एकम् अग्रं यस्य तत् - बहुव्रीहिः ।
यतचित्तेन्द्रियक्रियः - चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि - द्वन्द्वः ।
- चित्तेन्द्रियाणां क्रियाः चित्तेन्द्रियक्रियाः - षष्ठीतत्पुरुषः ।
- यताः चित्तेन्द्रियक्रियाः येन सः - बहुव्रीहिः ।

आत्मविशुद्धये - आत्मनः विशुद्धिः, तस्यै - षष्ठीतत्पुरुषः ।

(ग) **कृदन्तः** उच्छ्रितम् - उत् +श्रि + क्त (कर्तरि)
प्रतिष्ठाप्य - प्रति + स्था + णिच् + ल्यप्
आसनम् - आस् + ल्युट् । (अधिकरणे)
कृत्वा - दृश्यताम् - 2.38
उपविश्य - उप + विश् + ल्यप् ।

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥6.13॥**
**प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ।6.14॥**

**पदार्थः** - कायशिरोग्रीवम् = कटिशीर्षकण्ठम्, समम् = अवक्रम्, अचलम् = अकम्पम्, धारयन् = धरन्, स्थिरः = स्थिरः भूत्वा, स्वम् = स्वकीयम्, नासिकाग्रम् = नासिकायाः अग्रभागम्, सम्प्रेक्ष्य =अवलोक्य, दिशः च = दिशः च, अनवलोकयन् = अपश्यन्, प्रशान्तात्मा = शान्तचित्तः, विगतभीः = अपगतभयः, ब्रह्मचारिव्रते = ब्रह्मचर्ये, स्थितः = वर्तमानः, मनः = चित्तम्, संयम्य = नियन्त्र्य, मच्चित्तः = मन्मनस्कः, मत्परः = आत्मपरायणः, युक्तः = समाहितः, आसीत = उपविशेत् ।

**अन्वयः** - कायशिरोग्रीवं समम् अचलं धारयन् स्थिरः भूत्वा स्वं नासिकाग्रं सम्प्रेक्ष्य दिशः च अनवलोकयन् प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः सन् मनः संयम्य मच्चित्तः मत्परः युक्तः आसीत ।

**तात्पर्यम्** - कटिं शिरः ग्रीवां च समं धारयन् निश्चलम् उपविशेत् । दिशः अनवलोकयन् दृष्टिं नासिकाग्रे संस्थापयेत् । प्रशान्तात्मा, भयरहितः ब्रह्मचर्ये स्थितः मनः नियन्त्र्य मयि एव दत्तचित्तः समाहितः सन् उपविशेत् ।

**प्रश्नाः** –

6.13.1. योगी किं समं धारयेत् ?

6.13.2. योगी कायशिरोग्रीवं कथं धारयेत् ?

6.13.3. योगी ध्यानकाले किं पश्येत् काः च न ?

6.14.1. योगी कीदृशः मनः संयम्य युक्तः आसीत ?

6.14.2. युक्तः इत्यस्य अर्थः कः ?

**व्याकरणम्** –

**(क) सन्धिः** धारयन्नचलम् – धारयन् + अचलम् ङमुडागमसन्धिः
दिशश्चानवलोकयन् – दिशश्च + अनवलोकयन् सवर्णदीर्घसन्धिः
दिशश्च – दिशः + च विसर्गसन्धिः (सकारः) श्चुत्वम्
मच्चित्तो युक्तः – मच्चित्तः + युक्तः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
युक्त आसीत – युक्तः + आसीत विसर्गसन्धिः (लोपः)

**(ख) समासः** कायशिरोग्रीवम् – कायश्च शिरश्च ग्रीवा च एतेषां समाहारः, तत् – द्वन्द्वः ।
नासिकाग्रम् – नासिकायाः अग्रम् – षष्ठीतत्पुरुषः ।
अचलम् – दृश्यताम् – 2.24
अनवलोकयन् – न अवलोकयन् – नञ्तत्पुरुषः ।
प्रशान्तात्मा – प्रशान्तः आत्मा यस्य सः – बहुव्रीहिः ।
विगतभीः – विगता भीः यस्मात् सः – बहुव्रीहिः ।
ब्रह्मचारिव्रते – ब्रह्मचारिणः व्रतम्, तस्मिन् – षष्ठीतत्पुरुषः ।
मच्चित्तः – मयि चित्तं यस्य सः – बहुव्रीहिः ।
मत्परः – दृश्यताम् – 2.61

**(ग) कृदन्तः** सम्प्रेक्ष्य – सम् + प्र + ईक्ष् + ल्यप् ।
धारयन् – दृश्यताम् – 5.9
अवलोकयन् – अव + लोक् + शतृ । (कर्तरि)
विगतः – वि + गम् + क्त । (कर्तरि)
स्थितः – दृश्यताम् – 1.14
संयम्य – दृश्यताम् – 2.61
युक्तः – दृश्यताम् – 2.39

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥6.15॥**

**पदार्थः** – नियतमानसः = निगृहीतचित्तः, योगी = युक्तः, एवम् = इत्थम्, सदा = सर्वदा, आत्मानम् = स्वम्, युञ्जन् = योजयन्, निर्वाणपरमाम् = मोक्षमुख्याम्, मत्संस्थाम् = मयि स्थिताम्, शान्तिम् = संसारोपरतिम्, अधिगच्छति = प्राप्नोति ।

**अन्वयः** – नियतमानसः योगी एवं सदा आत्मानं युञ्जन् निर्वाणपरमां मत्संस्थां शान्तिम् अधिगच्छति।

**तात्पर्यम्** – अनेन प्रकारेण निगृहीतमानसः सन् यः आत्मानं ध्यायेत् सः आनन्दरूपं मयि स्थितं संसारनाशं प्राप्नोति।

**माध्वमतम्** – दृढमनस्कः योगी मनः भगवति युक्तं कुर्वन् शरीरपतनानन्तरं मोक्षमुपयाति।

**प्रश्नाः** –

6.15.1. कीदृशो योगी आत्मानं युनक्ति ?
6.15.2. नियतमानसः कः आत्मानं युनक्ति ?
6.15.3. योगी आत्मानं कदा युनक्ति ?
6.15.4. योगी युञ्जन् काम् अधिगच्छति ?
6.15.5. शान्तिं कः अधिगच्छति ?

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | युञ्जन्नेवम् | – युञ्जन् + एवम् ङमुडागमसन्धिः |
| **(ख) समासः** | नियतमानसः | – नियतं मानसं येन सः – बहुव्रीहिः। |
| | मत्संस्थाम् | – मयि संस्था, यस्याः सा, ताम् – बहुव्रीहिः। |
| | निर्वाणपरमाम् | – निर्वाणं परमं यस्याः सा – बहुव्रीहिः। |
| **(ग) कृदन्तः** | युञ्जन् | – युज् + शतृ (कर्तरि)। |
| | नियतम् | – दृश्यताम् – 1.44 |

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥6.16॥**

**पदार्थः** – अर्जुन = हे अर्जुन, अत्यश्नतः तु = अत्यधिकं भोजनं कुर्वतः, योगः = समाधिः, न अस्ति = न विद्यते, एकान्तम् = सर्वथा, अनश्नतः च = भोजनम् अकुर्वतः अपि, न = न, अतिस्वप्नशीलस्य च = अतीव निद्रालोः अपि, न = न विद्यते, जाग्रतः च = निद्राविहीनस्य अपि, न एव = नैव विद्यते।

**अन्वयः** – अर्जुन ! अत्यश्नतः तु योगः न अस्ति। एकान्तम् अनश्नतः च न। अतिस्वप्नशीलस्य च न। जाग्रतः च न एव।

**तात्पर्यम्** – यः अधिकं भोजनं करोति, यश्च भोजनमेव न करोति तयोः समाधिः न सम्भवति। एवं यः अत्यन्तं निद्राति, यश्च अत्यन्तं जागर्ति तयोरपि समाधिः न सम्भवति।

**आहारपरिमाणम्** – *अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु।*
*वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥*

**प्रश्नाः** –

6.16.1. योगः कस्य नास्ति ?
6.16.2. अत्यश्नतः कः नास्ति ?
6.16.3. निद्राविषये कीदृशस्य योगो नास्ति ?
6.16.4. अत्र श्लोके सम्बोधनपदं किम् ?
6.16.5. योगः इत्यस्य कः अर्थः ?

**व्याकरणम्** –

**(क) सन्धिः** नात्यश्नतस्तु – न + अत्यश्नतः सवर्णदीर्घसन्धिः

| | | | |
|---|---|---|---|
| | | - नात्यश्नतः + तु | विसर्गसन्धिः (सकारः) |
| | योगोऽस्ति | - योगः + अस्ति | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः पूर्वरूपं च |
| | चैकान्तम् | - च + एकान्तम् | वृद्धिसन्धिः |
| | चातिस्वप्नशीलस्य | - च + अतिस्वप्नशीलस्य | सवर्णदीर्घसन्धिः |
| | जाग्रतो नैव | - जाग्रतः + नैव | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः |
| | नैव | - न + एव | वृद्धिसन्धिः |
| | चार्जुन | - च + अर्जुन | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अनश्नतः | - न अश्नन्, तस्य - नञ्तत्पुरुषः । | |
| | स्वप्नशीलस्य | - स्वप्नः शीलं यस्य सः, तस्य - बहुव्रीहिः । | |
| **(ग) कृदन्तः** | अश्नतः | - दृश्यताम् - 5. 8 | |
| | जाग्रतः | - जागृ + शतृ (कर्तरि) तस्य । | |

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥6.17॥**

**पदार्थः** - युक्ताहारविहारस्य = समुचिताहारसञ्चारस्य, कर्मसु = कार्येषु, युक्तचेष्टस्य = समुचितव्यापारस्य, युक्तस्वप्नावबोधस्य = समुचितनिद्राजागरणस्य, योगः = समाधिः, दुःखहा = दुःखनाशकः, भवति = सम्पद्यते ।

**अन्वयः** - युक्ताहारविहारस्य कर्मसु युक्तचेष्टस्य युक्तस्वप्नावबोधस्य योगः दुःखहा भवति ।

**तात्पर्यम्** - यः यथाकालं परिमितमेव अश्नाति तथा सञ्चरति, यः धर्मसम्मते कार्ये यथाकालं व्यापृतो भवति, यः यथाकालं निद्राति तथा जागर्ति तस्य पुरुषस्य समाधिः अवश्यं दुःखनाशको भवति ।

**प्रश्नाः** -

6.17.1. योगः कस्य ?
6.17.2. योगः कीदृशो भवति ?
6.17.3. युक्तचेष्टः केषु ?
6.17.4. युक्तस्वप्नावबोधस्य कः दुःखहा भवति ?

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **क) सन्धिः** | योगो भवति | - | योगः + भवति विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | युक्ताहारविहारस्य | - | आहारश्च विहारश्च आहारविहारौ - द्वन्द्वः । |
| | | - | युक्तौ आहारविहारौ यस्य सः, तस्य - बहुव्रीहिः । |
| | युक्तचेष्टस्य | - | युक्ता चेष्टा यस्य सः, तस्य - बहुव्रीहिः । |
| | युक्तस्वप्नावबोधस्य | - | स्वप्नः च अवबोधः च स्वप्नावबोधौ - द्वन्द्वः । |
| | | - | युक्तौ स्वप्नावबोधौ यस्य सः, तस्य - बहुव्रीहिः । |
| | दुःखहा | - | दुःखं हन्ति दुःखहा - कर्तरि क्विप् उपपदसमासश्च । |
| **(ग) कृदन्तः** | युक्तः | - | दृश्यताम् - 1.14 |
| | चेष्टा | - | चेष्ट् + अङ् (भावे) + टाप् (स्त्रीत्वे) । |

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥6.18॥**

**पदार्थः** - यदा = यस्मिन् समये, विनियतम् = विशेषेण निरुद्धम्, चित्तम् = मनः, आत्मनि एव = आत्मन्येव, अवतिष्ठते = विद्यते, सर्वकामेभ्यः = सकलवाञ्छितेभ्यः, निःस्पृहः = निरीहः, तदा = तस्मिन् समये, युक्तः इति = योगी इति, उच्यते = कथ्यते ।

**अन्वयः** - यदा विनियतं चित्तम् आत्मनि एव अवतिष्ठते सर्वकामेभ्यः निःस्पृहः तदा युक्तः इति उच्यते ।

**तात्पर्यम्** - एकाग्रताम् आपन्नं चित्तं यदा विषयानुसन्धानं परित्यज्य आत्मनि एव तिष्ठति तदा सः जनः सर्वकामेषु निःस्पृहत्वात् युक्त इति उच्यते ।

**माध्वमतम्** - यदा चित्तं परमात्मनि स्थिरीभवति तदा योगी इत्युच्यते ।

**प्रश्नाः** -

6.18.1. कः युक्तः इत्युच्यते ?
6.18.2. केभ्यः निस्पृहः युक्तः इत्युच्यते ?
6.18.3. कदा युक्तः इत्युच्यते ?
6.18.4. कीदृशं चित्तम् आत्मन्येव अवतिष्ठते ?
6.18.5. विनियतं चित्तं कुत्र अवतिष्ठते ?

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | आत्मन्येवावतिष्ठते | - आत्मनि + एव | यणसन्धिः |
| | | - आत्मन्येव + अवतिष्ठते | सवर्णदीर्घसन्धिः |
| | सर्वकामेभ्यो युक्तः | - सर्वकामेभ्यः + युक्तः | विसर्गसन्धिः(सकारः) रेफः उकारः,गुणः |
| | युक्त इत्युच्यते | - युक्तः + इत्युच्यते | विसर्गसन्धिः (लोपः) |
| | इत्युच्यते | - इति + उच्यते | यणसन्धिः |
| **(ख) समासः** | सर्वकामेभ्यः | - सर्वे कामाः, तेभ्यः - कर्मधारयः । | |
| **(ग) कृदन्तः** | विनियतम् | - वि + नि + यम् + क्त । (कर्मणि) | |
| | युक्तः | - दृश्यताम् - 2.39 | |

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥6.19॥**

**पदार्थः** - यथा = येन प्रकारेण, निवातस्थः = वायुरहितदेशस्थः, दीपः = दीपः, न इङ्गते = न चलति, सा = सः, आत्मनः = स्वस्य, योगम् = समाधिम्, युञ्जतः = अनुतिष्ठतः, यतचित्तस्य = वशीकृतमनसः, योगिनः = युक्तस्य, उपमा = दृष्टान्तः, स्मृता = चिन्तितः ।

**अन्वयः** - यथा निवातस्थः दीपः न इङ्गते सा आत्मनः योगं युञ्जतः यतचित्तस्य योगिनः उपमा स्मृता ।

**तात्पर्यम्** - वायुविरहिते स्थाने वर्तमानः दीपः न चलति । तथा नियतान्तःकरणस्य योगम् आचरतः ध्यानमग्नस्य योगिनः चित्तमपि निष्कम्पं तिष्ठति । अतः सः दीपः तादृशचित्तस्य उपमा भवितुमर्हति ।

**प्रश्नाः -**

6.19.1. कीदृशो दीपः नेङ्गते ? 6.19.2. यतचित्तः कः ?

6.19.3. योगी कस्य योगं युनक्ति ? 6.19.4. निवातस्थः कः नेङ्गते ?

6.19.5. निवातस्थो दीपः कस्य उपमा ?

**व्याकरणम् -**

| | | | |
|---|---|---|---|
| **क) सन्धिः** | दीपो निवातस्थः | - दीपः + निवातस्थः | विसर्गसन्धिः(सकारः) रेफः उकारः गुणः |
| | निवातस्थो नेङ्गते | - निवातस्थः + नेङ्गते | विसर्गसन्धिः(सकारः) रेफः उकारः गुणः |
| | नेङ्गते | - न + इङ्गते | गुणसन्धिः |
| | योगिनो यतचित्तस्य | - योगिनः + यतचित्तस्य | विसर्गसन्धिः(सकारः) रेफः उकारः गुणः |
| | युञ्जतो योगम् | - युञ्जतः + योगम् | विसर्गसन्धिः(सकारः) रेफः उकारः गुणः |

| | | |
|---|---|---|
| **(ख) समासः** | निवातस्थः | - निर्गतः वातः यस्मात् सः निवातः - बहुव्रीहिः । |
| | | - निवाते तिष्ठति इति निवातस्थः । कर्तरि कप्रत्ययः उपपदसमासश्च । |
| | यतचित्तस्य | - यतं चित्तं यस्य सः, तस्य - बहुव्रीहिः । |
| **(ग) कृदन्तः** | स्मृता | - स्मृ + क्त (कर्मणि) + टाप् (स्त्रीत्वे) । |
| | युञ्जतः | - दृश्यताम् - 6.15 |

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥6.20॥**

**पदार्थः** - यत्र = यस्मिन् अवस्थाविशेषे, योगसेवया = योगाभ्यासेन, निरुद्धम् = विषयेभ्यः विमुखीकृतम्, चित्तम् = मनः, उपरमते = विरमति, यत्र च एव = यस्मिन् च अवस्थाविशेषे, आत्मना = मनसा, आत्मानम् = आत्मानम्, पश्यन् = अवलोकयन्, आत्मनि = स्वस्मिन्, तुष्यति = सन्तुष्यति....... ।

**अन्वयः** - यत्र योगसेवया निरुद्धं चित्तम् उपरमते, यत्र च एव आत्मना आत्मानं पश्यन् आत्मनि तुष्यति ।

**तात्पर्यम्** - यस्मिन् अवस्थाविशेषे योगानुष्ठानेन निरुद्धं चेतः उपरतिं प्राप्नोति, यस्मिन् च अवस्थाविशेषे आत्मना आत्मानं पश्यन्, आत्मनि एव सन्तुष्टः भवति । ( तं योगसंज्ञितं विद्यात् ।)

**प्रश्नाः -**

6.20.1. योगे चित्तं कया निरुद्धं भवति ? 6.20.2. योगे आत्मना पुरुषः कं पश्यति ?

6.20.3. योगे आत्मानम् आत्मना पश्यन् कुत्र तुष्यति ? 6.20.4. योगसेवया निरुद्धं भवति किम् ?

**व्याकरणम् -**

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | यत्रोपरमते | - यत्र + उपरमते | गुणसन्धिः |
| | चैवात्मनात्मानम् | - च + एव, चैव | वृद्धिसन्धिः |
| | | - चैव + आत्मना, चैवात्मना | सवर्णदीर्घसन्धिः |
| | | - चैवात्मना + आत्मानम् | सवर्णदीर्घसन्धिः |

| | पश्यन्नात्मनि | - पश्यन् + आत्मनि | ङमुडागमसन्धिः |
|---|---|---|---|
| **(ख) समासः** | योगसेवया | - योगस्य सेवा, तया - षष्ठीतत्पुरुषः । | |
| **(ग) कृदन्तः** | निरुद्धम् | - नि + रुध् + क्त (कर्मणि) । | |

**सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥6.21॥**

**पदार्थः** - यत्र = यस्मिन् अवस्थाविषये, यत्तत् = अनिर्वचनीयम्, बुद्धिग्राह्यम् = मतिबोध्यम्, अतीन्द्रियम् = इन्द्रियागोचरम्, आत्यन्तिकम् = अनन्तम्, सुखम् = आनन्दम्, वेत्ति = जानाति, (यत्र) च स्थितः = यस्मिन् च अवस्थाविशेषे वर्तमानः, अयम् = अयं पुरुषः, तत्त्वतः = स्वरूपतः, न एव चलति = न विचलति.... ।

**अन्वयः** - यत्र यत्तत् बुद्धिग्राह्यम् अतीन्द्रियम् आत्यन्तिकं सुखं वेत्ति, यत्र च स्थितः अयं तत्त्वतः न एव चलति ।

**तात्पर्यम्** - यस्मिन् अवस्थाविशेषे अनिर्वचनीयम्, अनन्तम्, बुद्ध्या एव ग्राह्यम्, इन्द्रियैः ग्रहीतुमशक्यं सुखं वेत्ति, यत्र च अवस्थाविशेषे तस्मिन् सुखे स्थितः आत्मनः स्वरूपात् न चलति ।(तं योगसंज्ञितं विद्यात् ।)

**प्रश्नाः** -

6.21.1. योगे सुखं कीदृशं भवति ? 6.21.2. योगे स्थितः कस्मात् न चलति ?

6. 21.3. आत्यन्तिकं बुद्धिग्राह्यम् अतीन्द्रियं च किम् ? 6.21.4. अत्र यत्तत् इत्यस्य अर्थः कः ?

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | तद् बुद्धिग्राह्यम् | - तत् + बुद्धिग्राह्यम् | जश्त्वसन्धिः |
| | स्थितश्चलति | - स्थितः + चलति विसर्गसन्धिः (सकारः) श्चुत्वम् | |
| | चैवायम् | - च + एव चैव | वृद्धिसन्धिः |
| | | - चैव + अयम् | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | बुद्धिग्राह्यम् | - बुद्ध्या ग्राह्यम् - तृतीयातत्पुरुषः । | |
| | अतीन्द्रियम् | - इन्द्रियम् अतिक्रान्तम् - तत्पुरुषः । | |
| **(ग) कृदन्तः** | स्थितः | - दृश्यताम् - 1.14 | |
| | ग्राह्यम् | - ग्रह् + ण्यत् । (कर्मणि) | |
| **(घ) तद्धितान्तः** | आत्यन्तिकम् | - अत्यन्त + ठञ् । (भवार्थे) | |

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥6.22॥**

**पदार्थः** - यम् = यम् आनन्दम्, लब्ध्वा = प्राप्य, ततः = तस्मात्, अधिकम् = उत्कृष्टम्, अपरम् = अन्यम्, लाभं च = प्रयोजनम्, न मन्यते = न चिन्तयति, यस्मिन् = यस्मिन् तत्त्वे, स्थितः = तिष्ठन्, गुरुणा = महता, दुःखेन अपि = क्लेशेन अपि, न विचाल्यते = न अपसार्यते..... ।

**अन्वयः** – यं च लब्ध्वा ततः अधिकम् अपरं लाभं न मन्यते, यस्मिन् स्थितः गुरुणा दुःखेन अपि न विचाल्यते (तं योगसंज्ञितं विद्यात् ।)

**तात्पर्यम्** – यत् सुखं प्राप्य अन्यमानन्दं ततोऽप्यधिकं न मन्यते, यत्र च सुखे स्थितः महता दुःखेन न अपसारयितुं शक्यते । (तं योगसंज्ञितं विद्यात् ।)

**प्रश्नाः** –

6.22.1. किं लब्ध्वा अपरं लाभम् अधिकं न मन्यते ? 6.22.2. सुखे स्थितः केन न विचाल्यते ?
6.22.3. सुखे कीदृशेन क्लेशेन न विचाल्यते ? 6.22.4. सुखं लब्ध्वा अपरं कम् अधिकं न मन्यते ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | चापरम् | – | च + अपरम् | सवर्णदीर्घसन्धिः |
| | स्थितो न | – | स्थितः + न | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | गुरुणापि | – | गुरुणा + अपि | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अपरम् | – | दृश्यताम् – 4.4 | |
| **(ग) कृदन्तः** | लब्ध्वा | – | दृश्यताम् – 4.39 | |
| | स्थितः | – | दृश्यताम् – 1.14 | |

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥6.23॥**

**पदार्थः** – तम् = तम् आनन्दम्, दुःखसंयोगवियोगम् = दुःखसम्बन्धरहितम्, योगसंज्ञितम् = योगनामकम्, विद्यात् = जानीयात्, सः = तादृशः, योगः = समाधिः, अनिर्विण्णचेतसा = समुत्सुकमनसा पुरुषेण, निश्चयेन = अवश्यम्, योक्तव्यः = प्राप्तव्यः ।

**अन्वयः** – तं दुःखसंयोगवियोगं योगसंज्ञितं विद्यात् । सः योगः अनिर्विण्णचेतसा निश्चयेन योक्तव्यः ।

**तात्पर्यम्** – एवं यस्मिन् अवस्थाविशेषे वैषयिकस्य सुखस्य दुःखस्य च स्पर्श एव न भवति तम् अवस्थाविशेषम् योगः इति जानीयात् । तं च योगं समुत्सुकः अवश्यं प्राप्नुयात् ।

**प्रश्नाः** –

6.23.1. कीदृशं तं योगसंज्ञितं विद्यात् ? 6.23.2. दुःखसंयोगवियोगं तं कीदृशं विद्यात् ?
6.23.3. अनिर्विण्णचेतसा कः निश्चयेन योक्तव्यः ? 6.23.4. अनिर्विण्णचेतसा योगः कथं योक्तव्यः ?

**व्याकरणम्** –

**(क) सन्धिः** विद्याद्दुःखसंयोगवियोगम् – विद्यात् + दुःखसंयोगवियोगम् जश्त्वसन्धिः
स निश्चयेन – सः + निश्चयेन विसर्गसन्धिः (लोपः)
योक्तव्यो योगोऽनिर्विण्णचेतसा – योक्तव्यः + योगः विसर्गसन्धिः(सकारः)रेफः उकारः,गुणः
– योगः + अनिर्विण्णचेतसा
विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

**(ख) समासः** दुःखसंयोगवियोगम् – दुःखस्य संयोगः दुःखसंयोगः – षष्ठीतत्पुरुषः
– दुःखसंयोगात् वियोगः, तम् – पञ्चमीतत्पुरुषः
योगसंज्ञितम् – योगः इति संज्ञा, योगसंज्ञा – कर्मधारयः।
योगसंज्ञा अस्य सञ्जाता इति योगसंज्ञितः।(इतच्प्रत्ययः)
अनिर्विण्णचेतसा – निर्विण्णं चेतः यस्य सः, निर्विण्णचेताः – बहुव्रीहिः
– न निर्विण्णचेताः, तेन – नञ्बहुव्रीहिः ।

**(ग) कृदन्तः** योक्तव्यः – युज् + तव्य। (कर्मणि)
निर्विण्णः – निर् + विद् + क्त। (कर्तरि)

**सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥6.24॥**
**शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥6.25॥**

**पदार्थः** – सङ्कल्पप्रभवान् = सङ्कल्पजनितान्, सर्वान् = सकलान्, कामान् = अभिलाषान्, अशेषतः = निरवशेषान्, त्यक्त्वा = परित्यज्य, मनसा एव = चित्तेन एव, समन्ततः = सर्वतः, इन्द्रियग्रामम् =इन्द्रियसमुदायम्, विनियम्य= निरुध्य, धृतिगृहीतया = धैर्यसहितया, बुद्ध्या = मत्या, शनैः शनैः = मन्दं मन्दम्, उपरमेत् = विश्रामयेत्, मनः = चित्तम्, आत्मसंस्थम् = स्वनिष्ठम्, कृत्वा = विधाय, किञ्चित् अपि = किमपि, न चिन्तयेत् = न भावयेत्।

**अन्वयः** – सङ्कल्पप्रभवान् सर्वान् कामान् अशेषतः त्यक्त्वा, मनसा एव समन्ततः इन्द्रियग्रामं विनियम्य, धृतिगृहीतया बुद्ध्या शनैः शनैः उपरमेत्। मनः आत्मसंस्थं कृत्वा किञ्चित् अपि न चिन्तयेत्।

**तात्पर्यम्** – सङ्कल्पात् जायमानान् सर्वान् अपि कामान् त्यजेत्। विवेकयुक्तेन मनसा इन्द्रियसमुदायं समन्ततः नियन्त्रयेत्। धैर्येण गृहीतया बुद्ध्या सावधानतया तम् इन्द्रियसमुदायं प्रशमयेत्। मनः आत्मनि एव संस्थितं यथा स्यात् तथा कुर्यात्। ततः किञ्चिदपि नैव चिन्तयेत्।

**माध्वमतम्**– भगवतः अन्यं न किञ्चिदपि चिन्तयेत्।

**प्रश्नाः** –

6.24.1. कामाः कीदृशाः ?
6.24.2. योगी कीदृशान् कामान् त्यजेत् ?
6.24.3. मनसा कं विनियच्छेत् ?
6.25.1. इन्द्रियग्रामं कीदृश्या बुद्ध्या उपरमेत् ?
6.25.2. मनः कीदृशं कृत्वा इन्द्रियग्रामं विनियच्छेत् ?
6.25.3. बुद्ध्या इन्द्रियग्रामं कथम् उपरमेत् ?

**व्याकरणम्** –

**(क) सन्धिः** कामांस्त्यक्त्वा – कामान् + त्यक्त्वा रुत्वम् अनुस्वारः सत्वसन्धिः (सकारः)
मनसैवेन्द्रियग्रामं – मनसा + एव मनसैव वृद्धिसन्धिः
– मनसैव + इन्द्रियग्रामम् गुणसन्धिः

शनैरुपरमेद् बुद्ध्या – शनैः + उपरमेत्, शनैरुपरमेत् विसर्गसन्धिः (रेफः)
– शनैरुपरमेत् + बुद्ध्या जश्त्वसन्धिः
किञ्चिदपि – किञ्चित् + अपि जश्त्वसन्धिः

**(ख) समासः** अशेषतः – न शेषाः, तान् – नञ्तत्पुरुषः, ततः स्वार्थे द्वितीयाविभक्त्यन्तात् तसिः ।
सङ्कल्पप्रभवान् – सङ्कल्पः प्रभवः येषां ते, तान् – बहुव्रीहिः ।
इन्द्रियग्रामम् – इन्द्रियाणां ग्रामः, तम् – षष्ठीतत्पुरुषः ।
धृतिगृहीतया – धृत्या गृहीता, तया – तृतीयातत्पुरुषः ।
आत्मसंस्थम् – आत्मनि संस्था यस्य तत्, तत् – बहुव्रीहिः ।

**(ग) कृदन्तः** त्यक्त्वा – दृश्यताम् – 1.33
विनियम्य – वि + नि + यम् + ल्यप् ।
कृत्वा – दृश्यताम् – 2.38
गृहीता – ग्रह् + क्त (कर्मणि) + टाप् (स्त्रीत्वे) ।

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥6.26॥**

**पदार्थः** – चञ्चलम् = अतीव चलम्, अस्थिरम् = अदृढम्, मनः = चित्तम्, यतः यतः = यं यं विषयम्, निश्चरति= गच्छति, ततः ततः = तस्मात् तस्मात् विषयात्, एतत् = इदम् मनः, नियम्य = निरुध्य,आत्मनि एव = आत्मनि एव, वशं नयेत् = अधीनतां कुर्यात् ।

**अन्वयः** – चञ्चलम् अस्थिरं मनः यतः यतः निश्चरति ततः ततः एतत् नियम्य आत्मनि एव वशं नयेत् ।

**तात्पर्यम्** – चञ्चलं मनः शब्दादिषु विषयेषु यत्र यत्र प्रवर्तते ततः ततः तत् प्रतिनिवर्तयेत् । आत्मनि एव तत् प्रवर्तयेत् ।

**प्रश्नाः** –

6.26.1. मनः कीदृशं निश्चरति ?
6.26.2. विषयान् प्रति किं निश्चरति ?
6.26.3. किं निमम्य आत्मनि वशं नयेत् ?
6.26.4. मनो निमम्य कुत्र वशं नयेत् ?

**व्याकरणम्** –

**(क) सन्धिः** यतो यतः – यतः + यतः विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः
मनश्चञ्चलम् – मनः + चञ्चलम् विसर्गसन्धिः (सकारः) श्चुत्वम्
ततस्ततो नियम्यैतदात्मन्येव – ततः + ततः विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः
– ततस्ततः + नियम्य ततस्ततो नियम्य
विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
– नियम्य + एतत् नियम्यैतत् वृद्धिसन्धिः
– नियम्यैतत् + आत्मनि, नियम्यैतदात्मनि जश्त्वसन्धिः
– नियम्यैतदात्मनि + एव यणसन्धिः

**(ख) समासः** अस्थिरम् – न स्थिरम् – नञ्तत्पुरुषः ।

**(ग) कृदन्तः** नियम्य – दृश्यताम् – 3.7

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥6.27॥**

**पदार्थः** – प्रशान्तमनसं हि = शान्तचित्तम्, शान्तरजसम् = नष्टरजोगुणम्, अकल्मषम् = विषयशून्यम्, ब्रह्मभूतम्= ब्रह्मणि निलीनम् (जीवन्मुक्तम्), एनम् = अमुम्, योगिनम् = समाधिनिष्ठम्, उत्तमम् = निरतिशयम्, सुखम् = सुखम्, उपैति = उपगच्छति ।

**अन्वयः** – प्रशान्तमनसं हि शान्तरजसम् अकल्मषं ब्रह्मभूतम् एनं योगिनम् उत्तमं सुखम् उपैति ।

**तात्पर्यम्** – यस्य मनः एवं शान्तं भवति तम् उत्तमं सुखं प्राप्नोति । तस्य विषयरूपकल्मषं प्रक्षीणं भवति । सः अपगतकल्मषः जीवन्मुक्तः भवति ।

**माध्वमतम्**– ब्रह्मणि स्थितिवन्तमेनं योगिनं सुखमुपैति ।

**रामानुजीयमतम्** – ब्रह्मभूतम् = स्वस्वरूपेणावस्थितम् ।

**प्रश्नाः** –

6.27.1. उत्तमं सुखं कम् उपैति ?
6.27.2. उत्तमं सुखं कीदृशं योगिनमुपैति ?
6.27.3. योगिनं किमुपैति ?
6.27.4. ब्रह्मभूतः इत्यस्य कोऽर्थः ?

**व्याकरणम्** –

**(क) सन्धिः** ह्येनम् – हि + एनम् यणसन्धिः

**(ख) समासः** प्रशान्तमनसम् – प्रशान्तं मनः यस्य सः, प्रशान्तमनाः, तम् – बहुव्रीहिः ।

शान्तरजसम् – शान्तं रजः यस्य सः, शान्तरजाः, तम् – बहुव्रीहिः ।

ब्रह्मभूतम् – दृश्यताम् – 5.24

अकल्मषम् – न विद्यते कल्मषं यस्मिन् सः, तम् – नञ्बहुव्रीहिः ।

**युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥6.28॥**

**पदार्थः** – विगतकल्मषः = अपगतपापः, योगी = योगी, एवम् = इत्थम्, आत्मानम् = स्वम्, सदा = सर्वदा, युञ्जन् = योजयन्, सुखेन = अनायासेन, अत्यन्तम् = अतीव, सुखम् = आनन्दकरम्, ब्रह्मसंस्पर्शम् = परमात्मसम्पर्कम्, अश्नुते = लभते ।

**अन्वयः** – विगतकल्मषः योगी एवम् आत्मानं सदा युञ्जन् सुखेन अत्यन्तं सुखं ब्रह्मसंस्पर्शम् अश्नुते ।

**तात्पर्यम्** – अनेन प्रकारेण सर्वदा यः आत्मानं प्रवर्तयति सः योगी विषयरूपकश्मलरहितः भवति । सः अनायासेन अत्यन्तं सुखकरं ब्रह्मसम्बन्धं प्राप्नोति ।

**माध्वमतम्**– ब्रह्मसंस्पर्शम् = भगवत्संसर्गात् अभिव्यक्तम् अतिशयितं सुखं प्राप्नोति ।

**प्रश्नाः** –

6.28.1. योगी कं युञ्जन् ब्रह्मसंस्पर्शम् अश्नुते ? 6.28.2. कीदृशो योगी ब्रह्मसंस्पर्शम् अश्नुते ?
6.28.3. योगी ब्रह्मसंस्पर्शं कथम् अश्नुते ? 6.28.4. योगी कम् अश्नुते ?
6.28.5. कः ब्रह्मसंस्पर्शम् अश्नुते ?

**व्याकरणम्** –

**(क) सन्धिः** युञ्जन्नेवम् – युञ्जन् + एवम् ङमुडागमसन्धिः
सदात्मानम् – सदा + आत्मानम् सवर्णदीर्घसन्धिः

**(ख) समासः** विगतकल्मषः – विगतः कल्मषः यस्मात् सः – बहुव्रीहिः ।
ब्रह्मसंस्पर्शम् – ब्रह्मणः संस्पर्शः, तम् – षष्ठीतत्पुरुषः ।

**(ग) कृदन्तः** युञ्जन् – दृश्यताम् – 6.15

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥6.29॥**

**पदार्थः** – योगयुक्तात्मा = समाहितचित्तः, सर्वत्र = सर्वेषु, समदर्शनः = तुल्यदृष्टिः, आत्मानम् = स्वम्, सर्वभूतस्थम् = निखिलभूतस्थितम्, आत्मनि च = स्वस्मिन् च, सर्वभूतानि = सकलभूतानि, ईक्षते = अवलोकयति ।

**अन्वयः** – योगयुक्तात्मा सर्वत्र समदर्शनः आत्मानम् सर्वभूतस्थम् आत्मनि च सर्वभूतानि ईक्षते ।

**तात्पर्यम्** – समाहितान्तःकरणः सः आत्मानं सर्वेषु अपि भूतेषु पश्यति । आत्मनि च सर्वाण्यपि भूतानि पश्यति । स्थावरजङ्गमादिषु सर्वेषु अपि सः निर्विशेषतया ब्रह्म पश्यति ।

**प्रश्नाः** –

6.29.1. योगयुक्तात्मा कीदृशः ईक्षते ? 6.29.2. सर्वत्र समदर्शनः योगी आत्मनि कानि पश्यति ?
6.29.3. योगयुक्तात्मा किं किम् ईक्षते ? 6.29.4. सर्वत्र समदर्शनः योगी आत्मानं कीदृशं पश्यति ?

**व्याकरणम्** –

**(क) सन्धिः** चात्मनि – च + आत्मनि सवर्णदीघसन्धिः

**(ख) समासः** सर्वभूतानि – सर्वाणि भूतानि – कर्मधारयः ।
सर्वभूतस्थम् – सर्वभूतेषु तिष्ठति इति सर्वभूतस्थः – कर्तरि कप्रत्ययः उपपदसमासश्च ।
योगयुक्तात्मा – योगेन युक्तः योगयुक्तः – तृतीयातत्पुरुषः ।
– योगयुक्तः आत्मा यस्य सः – बहुव्रीहिः ।
समदर्शनः – समं दर्शनं यस्य सः – बहुव्रीहिः ।

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥6.30॥**

**पदार्थः** – यः = यः पुरुषः, माम् = माम्, सर्वत्र = सर्वप्रदेशेषु, पश्यति = ईक्षते, सर्वं च = निखिलमपि, मयि = परमात्मनि, पश्यति = अवलोकयति, तस्य = तस्य पुरुषस्य, अहम् = ब्रह्मरूपः अहम्, न प्रणश्यामि = न परोक्षः भवामि, सः च = सोऽपि, मे = मम, न प्रणश्यति = न परोक्षः भवति ।

**अन्वयः** – यः मां सर्वत्र पश्यति सर्वं च मयि पश्यति, तस्य अहं न प्रणश्यामि सः च मे न प्रणश्यति ।

**तात्पर्यम्** – यः सर्वेषु भूतेषु मां पश्यति, मयि सर्वमपि भूतजातं पश्यति तस्य कदापि अहं परोक्षतां न गच्छामि । सोऽपि मम परोक्षतां न गच्छति ।

**माध्वमतम्** – यः ब्रह्मादितृणान्तेषु स्थितं भगवन्तं पश्यति ब्रह्मादिजगत् तदधीनं च पश्यति सः सदा भगवद्भक्तः भवति । भगवान् तस्य योगक्षेमं वहति ।

**प्रश्नाः** –

6.30.1. योगी भगवन्तं कुत्र पश्यति ?

6.30.2. योगी सर्वं च कुत्र पश्यति ?

6.30.3. भगवान् कस्य न प्रणश्यति ?

6.30.4. योगी कस्य न प्रणश्यति ?

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| यो माम् | – यः + माम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| स च | – सः + च | विसर्गसन्धिः (लोपः) |

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥6.31॥**

**पदार्थः** – एकत्वम् = ऐक्यम्, आस्थितः = आश्रितः, यः = यः मानवः, सर्वभूतस्थितम् = सकलप्राणिषु वर्तमानम्, माम् = माम्, भजति = सेवते, सः योगी = सः युक्तः, सर्वथा = सर्वप्रकारेण, वर्तमानः अपि = स्थितोऽपि, मयि = परमात्मनि, वर्तते = तिष्ठति ।

**अन्वयः** – एकत्वम् आस्थितः यः सर्वभूतस्थितं मां भजति, सः योगी सर्वथा वर्तमानः अपि मयि वर्तते ।

**तात्पर्यम्** – सर्वेषु भूतेषु वर्तमानं मां यः एकत्वमास्थितः सन् भजति सः योगी सर्वप्रकारैः वर्तमानः अपि मयि एव भवति ।

**माध्वमतम्** – एकत्वमास्थितः = सर्वत्र नियामकत्वेन भगवान् एकः एव वर्तते इति ज्ञानवान् योगी ।

**प्रश्नाः** –

6.31.1. भगवान् कीदृशः ?

6.31.2. योगी भगवन्तं कीदृशः सन् भजति ?

6.31.3. योगी कुत्र वर्तते ?

6.31.4. कीदृशो योगी भगवति वर्तते ?

**व्याकरणम्** –

**(क) सन्धिः**

| | | |
|---|---|---|
| यो माम् | – यः + माम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| भजत्येकत्वम् | – भजति + एकत्वम् | यणसन्धिः |
| वर्तमानोऽपि | – वर्तमानः + अपि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च |
| स योगी | – सः + योगी | विसर्गसन्धिः (लोपः) |

**(ख) समासः** सर्वभूतस्थितम् - सर्वभूतेषु स्थितः, तम् - सप्तमीतत्पुरुषः ।
**(ग) कृदन्तः** आस्थितः - दृश्यताम् - 3.20
वर्तमानः - वृत् + लट्, शानच् । (कर्तरि)
**(घ) तद्धितान्तः** एकत्वम् - एक + त्व (भावे) । एकस्य भावः इत्यर्थः ।

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥6.32॥**

**पदार्थः** - अर्जुन = हे अर्जुन ! यः = यः पुरुषः, आत्मौपम्येन = स्वसादृशेन, सर्वत्र = सर्वेषु प्राणिषु, सुखं वा = (तस्मात्) आनन्दो वा भवतु, यदि वा = अथवा, दुःखम् = खेदः (तथापि) समम् = समानम्, पश्यति = दृष्टिं पातयति, सः = सः पुरुषः, योगी = युक्तः, परमः = उत्तमः, मतः = अभिमतः ।

**अन्वयः -** अर्जुन ! (तस्मात्) सुखं (भवतु) यदि वा (तस्मात्) दुःखं (तथापि) यः आत्मौपम्येन सर्वत्र समं पश्यति सः परमः योगी मतः ।

**तात्पर्यम् -** यदि कस्माच्चित् सुखं जायेत कस्माच्चित् दुःखं वा तथापि सर्वेऽपि एते मम समानाः इति मत्वा सर्वेषु अपि प्राणिषु यः समानताबुद्धिं धारयति सः उत्तमः योगी इति मम मतिः ।

**प्रश्नाः** -

6.32.1. भगवतः योगी कीदृशो मतः ? 6.32.2. भगवतः कीदृशो योगी परमो मतः ?
6.32.3. योगी सर्वत्र केन प्रकारेण पश्यति ? 6.32.4. योगी आत्मौपम्येन सर्वत्र कथं पश्यति ?

**व्याकरणम्** -

**(क) सन्धिः** योऽर्जुन - यः + अर्जुन विसर्गसन्धिः (रेफः, उकारः) गुणः, पूर्वरूपं च
स योगी - सः + योगी विसर्गसन्धिः (लोपः)
**(ख) समासः** आत्मौपम्यम् - आत्मनः औपम्यम् - षष्ठीतत्पुरुषः ।
**(ग) तद्धितान्तः** औपम्यम् - उपमा + ष्यञ् (स्वार्थे) । उपमा इत्यर्थः ।

**अर्जुन उवाच - योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥6.33॥**

**पदार्थः** - मधुसूदन = हे कृष्ण ! यः अयं योगः = असौ योगः, त्वया = भवता, साम्येन = समत्वेन (उपलक्षितः), प्रोक्तः = उपदिष्टः, चञ्चलत्वात् = (मनसः) अस्थिरत्वात्, एतस्य = अस्य, स्थिराम् =अचलम्, स्थितिम् = अवस्थानम्, अहम् = अहम् (अर्जुनः), न पश्यामि = न जानामि ।

**अन्वयः** - मधुसूदन ! यः अयं योगः त्वया साम्येन प्रोक्तः मनसः चञ्चलत्वात् एतस्य स्थिरां स्थितिं अहं न पश्यामि ।

**तात्पर्यम्** - हे कृष्ण ! भवता अधुना साम्येन उपेतः यः योगः प्रोक्तः तस्य स्थिरा स्थितिः भवेत् इति मम निर्णयो नास्ति । यतः मनः अत्यन्तं चञ्चलम् । अतः तादृशस्य योगस्य अपि स्थितिः अस्थिरा एव भवेत् ।

**प्रश्नाः -**

6.33.1. कृष्णेन कीदृशो योगः प्रोक्तः ? 6.33.2. अर्जुनः योगस्य कीदृशीं स्थितिं न पश्यति ?

6.33.3. अर्जुनः कस्मात् योगस्य स्थिरां स्थितिं न पश्यति ? 6.33.4. अर्जुनः मनसः चञ्चलत्वात् किं न पश्यति ?

**व्याकरणम् -**

**(क) सन्धिः** योऽयम् - यः + अयम् विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः, पूर्वरूपं च
एतस्याहम् - एतस्य + अहम् सवर्णदीर्घसन्धिः

**(ख) समासः** मधुसूदन - दृश्यताम् - 1.35

**(ग) कृदन्तः** प्रोक्तः - दृश्यताम् - 3.3
स्थितिम् - दृश्यताम् - 2.72

**(घ) तद्धितान्तः** साम्येन - दृश्यताम् - 5.19
चञ्चलत्वात् - चञ्चल + त्व (भावे) । चञ्चलस्य भावः इत्यर्थः ।

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥6.34॥**

**पदार्थः** - कृष्ण = हे कृष्ण ! मनः हि = चित्तं तावत्, चञ्चलम् = अस्थिरम्, बलवत् = प्रबलम्, दृढम् = दृढम्, प्रमाथि = प्रमथनशीलम्, अहम् = अहम्, तस्य = मनसः, निग्रहम् = निरोधम्, वायोः इव =वातस्य निरोधम् इव, सुदुष्करम् = असाध्यम्, मन्ये = भावयामि ।

**अन्वयः** - कृष्ण ! मनः हि चञ्चलं बलवत् दृढं प्रमाथि । अहं तस्य निग्रहं वायोः इव सुदुष्करं मन्ये ।

**तात्पर्यम्** - हे कृष्ण ! मनः अत्यन्तं चञ्चलं, प्रमथनशीलं च । तद् नितरां बलवत् । केनापि नियन्तुम् अशक्यम् । अच्छेद्यमपि तत् । एवम्भूतस्य मनसः निग्रहः वायोः निग्रहः इव अत्यन्तं दुष्करः इति अहं मन्ये ।

**प्रश्नाः -**

6.34.1. मनः कीदृशम् ? 6.34.2. मनसः निग्रहः कीदृशः ?

6.34.3. मनसः निग्रहः कस्य इव सुदुष्करः ? 6.34.4. कस्य निग्रहः वायोः निग्रहः इव सुदुष्करः ?

**व्याकरणम् -**

**(क) सन्धिः** बलवद् दृढम् - बलवत् + दृढम् जश्त्वसन्धिः
तस्याहम् - तस्य + अहम् सवर्णदीर्घसन्धिः
वायोरिव - वायोः + इव विसर्गसन्धिः (रेफः)

**(ख) तद्धितान्तः** बलवत् - बल + मतुप् । बलम् अस्य अस्मिन् वा अस्ति ।

**श्रीभगवान् उवाच - असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥6.35॥**

**पदार्थः** - महाबाहो = हे अर्जुन ! असंशयम् = निस्सन्देहम्, मनः = अन्तःकरणम्, दुर्निग्रहम् = दुर्निरोधम्, चलम् = चञ्चलम्, कौन्तेय = हे कुन्तीपुत्र, तु = परन्तु, अभ्यासेन = आवृत्त्या, वैराग्येण च = वितृष्णया च, गृह्यते = वशीक्रियते ।

**अन्वयः** - महाबाहो ! असंशयम् मनः दुर्निग्रहं चलम् । कौन्तेय ! अभ्यासेन तु वैराग्येण च गृह्यते ।

**तात्पर्यम्** - हे अर्जुन ! मनः नियन्त्रयितुम् अशक्यं चञ्चलं च इत्यत्र संशयः नास्ति । तथापि अभ्यासेन वैराग्येण च तस्य नियन्त्रणं शक्यं भवति ।

**प्रश्नाः** -

6.35.1. कृष्णस्य मतेन मनः कीदृशम् ?
6.36.2. दुर्निग्रहं चलं च किम् ?
6.35.3. मनः केन केन गृह्यते ?
6.35.4. महाबाहो इति कृष्णेन कृतं सम्बोधनं कस्य ?
6.35.5. कुन्त्याः अपत्यं पुमान् केन शब्देन उच्यते ?

**व्याकरणम्** -

**(क) सन्धिः** मनो दुर्निग्रहम् - मनः + दुर्निग्रहम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** महाबाहुः - महान्तौ बाहू यस्य सः - बहुव्रीहिः ।
असंशयम् - न विद्यते संशयः यथा भवति तथा इति क्रियाविशेषणम् । क्रिया अत्र कथयत्यादिः ।

**(घ) तद्धितान्तः** कौन्तेय - दृश्यताम् - 1.27
वैराग्येण - विराग + ष्यञ् (भावे) । विरागस्य भावः, तेन ।

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥6.36॥**

**पदार्थः** - असंयतात्मना = अनिरुद्धचित्तेन, योगः = समाधिः, दुष्प्रापः इति = दुर्लभः इति, मे मतिः = मम आशयः, यतता = प्रयत्नवता, वश्यात्मना तु = निगृहीतचित्तेन पुनः, उपायतः = साधनेन, अवाप्तुम्= लब्धुम्, शक्यः = साध्यः ।

**अन्वयः** - असंयतात्मना योगः दुष्प्रापः इति मे मतिः । यतता वश्यात्मना तु उपायतः अवाप्तुं शक्यः ।

**तात्पर्यम्** - अभ्यासेन वैराग्येण च यो मनः निग्रहीतुं न शक्नोति तस्य योगः दुर्लभः किन्तु प्रयत्नशीलेन निगृहीतचित्तेन पुरुषेण साधनम् अवलम्ब्य सः योगः प्राप्तुं शक्यः इति मे मतम् ।

**प्रश्नाः** -

6.36.1. असंयात्मना कः दुष्प्रापः ?
6.36.2. योगः केन दुष्प्रापः ?
6.36.3. योगः असंयतात्मना दुष्प्राप इति कस्य मतिः ?
6.36.4. योगः केन अवाप्तुं शक्यः ?
6.36.5. यतता वश्यात्मना योगः कथम् अवाप्तुं शक्यः ?

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | योगो दुष्प्रापः | – योगः + दुष्प्रापः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | दुष्प्राप इति | – दुष्प्रापः + इति | विसर्गसन्धिः (लोपः) |
| | शक्योऽवाप्तुम् | – शक्यः + अवाप्तुम् | विसर्गसन्धिः (सकारः) रेफः उकारः गुणः पूर्वरूपं च |

**अर्जुन उवाच** – **अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥6.37॥**

**पदार्थः** – कृष्ण = हे कृष्ण ! श्रद्धया = आसक्त्या, उपेतः = युक्तः, अयतिः = प्रयत्नरहितः, योगात् = योगमार्गात्, चलितमानसः = भ्रष्टचित्तः, योगसंसिद्धिम् = योगफलम्, अप्राप्य = अलब्ध्वा, काम् = कीदृशीम्, गतिम् = स्थितिम्, गच्छति = प्राप्नोति ।

**अन्वयः** – कृष्ण ! श्रद्धया उपेतः अयतिः योगात् चलितमानसः योगसंसिद्धिम् अप्राप्य कां गतिं गच्छति ?

**तात्पर्यम्** – हे कृष्ण ! श्रद्धया युक्तः अपि यः अल्पप्रयत्नः भवति, तेन च यस्य मनः योगात् चलितं भवति सः योगस्य फलं ज्ञानं न प्राप्नोति । तस्य का गतिः भवति ?

**प्रश्नाः** –

6.37.1. योगसंसिद्धिं कः न प्राप्नोति ?    6.37.2. अयतिः कस्मात् चलितमानसो भवति ?

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | श्रद्धयोपेतः | – श्रद्धया + उपेतः | गुणसन्धिः |
| | श्रद्धयोपेतो योगात् | – श्रद्धयोपेतः + योगात् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | चलितमानसः | – चलितं मानसं यस्य सः – बहुव्रीहिः । | |
| | अप्राप्य | – न प्राप्य – नञ्तत्पुरुषः । | |
| | योगसंसिद्धिम् | – योगस्य संसिद्धिः, ताम् – षष्ठीतत्पुरुषः । | |
| **(ग) कृदन्तः** | उपेतः | – उप + इ + क्त । (कर्तरि) | |
| | चलितः | – चल् + क्त । (कर्तरि) | |
| | प्राप्य | – दृश्यताम् – 2.57 | |
| | संसिद्धिः | – दृश्यताम् – 3.20 | |
| **(घ) तद्धितान्तः** | मानसम् | – दृश्यताम् –1.47 | |

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥6.38॥**

**अन्वयः** – महाबाहो ! उभयविभ्रष्टः अप्रतिष्ठः ब्रह्मणः पथि विमूढः छिन्नाभ्रमिव न नश्यति कच्चित् ।

**पदार्थः** – महाबाहो = दीर्घबाहो ! (कृष्ण) उभयविभ्रष्टः = मार्गद्वयप्रच्युतः, अप्रतिष्ठः = निराश्रयः, ब्रह्मणः = परमात्मनः, पथि = अध्वनि, विमूढः = सम्मूढः, छिन्नाभ्रम् इव = भिन्नमेघः इव, न नश्यति कच्चित् = न प्रणश्यति किम् ।

**तात्पर्यम्** – ब्रह्मप्राप्तिमार्गे मोहमापन्नः निराश्रयः कर्ममार्गात् योगमार्गात् च यः विभ्रष्टः सः वायुना विच्छिन्नः मेघखण्डः इव। सः न नश्यति किम् ?

**प्रश्नाः** –

6.38.1. उभयविभ्रष्टः कस्य पथि विमूढो भवति ? 6.38.2. उभयविभ्रष्टः किमिव नश्यतीति अर्जुनः अभिप्रैति ?
6.38.3.अप्रतिष्ठः कः ?

**व्याकरणम्** –

**(क) सन्धिः** कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रम् – कच्चित् + न कच्चिन्न अनुनासिकसन्धिः
– कच्चिन्न + उभयविभ्रष्टः गुणसन्धिः
– कच्चिन्नोभयविभ्रष्टः + छिन्नाभ्रम्
विसर्गसन्धिः (सकारः) श्चुत्वम्
अप्रतिष्ठो महाबाहो – अप्रतिष्ठः + महाबाहो
विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः
विमूढो ब्रह्मणः – विमूढः + ब्रह्मणः विसर्गसन्धिः(सकारः) रेफः उकारः गुणः

**(ख) समासः** उभयविभ्रष्टः – उभयस्मात् विभ्रष्टः – पञ्चमीतत्पुरुषः।
छिन्नाभ्रम् – छिन्नम् अभ्रम् – कर्मधारयः।
अप्रतिष्ठः – न विद्यते प्रतिष्ठा यस्य सः – नञ्तत्पुरुषः।
महाबाहो – दृश्यताम् – 6.35

**(ग) कृदन्तः** विमूढः – दृश्यताम् – 3.6

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥6.39॥**

**पदार्थः** – कृष्ण = हे कृष्ण ! मे = मम, एतत् = पूर्वोक्ताकारकम्, संशयम् = सन्देहम्, अशेषतः = समग्रम्, छेत्तुम् = परिहर्तुम्, अर्हसि = योग्यः असि, हि = यस्मात्, अस्य = एतस्य, संशयस्य = सन्देहस्य, त्वदन्यः = भवतोऽन्यः, छेत्ता = नाशयिता, न उपपद्यते = न विद्यते।

**अन्वयः** – कृष्ण ! एतत् मे संशयम् अशेषतः छेत्तुम् अर्हसि। त्वदन्यः हि अस्य संशयस्य छेत्ता न उपपद्यते।

**तात्पर्यम्** – मम एतं संशयं निरवशेषम् अपनेतुं भवान् एव अर्हति। ऋते भवतः अस्य संशयस्य अपनेता अन्यः कोऽपि नैव विद्यते।

**प्रश्नाः** –

6.39.1. कृष्णः कं छेत्तुम् अर्हति ? 6.39.2. कृष्णः संशयं कथं छेत्तुमर्हति ?
6.39.3. अर्जुनस्य संशयं कः छेत्तुम् अर्हति ? 6.39.4. संशयस्य छेत्ता कस्मात् अन्यः न वर्तते ?
6.39.5. अत्र सम्बोधनपदं किम् ?

**व्याकरणम्** –

**(क) सन्धिः** एतन्मे – एतत् + मे अनुनासिकसन्धिः

| | | | | |
|---|---|---|---|---|
| | अर्हस्यशेषतः | – | अर्हसि + अशेषतः | यण्सन्धिः |
| | त्वदन्यः | – | त्वत् + अन्यः | जश्त्वसन्धिः |
| | संशयस्यास्य | – | संशयस्य + अस्य | सवर्णदीर्घसन्धिः |
| | ह्युपपद्यते | – | हि + उपपद्यते | यण्सन्धिः |
| **(ख) समासः** | अशेषतः | – | न शेषः, तम् अशेषम्, ततः स्वार्थे तसिः । | |
| **(ग) कृदन्तः** | छेत्तुम् | – | छिद् + तुमुन् । | |
| | छेत्ता | – | छिद् + तृच् । (कर्तरि) | |

**श्रीभगवान् उवाच – पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ।।6.40।।**

**पदार्थः** – पार्थ = हे अर्जुन ! इह = अत्र, तस्य = तादृशस्य योगभ्रष्टस्य, विनाशः = नाशः, न एव विद्यते = नास्ति एव, अमुत्र = परलोके, न = न भवति एव, तात = वत्स ! हि = यस्मात्, कल्याणकृत् = शुभकृत्, कश्चित् = कोऽपि, दुर्गतिम् = कुत्सितगतिम्, न गच्छति = न प्राप्नोति ।

**अन्वयः** – पार्थ ! इह तस्य विनाशः न एव विद्यते । अमुत्र न । तात ! कल्याणकृत् हि कश्चित् दुर्गतिं न गच्छति।

**तात्पर्यम्** – हे अर्जुन ! यः योगमार्गात् भ्रष्टः भवति तस्य इह लोके परस्मिन् लोके वा पतनम्, अर्थात् पूर्वस्माद् हीनजन्मप्राप्तिः न भवति । यतः हे तात ! शुभस्य कर्ता कोऽपि जनः कथञ्चिदपि दुर्गतिं न प्राप्नोति ।

**प्रश्नाः** –

6.40.1. उभयविभ्रष्टस्य कः न विद्यते ?
6.40.2. उभयविभ्रष्टस्य कुत्र कुत्र विनाशो न विद्यते ?
6.40.3. कल्याणकृत् किं न गच्छति ?
6.40.4. कः दुर्गतिं न गच्छति ?
6.40.5. तात इति शब्देन सम्बोधनं कमुद्दिश्य ?

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | नैवेह | – | न + एव | वृद्धिसन्धिः |
| | | | नैव + इह | गुणसन्धिः |
| | नामुत्र | – | न + अमुत्र | सवर्णदीर्घसन्धिः |
| | विनाशस्तस्य | – | विनाशः + तस्य | विसर्गसन्धिः (सकारः) |
| | कश्चिद्दुर्गतिम् | – | कश्चित् + दुर्गतिम् | जश्त्वसन्धिः |
| **(ख) समासः** | कल्याणकृत् | – | कल्याणं करोति – कर्तरि क्विप् उपपदसमासश्च । | |
| | दुर्गतिम् | – | दुष्टा गतिः, तम् – प्रादिसमासः । | |
| **(ग) कृदन्तः** | विनाशः | – | दृश्यताम् – 2.17 | |
| **(घ) तद्धितान्तः** | पार्थ | – | दृश्यताम् – 1.25 | |

**प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।।6.41।।**

**पदार्थः** – योगभ्रष्टः = योगात् च्युतः, पुण्यकृताम् = पुण्यकर्मणाम्, लोकान् = भुवनानि, प्राप्य = लब्ध्वा, शाश्वतीः = शाश्वतीः, समाः = वत्सरान्, उषित्वा = वासम् अनुभूय, शुचीनाम् = पवित्राणाम्, श्रीमताम् = विभूतिमताम्, गेहे = गृहे, अभिजायते = उत्पद्यते ।

**अन्वयः** – योगभ्रष्टः पुण्यकृतां लोकान् प्राप्य शाश्वतीः समाः उषित्वा शुचीनां श्रीमतां गेहे अभिजायते ।

**तात्पर्यम्** – सः योगभ्रष्टः पुण्यकर्मिभिः प्राप्यमाणान् लोकान् प्राप्य तत्र अनेकसंवत्सरं वसति । ततः सदाचारसम्पन्नानां धनिनां गृहे जन्म प्राप्नोति ।

**प्रश्नाः** –

6.41.1. योगभ्रष्टः केषां लोकान् प्राप्य वसति ?
6.41.2. योगभ्रष्टः केषां गेहे जायते ?
6.41.3. योगभ्रष्टः पुण्यकृतां लोकान् प्राप्य कियन्तं कालं वसति ?
6.41.4. शुचीनां श्रीमतां गेहे कः अभिजायते ?

**व्याकरणम्** –

**(क) सन्धिः** पुण्यकृताँल्लोकान् – पुण्यकृताम् + लोकान् अनुनासिकसन्धिः
योगभ्रष्टोऽभिजायते – योगभ्रष्टः + अभिजायते
विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

**(ख) समासः** पुण्यकृताम् – पुण्यं कुर्वन्ति इति पुण्यकृतः, तेषाम् – कर्तरि क्विप् उपपदसमासश्च ।
योगभ्रष्टः – योगात् भ्रष्टः – पञ्चमीतत्पुरुषः ।

**(ग) कृदन्तः** प्राप्य – दृश्यताम् – 2.57
उषित्वा – वस् + क्त्वा ।

**(घ) तद्धितान्तः** शाश्वतीः – शश्वत् + अण् + ङीप् (स्त्रीत्वे) ताः । शश्वद् भवाः इत्यर्थः ।
श्रीमताम् – श्री + मतुप्, तेषाम् । श्रीः एषाम् एषु वा अस्ति ।

**अथवा योगिनामेव कुले भवति धीमताम् ।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥6.42॥**

**पदार्थः** – अथवा = यद्वा, धीमताम् = बुद्धिमताम्, योगिनाम् = युक्तानाम्, कुले एव = वंशे एव, भवति = जायते, यत् एतत् हि = यदिदम्, ईदृशम् = एवंविधम्, जन्म = जन्म, लोके = भुवने, दुर्लभतरम् = अत्यन्तं दुष्प्रापम् ।

**अन्वयः** – अथवा धीमतां योगिनां कुले एव भवति । यत् एतत् ईदृशं हि जन्म लोके दुर्लभतरम् ।

**तात्पर्यम्** – अथवा ब्रह्मविद्यावतां योगिनां कुले जन्म प्राप्नोति । एवं योगिनां कुले जन्मप्राप्तिः तु अत्यन्तं दुर्लभा ।

**प्रश्नाः** –

6.42.1. योगभ्रष्टः कुत्र भवति ?
6.42.2. योगभ्रष्टः कीदृशानां धीमतां कुले भवति ?
6.42.3. किं दुर्लभतरम् ?
6.42.4. कीदृशं जन्म दुर्लभतरम् ?

**व्याकरणम्** –

**(क) सन्धिः** एतद्धि – एतत् + हि पूर्वसवर्णसन्धिः

यदीदृशम् - यत् + ईदृशम् जश्त्वसन्धिः

(ख) तद्धितान्तः धीमताम् - धी + मतुप्। धीः एषाम् एषु वा अस्ति।

दुर्लभतरम् - दुर्लभ + तरप्। (अतिशये)

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥6.43॥**

**पदार्थः** - कुरुनन्दन = हे अर्जुन ! तत्र = तत्र कुले, पौर्वदेहिकम् = पूर्वशरीरसम्बन्धिनम्, तम् = तम्, बुद्धिसंयोगम् = मतिसम्बन्धम्, लभते = प्राप्नोति, ततः च = तस्मात्, संसिद्धौ = योगसिद्धौ, भूयः = अधिकम्, यतते = प्रयत्नं करोति।

**अन्वयः** - कुरुनन्दन ! तत्र तं पौर्वदेहिकं बुद्धिसंयोगं लभते। ततः च संसिद्धौ भूयः यतते।

**तात्पर्यम्** - हे अर्जुन ! योऽयं योगभ्रष्टः श्रीमतां योगिनां वा कुले जातः पूर्वस्मिन् देहे या आसीत् तामेव आत्मविषयिकां बुद्धिं प्राप्नोति। ततः सः मोक्षार्थं प्रयत्नं करोति।

**प्रश्नाः** -

6.43.1. तत्र जन्मनि कीदृशं बुद्धिसंयोगं लभते ?
6.43.2. तत्र जन्मनि पौर्वदेहिकं कं लभते ?
6.43.3. कुत्र योगभ्रष्टः पौर्वदेहिकं बुद्धिसंयोगं लभते ?
6.43.4. तत्र जन्मनि स योगभ्रष्टः किं करोति ?

**व्याकरणम्** -

(क) सन्धिः ततो भूयः - ततः + भूयः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

(ख) समासः कुरुनन्दन - दृश्यताम् - 2.41

बुद्धिसंयोगम् - बुद्धेः संयोगः, तम् - षष्ठीतत्पुरुषः।

(ग) कृदन्तः संसिद्धौ - दृश्यताम् - 3.20

(घ) तद्धितान्तः पौर्वदेहिकम् - पूर्वदेह + ठक् (भवः)। पूर्वदेहे भवः, तम्।

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥6.44॥**

**पदार्थः** - सः = तादृशः पुरुषः, अवशः अपि = अनधीनोऽपि, तेन = तेन, पूर्वाभ्यासेन एव =पूर्वजन्मसंस्कारेणैव, ह्रियते = आकृष्यते, योगस्य = योगमार्गस्य, जिज्ञासुः अपि = ज्ञानेच्छुः अपि, शब्दब्रह्म=कर्मप्रतिपादकवेदभागम्, अतिवर्तते हि = अतिक्राम्यति खलु।

**अन्वयः** - सः अवशः अपि तेन पूर्वाभ्यासेन एव ह्रियते। योगस्य जिज्ञासुः अपि शब्दब्रह्म अतिवर्तते हि।

**तात्पर्यम्** - सः योगभ्रष्टः जन्मान्तरीयाभ्यासस्य वशात् विषयाणामभिमुखोऽपि तस्मिन् जन्मनि योगम् एव अभिगच्छति। योगस्य जिज्ञासुः अपि सः वेदोक्तकर्मफलम् अतिक्रम्य वर्तते। कर्माधिकारम् उपेक्ष्य ज्ञानाधिकारे एव निष्ठां करोति इत्यर्थः।

**माध्वमतम्**- ध्यानयोगस्य जिज्ञासुरपि परं ब्रह्म प्राप्नोति, किमु योगस्य अनुष्ठाता ?

**रामानुजीयमतम्** - शब्दब्रह्म = शब्दाभिलापयोग्यम्, ब्रह्मप्रकृतिः इति यावत्।

**प्रश्नाः** –

6.43.1. अवशः सः केन ह्रियते ? 6.43.2. पूर्वाभ्यासेन कीदृशोऽपि सः ह्रियते ?
6.43.3. योगं जिज्ञासुः किमतिवर्तते ? 6.43.4. कं जिज्ञासुः शब्दब्रह्म अतिवर्तते ?

**व्याकरणम्** –

**(क) सन्धिः** तेनैव – तेन + एव वृद्धिसन्धिः
ह्यवशोऽपि – ह्यवशः + अपि विसर्गसन्धिः (सकारः) रेफः उकारः गुणः पूर्वरूपं च
ह्यवशः – हि + अवशः यण्सन्धिः
जिज्ञासुरपि – जिज्ञासुः + अपि विसर्गसन्धिः (रेफः)
शब्दब्रह्मातिवर्तते – शब्दब्रह्म + अतिवर्तते सवर्णदीर्घसन्धिः

**(ख) समासः** पूर्वाभ्यासेन – पूर्वः अभ्यासः – कर्मधारयः।
शब्दब्रह्म – शब्दरूपं ब्रह्म – मध्यमपदलोपी तत्पुरुषः।

**(ग) कृदन्तः** अवशः – दृश्यताम् – 3.5
जिज्ञासुः – ज्ञा + सन् इच्छायाम् + उ। (कर्तरि)

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥6.45॥**

**पदार्थः** – संशुद्धकिल्बिषः = विनष्टपापः, प्रयत्नात् = अधिकं, यतमानः = प्रवर्तमानः, योगी तु = युक्तः तु, अनेकजन्मसंसिद्धः = नानाजन्मसुपरिशुद्धः, ततः = तस्मात् अनन्तरम्, पराम् = प्रकृष्टम्, गतिम् =स्थानम्, याति = गच्छति।

**अन्वयः** – संशुद्धकिल्बिषः प्रयत्नात् यतमानः योगी तु अनेकजन्मसंसिद्धः ततः परां गतिं याति।

**तात्पर्यम्** – पूर्वोक्तप्रकारेण यत्नेन योगे पुनः पुनः प्रवर्तमानस्य योगिनः सर्वाणि अपि पापानि विनश्यन्ति। विनष्टपापः सः बहुषु जन्मसु शुद्धो भूत्वा मुक्तिरूपां परमां गतिं प्राप्नोति।

**प्रश्नाः** –

6.45.1. योगी ततः किं याति ? 6.45.2. योगी कीदृशः सन् परां गतिं याति ?
6.45.3. प्रयत्नात् यतमानः योगी कीदृशो भवति ? 6.45.4. संसिद्धकिल्बिषः कः भवति ?
6.45.5. अनेकजन्मसंसिद्धः योगी कीदृशीं गतिं याति ? 6.45.6. परा गतिः का ?

**व्याकरणम्** –

**(क) सन्धिः** प्रयत्नाद्यतमानस्तु – प्रयत्नात् + यतमानः जश्त्वस्न्धिः
– प्रयत्नाद्यतमानः + तु विसर्गसन्धिः (सकारः)
अनेकजन्मसंसिद्धस्ततो याति – अनेकजन्मसंसिद्धः + ततः विसर्गसन्धिः (सकारः)
– अनेकजन्मसंसिद्धस्ततः + याति
विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** संशुद्धकिल्बिषः – संशुद्धं किल्बिषं यस्य सः – बहुव्रीहिः ।
अनेकजन्मसंसिद्धः – अनेकं जन्म – कर्मधारयः ।
– अनेकजन्मनि संसिद्धः – सप्तमीतत्पुरुषः ।

**(ग) कृदन्तः** यतमानः – यत् + लट्, शानच् (कर्तरि) ।

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥6.46॥**

**पदार्थः** – योगी = योगी, तपस्विभ्यः = तापसेभ्यः, अधिकः = प्रकृष्टः, मतः = इष्टः, ज्ञानिभ्यः अपि =पण्डितेभ्यः अपि, अधिकः = प्रकृष्टः, कर्मिभ्यः च = अपि, अधिकः = प्रकृष्टः, अर्जुन = हे अर्जुन ! तस्मात् = हेतोः, योगी = ध्यानयोगी, भव = जायस्व ।

**अन्वयः** – योगी तपस्विभ्यः अधिकः मतः । ज्ञानिभ्यः अपि अधिकः । कर्मिभ्यः च अधिकः । अर्जुन ! तस्मात् योगी भव ।

**तात्पर्यम्** – कृच्छ्रचान्द्रायणादिरूपं तपः आचरद्भ्यः अपि योगी अधिकः । शास्त्रे पण्डितेभ्यः अपि योगी अधिकः । अग्निहोत्रादिकर्म आचरद्भ्यः अपि योगी अधिकः । अतः हे अर्जुन ! त्वं योगी भव ।

**प्रश्नाः** –

6.46.1. तपस्विभ्यः अधिकः कः ?
6.46.2. ज्ञानिभ्योऽपि अधिकः कः ?
6.46.3. कर्मिभ्योऽपि अधिकः कः ?
6.46.4. योगी केभ्यः केभ्यः अधिकः ?
6.46.5. योगी सर्वेभ्योऽपि अधिक इति वदन् कृष्णः अर्जुनाय किम् आशंसति ?

**व्याकरणम्** –

**(क) सन्धिः** तपस्विभ्योऽधिको योगी – तपस्विभ्यः+अधिकः विसर्गसन्धिः(सकारः)रेफः उकारः गुणः पूर्वरूपं च
– तपस्विभ्योऽधिकः + योगी विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः
ज्ञानिभ्योऽपि – ज्ञानिभ्यः + अपि विसर्गसन्धिः(सकारः) रेफः उकारः गुणः पूर्वरूपं च
मतोऽधिकः – मतः +अधिकः विसर्गसन्धिः (सकारः) रेफः उकारः गुणः पूर्वरूपं च
कर्मिभ्यश्चाधिको योगी – कर्मिभ्यश्चाधिकः + योगी विसर्गसन्धिः(सकारः) रेफः उकारः गुणः
कर्मिभ्यश्चाधिकः – कर्मिभ्यः+च कर्मिभ्यश्च विसर्गसन्धिः (सकारः) श्चुत्वम्
– कर्मिभ्यश्च + अधिकः सवर्णदीर्घसन्धिः
तस्माद्योगी – तस्मात् + योगी जश्त्वसन्धिः
भवार्जुन – भव + अर्जुन सवर्णदीर्घसन्धिः

**(ख) तद्धितान्तः** तपस्विभ्यः – तपस् + विनि (मतुबर्थे), तेभ्यः । तपः एषाम् एषु वा अस्ति ।
ज्ञानिभ्यः – दृश्यताम् – 3.39
अधिकः – दृश्यताम् – 6.22
कर्मिभ्यः – कर्मन् + इनि (मतुबर्थे), तेभ्यः । कर्म एषाम् एषु वा अस्ति ।

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥6.47॥**

**पदार्थः** - सर्वेषाम् = सकलानाम्, योगिनाम् अपि = युक्तानाम् अपि, यः = यः पुरुषः, श्रद्धावान् = श्रद्धालुः सन्, मद्गतेन = मयि स्थितेन, अन्तरात्मना = चित्तेन, माम् = माम्, भजते = सेवते, सः = सः पुरुषः, मे = मम, युक्ततमः = आप्ततमः, मतः = अभिमतः ।

**अन्वयः** - सर्वेषां योगिनाम् अपि यः श्रद्धावान् मद्गतेन अन्तरात्मना मां भजते सः मे युक्ततमः मतः ।

**तात्पर्यम्** - योगिषु अपि यः वासुदेवे मयि श्रद्धानः सन् मामेव समाहितान्तःकरणः सन् भजते सः मम अतिशयेन आप्तः भवति ।

**प्रश्नाः** -

6.47.1. कृष्णस्य कः युक्ततमः ?
6.47.2. केषां श्रद्धावान् भजमानः कृष्णस्य युक्ततमः ?
6.47.3. श्रद्धावान् कीदृशेन अन्तरात्मना कृष्णस्य युक्ततमो भवति ?

**व्याकरणम्** -

| | | |
|---|---|---|
| **(क) सन्धिः** | मद्गतेनान्तरात्मना | - मद्गतेन + अन्तरात्मना सवर्णदीर्घसन्धिः |
| | यो माम् | - यः + माम् विसर्गसन्धिः (सकारः) रेफ, उकारः गुणः |
| | स मे | - सः + मे विसर्गसन्धिः (लोपः) |
| | युक्ततमो मतः | - युक्ततमः + मतः विसर्गसन्धिः (सकारः) रेफ, उकारः गुणः |
| **(ख) समासः** | मद्गतेन | - मां गतः, तेन - द्वितीयातत्पुरुषः । |
| **(ग) कृदन्तः** | गतः | - गम्लृ + क्त (कर्तरि) । |
| | मतः | - मन् + क्त (कर्मणि) । |
| **(घ) तद्धितान्तः** | युक्ततमः | - युक्त + तमप् (अतिशये) । |
| | श्रद्धावान् | - श्रद्धा + मतुप् । श्रद्धा अस्य अस्मिन् वा अस्ति । |

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ध्यानयोगो नाम षष्ठोऽध्यायः ॥

श्रीमद्भगवद्गीता

अथ सप्तमोऽध्यायः

## ज्ञानविज्ञानयोगः

**श्रीभगवान् उवाच – मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥7.1॥**

**पदार्थः** – पार्थ = अर्जुन ! मयि = परमेश्वरे, आसक्तमनाः = लग्नचित्तः, योगम् = समाधिम्, युञ्जन् = अभ्यस्यन्, मदाश्रयः = मामेव अवलम्बमानः, असंशयम् = निस्सन्देहम्, समग्रम् = निरवशेषम्, माम् = माम्, यथा = येन प्रकारेण, ज्ञास्यसि = बोधिष्यसि, (तथा) तत् = तेन प्रकारेण एतत्, शृणु = आकर्णय ।

**अन्वयः** – पार्थ ! मयि आसक्तमनाः योगं युञ्जन् मदाश्रयः असंशयं समग्रं मां यथा ज्ञास्यसि तत् शृणु ।

**तात्पर्यम्** – पार्थ ! मयि एव मनः निवेश्य मामेव आश्रयन् समाधिं च कुर्वन् तत्सर्वं निस्संशयं ज्ञातुम् अर्हसि यदहं कथयामि ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | मय्यासक्तमनाः | – | मयि + आसक्तमनाः | यणसन्धिः |
| | तच्छृणु | – | तत् + शृणु | श्चुत्वसन्धिः छत्वसन्धिः |
| **(ख) समासः** | आसक्तमनाः | – | आसक्तं मनः यस्य सः – बहुव्रीहिः । | |
| | मदाश्रयः | – | अहम् आश्रयः यस्य सः – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | युञ्जन् | – | युज् + शतृ (कर्तरि) । | |

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥7.2॥**

**पदार्थः** – अहम् = सर्वेश्वरः अहम्, इदम् = एतत्, सविज्ञानम् = अनुभवसहितम्, ज्ञानम् = परमात्मज्ञानम्, ते = तव, अशेषतः = समग्रम्, वक्ष्यामि = कथयिष्यामि, यत् ज्ञात्वा = यत् अवबुद्ध्य, ज्ञातव्यम् = बोद्धव्यम्, अन्यत् = इतरत्, भूयः = पुनः, इह = अत्र, न अवशिष्यते = परिशिष्टं न भवति ।

**अन्वयः** – अहम् इदं सविज्ञानं ज्ञानं ते अशेषतः वक्ष्यामि यत् ज्ञात्वा अन्यत् ज्ञातव्यं भूयः इह न अवशिष्यते ।

**तात्पर्यम्** – अहम् एतत् अनुभवसहितं परमात्मज्ञानं ते अशेषतः वक्ष्यामि । एतद् यदि जानासि तर्हि पश्चात् अस्मिन् लोके ज्ञातव्यम् अन्यत् किमपि ते न अवशिष्यते ।

**रामानुजीयमतम्** – ज्ञानम् = मद्विषयकं ज्ञानम्, विज्ञानम् = विविक्ताकारविषयकं ज्ञानम् ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | तेऽहम् | – | ते + अहम् | पूर्वरूपसन्धिः |
| | वक्ष्याम्यशेषतः | – | वक्ष्यामि + अशेषतः | यणसन्धिः |
| | यज्ज्ञात्वा | – | यत् + ज्ञात्वा | श्चुत्वसन्धिः, जश्त्वसन्धिः |

| | | | |
|---|---|---|---|
| नेह | - न + इह | गुणसन्धिः |
| भूयोऽन्यत् | - भूयः + अन्यत् | विसर्गसन्धिः(सकारः) रेफः उकारः गुणः, पूर्वरूपं च |
| अन्यज्ज्ञातव्यम् | - अन्यत् + ज्ञातव्यम् | जश्त्वसन्धिः, श्चुत्वसन्धिः |

**(ख) समासः** सविज्ञानम् - विज्ञानेन सहितम् - बहुव्रीहिः।

**(ग) कृदन्तः** ज्ञातव्यम् - ज्ञा + तव्यत्। (कर्मणि)

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥7.3॥**

**पदार्थः** - मनुष्याणाम् = मानवानाम्, सहस्रेषु = सहस्रेषु, कश्चित् = कोऽपि, सिद्धये = सिद्ध्यर्थम्, यतति = प्रयत्नं करोति, यतताम् अपि = प्रयत्नं कुर्वताम् अपि, सिद्धानाम् = ज्ञानिनाम्, कश्चित् = कोऽपि, माम् = माम्, तत्त्वतः = यथावत्, वेत्ति = जानाति।

**अन्वयः** - मनुष्याणां सहस्रेषु कश्चित् सिद्धये यतति। यततामपि सिद्धानां कश्चित् मां तत्त्वतः वेत्ति।

**तात्पर्यम्** - वस्तुतः अहं दुर्ज्ञेयः अस्मि। बहुषु मानवेषु कोऽपि सिद्ध्यर्थं प्रयत्नं करोति। तेन प्रयत्नेन च ये सिद्धिं प्राप्नुवन्ति तेषु अपि कश्चिदेव मां यथावत् ज्ञातुं शक्नोति।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | कश्चिद्यतति | - कश्चित् + यतति | जश्त्वसन्धिः |
| | कश्चिन्माम् | - कश्चित् + माम् | अनुनासिकसन्धिः |
| **(ग) कृदन्तः** | यतताम् | - यती + लट्, (कर्तरि) शतृ, तेषाम्। | |

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥7.4॥**

**पदार्थः** - भूमिः = पृथिवी, आपः = जलम्, अनलः = अग्निः, वायुः = मरुत्, खम् = आकाशः, मनः = चित्तम्, बुद्धिः एव च = मतिः च, अहङ्कारः इति = अहङ्कारः इति, इयम् = एषा, मे = मम, प्रकृतिः = शक्तिः, अष्टधा = अष्टभिः प्रकारैः, भिन्ना = भेदं गता (वर्तते)।

**अन्वयः** - भूमिः आपः अनलः वायुः खं मनः बुद्धिः अहङ्कारः च एव इति इयं मे प्रकृतिः अष्टधा भिन्ना।

**तात्पर्यम्** - पृथिवी जलम् अग्निः वायुः आकाशः मनः बुद्धिः अहङ्कारः च इति मम प्रकृतिः अष्टभिः प्रकारैः भिन्ना अस्ति।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | भूमिरापः | - भूमिः + आपः | विसर्गसन्धिः (रेफः) |
| | आपोऽनलः | - आपः + अनलः | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः, पूर्वरूपं च |
| | अनलो वायुः | - अनलः + वायुः | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः |
| | मनो बुद्धिः | - मनः + बुद्धिः | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः |

| | | | |
|---|---|---|---|
| बुद्धिरेव | - | बुद्धिः + एव | विसर्गसन्धिः (रेफः) |
| अहङ्कार इति | - | अहङ्कारः + इति | विसर्गसन्धिः (लोपः) |
| इतीयम् | - | इति + इयम् | सवर्णदीर्घसन्धिः |
| प्रकृतिरष्टधा | - | प्रकृतिः + अष्टधा | विसर्गसन्धिः (रेफः) |

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥7.5॥**

**पदार्थः** - महाबाहो = अर्जुन ! इयम् = असौ, अपरा = संसारबन्धनात्मिका, इतः = अस्याः, अन्याम् = भिन्नाम्, प्रकृतिं तु = शक्तिं तु, मे = मम, पराम् = प्रकृष्टाम्, जीवभूताम् = प्राणधारिणीम्, विद्धि = जानीहि, यया = यया प्रकृत्या, इदम् = एतत्, जगत् = भुवनम्, धार्यते = उह्यते ।

**अन्वयः** - महाबाहो ! इयम् अपरा । इतः मे जीवभूताम् अन्यां परां प्रकृतिं विद्धि, यया इदं जगत् धार्यते ।

**तात्पर्यम्** - महाबाहो ! अष्टधा विभक्ता इयं मम प्रकृतिः संसारबन्धनात्मिका अस्ति । अस्याः अन्या अपि मम प्रकृतिः अस्ति । प्रकृष्टा सा एव सर्वेषां प्राणधारिणी अस्ति । तया एव एतद् जगत् धार्यते ।

**व्याकरणम्** -

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | अपरेयम् | - | अपरा + इयम् | गुणसन्धिः |
| | इतस्त्वन्याम् | - | इतः + तु इतस्तु | विसर्गसन्धिः (सकारः) |
| | | - | इतस्तु + अन्याम् | यणसन्धिः |
| | ययेदम् | - | यया + इदम् | गुणसन्धिः |

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥7.6॥**

**पदार्थः** - सर्वाणि = सकलानि, भूतानि = भूतजातानि, एतद्योनीनि इति = एतत्प्रकृतिद्वयसम्भवानि इति, उपधारय = जानीहि, अहम् = अहम्, कृत्स्नस्य = समग्रस्य, जगतः = लोकस्य, प्रभवः = उत्पत्तिकारणम्, तथा = तथा, प्रलयः = विनाशकारणम् ।

**अन्वयः** - सर्वाणि भूतानि एतद्योनीनि इति उपधारय । अहं कृत्स्नस्य जगतः प्रभवः तथा प्रलयः ।

**तात्पर्यम्** - सर्वाणि भूतानि प्रकृतिसम्भवानि इति जानीहि । इदं समग्रं जगत् मत्त एव निर्गच्छति, मय्येव च लीनं भवति ।

**व्याकरणम्** -

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | सर्वाणीत्युपधारय | - | सर्वाणि + इति सर्वाणीति | सवर्णदीर्घसन्धिः |
| | | - | सर्वाणीति + उपधारय | यणसन्धिः |
| | प्रलयस्तथा | - | प्रलयः + तथा | विसर्गसन्धिः (सकारः) |
| **(ख) समासः** | एतद्योनीनि | - | एषा योनिः येषां तानि - बहुव्रीहिः । | |
| **(ग) कृदन्तः** | प्रभवः | - | प्र + भू + अप् । (अपादाने) प्रभवति अस्मात् इत्यर्थः । | |

प्रलयः - प्र + ली + अच् (अधिकरणे) प्रलीयते अत्र इत्यर्थः ।

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥7.7॥**

**पदार्थः** - धनञ्जय = अर्जुन ! मत्तः = परमेश्वरात्, परतरम् = उत्कृष्टतरम्, किञ्चित् = किमपि, अन्यत् = इतरत् वस्तु, न अस्ति = न विद्यते, इदम् = एतत्, सर्वम् = सकलम्, सूत्रे = तन्तौ, मणिगणाः इव = मणिसमूहाः इव, मयि = परमेश्वरे, प्रोतम् = योजितम् ।

**अन्वयः** - धनञ्जय ! मत्तः अन्यत् किञ्चित् परतरं नास्ति । इदं सर्वं सूत्रे मणिगणाः इव मयि प्रोतम् ।

**तात्पर्यम्** - धनञ्जय ! मदपेक्षया अन्यत् वस्तु किमपि उत्कृष्टतरं नास्ति । एतत् सर्वं तन्तौ मणिसमूहाः इव मयि योजितम् ।

**व्याकरणम्** -

**(क) सन्धिः** किञ्चिदस्ति - किञ्चित् + अस्ति जश्त्वसन्धिः
मणिगणा इव - मणिगणाः + इव विसर्गसन्धिः (लोपः)

**(ख) समासः** मणिगणाः - मणीनां गणाः - षष्ठीतत्पुरुषः ।

**(ग) कृदन्तः** प्रोतम् (प्र+ऊतम्) - प्र + वेञ् + क्त । (कर्मणि)

**(घ) तद्धितान्तः** परतरम् - पर + तरप् । (अतिशये) अतिशयेन परम् ।

**रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥7.8॥**

**पदार्थः** - कौन्तेय = कुन्तीपुत्र ! अहम् अप्सु = अहम् उदके, रसः = माधुर्यरसः, शशिसूर्ययोः = चन्द्रार्कयोः, प्रभा= कान्तिः, सर्ववेदेषु = निखिलवेदेषु, प्रणवः = ओङ्कारः, खे = आकाशे, शब्दः = ध्वनिः, नृषु =मानवेषु, पौरुषम् = पुरुषत्वम्, अस्मि = भवामि ।

**अन्वयः** - कौन्तेय ! अहम् अप्सु रसः, शशिसूर्ययोः प्रभा, सर्ववेदेषु प्रणवः, खे शब्दः, नृषु पौरुषम् अस्मि ।

**तात्पर्यम्** - कौन्तेय ! अहम् उदकेषु माधुर्यम्, चन्द्रसूर्ययोः कान्तिः, सर्ववेदेषु ओङ्कारः, आकाशे ध्वनिः, मानवेषु पुरुषत्वं च अस्मि ।

**व्याकरणम्** -

**(क) सन्धिः** रसोऽहम् - रसः + अहम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च
प्रभास्मि - प्रभा + अस्मि सवर्णदीर्घसन्धिः

**(ख) समासः** शशिसूर्ययोः - शशी च सूर्यः च, तयोः - द्वन्द्वः ।
सर्ववेदेषु - सर्वे वेदाः, तेषु - कर्मधारयः ।

**(घ) तद्धितान्तः** पौरुषम् - पुरुष + अण् । (भावे) पुरुषस्य भावः, पुरुषत्वम् इत्यर्थः ।

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥7.9॥**

**पदार्थः** – पृथिव्यां च = भूमौ, पुण्यः = स्वाभाविकः, गन्धः = गन्धः, विभावसौ = सूर्ये, तेजः च = कान्तिःच, अस्मि = भवामि, सर्वभूतेषु = सकलप्राणिषु, जीवनम् = आयुः, तपस्विषु = मुनिषु, तपः च = तपः अपि, अस्मि = भवामि ।

**अन्वयः** – पृथिव्यां च पुण्यः गन्धः विभावसौ तेजः च अस्मि । सर्वभूतेषु जीवनं तपस्विषु तपः च अस्मि ।

**तात्पर्यम्** – अहं पृथिव्यां सुरभिः गन्धः सूर्ये कान्तिः च अस्मि । सकलप्राणिषु आयुः तपस्विषु तपः च अस्मि ।

**माध्वमतम्**– सर्वेषु पदार्थेषु सारभूतः भगवान् इति तस्य माहात्म्यं विशेषतः अग्रे वर्ण्यते ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | पुण्यो गन्धः | – पुण्यः + गन्धः | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः |
| | तेजश्चास्मि | – तेजः + च तेजश्च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | | – तेजश्च + अस्मि | सवर्णदीर्घसन्धिः |
| | तपश्चास्मि | – तपः + च तपश्च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | | तपश्च + अस्मि | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | सर्वभूतेषु | – सर्वाणि भूतानि, तेषु – कर्मधारयः । | |
| **(घ) तद्धितान्तः** | तपस्विषु | – तपस् + विनि । तपः एषाम् एषु वा अस्ति, तेषु । | |

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥7.10॥**

**पदार्थः** – पार्थ = अर्जुन ! सर्वभूतानाम् = सकलप्राणिनाम्, सनातनम् = चिरन्तनम्, बीजम् = प्ररोहकारणम्, मां विद्धि = मां जानीहि, बुद्धिमताम् = धीमताम्, बुद्धिः = धीः, तेजस्विनाम् = प्रगल्भानाम्, तेजः = प्रागल्भ्यम्, अहम् अस्मि = अहं भवामि ।

**अन्वयः** – पार्थ ! सर्वभूतानां सनातनं बीजं मां विद्धि । बुद्धिमतां बुद्धिः तेजस्विनां तेजः अहम् अस्मि ।

**तात्पर्यम्** – पार्थ ! सकलभूतानां चिरन्तनं बीजं मां जानीहि । अहं धीमतां धीः अस्मि तेजस्विनां तेजः च ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | बुद्धिर्बुद्धिमताम् | – बुद्धिः + बुद्धिमताम् | विसर्गसन्धिः (रेफः) |
| | तेजस्तेजस्विनाम् | – तेजः + तेजस्विनाम् | विसर्गसन्धिः (सकारः) |
| **(घ) तद्धितान्तः** | बुद्धिमताम् | – बुद्धि + मतुप् । बुद्धिः एषाम् एषु वा अस्ति, तेषाम् । | |
| | तेजस्विनाम् | – तेजस् + मतुप् । तेजः एषाम् एषु वा अस्ति, तेषाम् । | |

**बलं बलवतां चाहं कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥7.11॥**

**अन्वयः** – भरतर्षभ, अहं बलवतां कामरागविवर्जितं बलं भूतेषु धर्माविरुद्धः कामः च अस्मि ।

**पदार्थः** – भरतर्षभ = भरतश्रेष्ठ ! अहं बलवताम् = अहम् ओजस्विनाम्, कामरागविवर्जितम् = वस्तुनि अभिलाषः, तदाधिक्ये च अभिलाषः ताभ्यां रहितम्, बलम् = सामर्थ्यम्, भूतेषु = प्राणिषु, धर्माविरुद्धः = धर्मानुकूलः, कामः च = इच्छा च, अस्मि = भवामि ।

**तात्पर्यम्** – भरतश्रेष्ठ ! अहम् ओजस्विनां तृष्णारागरहितं सामर्थ्यम् अस्मि । प्राणिषु धर्माविरुद्धा इच्छा अस्मि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | चाहम् | – च + अहम् | सवर्णदीर्घसन्धिः |
| | धर्माविरुद्धो भूतेषु | – धर्माविरुद्धः + भूतेषु | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | कामोऽस्मि | – कामः + अस्मि | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |
| **(ख) समासः** | कामरागविवर्जितम् | – कामश्च रागश्च कामरागौ – द्वन्द्वः । | |
| | | – कामरागाभ्यां विवर्जितम् – तृतीयातत्पुरुषः । | |
| | धर्माविरुद्धः | – न विरुद्धः अविरुद्धः – नञ्तत्पुरुषः । | |
| | | – धर्मस्य अविरुद्धः – षष्ठीतत्पुरुषः । | |

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥7.12॥**

**पदार्थः** – ये च एव = ये पुनः, सात्त्विकाः = सत्त्वात् आगताः, भावाः = पदार्थाः, ये राजसाः = ये रजसः आगताः, तामसाः च = तमसः आगताः च, तान् = पदार्थान्, मत्तः एव इति = मत्तः सम्भूताः इति, विद्धि = जानीहि, तेषु तु = किन्तु तेषु पदार्थेषु, न = न भवामि, ते (पुनः) = भावाः पदार्थाः तु, मयि = मयि । (वर्तन्ते)

**अन्वयः** – ये च एव सात्त्विकाः भावाः ये राजसाः तामसाः च तान् मत्तः एव इति विद्धि । अहं तु तेषु न ते (पुनः) मयि ।

**तात्पर्यम्** – ये सत्त्वात् समुत्पन्नाः शमदमादयः, ये रजसः समुत्पन्नाः दर्पद्वेषादयः, ये च तमसः समुत्पन्नाः शोकमोहादयः भावाः सन्ति ते सर्वेऽपि मत्तः एव जाताः । तथापि नाहं तेषु अधीनः अस्मि । किन्तु ते एव मयि अधीनाः सन्ति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | चैव | – च + एव | वृद्धिसन्धिः |
| | भावा राजसाः | – भावाः + राजसाः | विसर्गसन्धिः (लोपः) |
| | राजसास्तामसाः | – राजसाः + तामसाः | विसर्गसन्धिः (सकारः) |
| | तामसाश्च | – तामसाः + च | विसर्गसन्धिः (सकारः) श्चुत्वसन्धिः |
| | मत्त एवेति | – मत्त + एव | विसर्गसन्धिः (लोपः) |
| | | एव + इति | गुणसन्धिः |
| | त्वहम् | – तु + अहम् | यणसन्धिः |

**(घ) तद्धितान्तः** सात्त्विकाः - सत्त्व + ठक्। (आगताः) सत्त्वात् आगताः इत्यर्थः।
राजसाः - रजस् + अण्। (आगताः) रजसः आगताः इत्यर्थः।
तामसाः - तमस् + अण्। (आगताः) तमसः आगताः इत्यर्थः।

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥7.13॥**

**पदार्थः** - गुणमयैः = गुणविकारैः काममोहादिभिः, त्रिभिः = त्रिविधैः, एभिः = एतैः, भावैः = पदार्थैः, इदम् = एतत्, सर्वम् = सकलम्, जगत् = भुवनम्, मोहितम् = व्यामोहितम्, (तस्मात्) एभ्यः = (तस्मात्) एतेभ्यः, परम् = विलक्षणम्, अव्ययम् = नाशरहितम्, मां न अभिजानाति = मां न वेद।

**अन्वयः** - गुणमयैः त्रिभिः एभिः भावैः इदं सर्वं जगत् मोहितम्। एभ्यः परम् अव्ययं मां न अभिजानाति।

**तात्पर्यम्** - काममोहादयः सत्त्वादीनां गुणानां विकाराः। तैः विभ्रान्ताः इमे जनाः तान् गुणविकारान् अतीत्य वर्तमानं मां ज्ञातुं न शक्नुवन्ति।

**व्याकरणम्** -

**(क) सन्धिः** त्रिभिर्गुणमयैर्भावैरेभिः - त्रिभिः + गुणमयैः विसर्गसन्धिः (रेफः)
- गुणमयैः + भावैः विसर्गसन्धिः (रेफः)
- भावैः + एभिः विसर्गसन्धिः (रेफः)

नाभिजानाति - न + अभिजानाति सवर्णदीर्घसन्धिः

**(ख) समासः** अव्ययम् - न विद्यते व्ययः यस्य सः, तम् - बहुव्रीहिः।

**(घ) तद्धितान्तः** गुणमयैः - गुण + मयट् (विकारः) तैः। गुणानां विकारैः इत्यर्थः।

**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥7.14॥**

**पदार्थः** - दैवी = वैष्णवी, गुणमयी = त्रिगुणात्मिका, एषा = असौ, मम माया = मम मायाशक्तिः, दुरत्यया हि = लङ्घयितुम् अशक्या खलु, ये = ये जनाः, माम् एव = माम् एव, प्रपद्यन्ते = शरणं गच्छन्ति, ते = ते, एताम् = इमाम्, मायाम् = मायाशक्तिम्, तरन्ति = अतिक्राम्यन्ति।

**अन्वयः** - दैवी गुणमयी एषा मम माया दुरत्यया। ये माम् एव प्रपद्यन्ते ते एतां मायां तरन्ति।

**तात्पर्यम्** - एषा लोकोत्तरा गुणत्रयस्वरूपा मम माया केनापि न लङ्घयितुं शक्यते। ये तावत् भक्ताः सन्तः माम् एव शरणम् आगच्छन्ति ते अवश्यम् इमां मायां लङ्घयितुं शक्नुवन्ति।

**माध्वमतम्** - सृष्ट्यादिरूपक्रीडागुणविशिष्टस्य देवस्य प्रियतमा त्रिगुणाभिमानिनी दुर्गा माया इत्युच्यते। सैव भगवतः शरीरं प्राकृतगुणमयमिति एतान् मोहयति। भगवद्भक्ताः एव तस्यानुग्रहेण एतां तरन्ति।

**रामानुजीयमतम्** - माया - प्रकृतिः।

व्याकरणम् –

| | | | |
|---|---|---|---|
| (क) सन्धिः | ह्येषा | – हि + एषा | यणसन्धिः |
| (ग) कृदन्तः | दुरत्यया | – दुर् + अति + इण् + खल्। (कर्मणि) कृच्छ्रेण अत्येतुं शक्या इत्यर्थः। | |
| (घ) तद्धितान्तः | गुणमयी | – गुण + मयट्। (स्वरूपार्थे) गुणस्वरूपा इत्यर्थः। | |

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।**
**माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥7.15॥**

**पदार्थः** – मायया = मायाशक्त्या, अपहृतज्ञानाः = निरस्तज्ञानाः, आसुरम् = हिंसादिरूपम्, भावम् = स्वभावम्, आश्रिताः = प्राप्ताः, दुष्कृतिनः = पापकारिणः, मूढाः = अविवेकिनः, नराधमाः = नीचमानवाः, मां न प्रपद्यन्ते = मां न भजन्ति।

**अन्वयः** – मायया अपहृतज्ञानाः आसुरं भावम् आश्रिताः दुष्कृतिनः मूढाः नराधमाः मां न प्रपद्यन्ते।

**तात्पर्यम्** – मायया येषां ज्ञानम् अपहृतं भवति तादृशाः राक्षसानां स्वभावं प्राप्ताः पापकारिणः अविवेकिनः नीचमानवाः मां न भजन्ति।

व्याकरणम् –

| | | |
|---|---|---|
| (क) सन्धिः | दुष्कृतिनो मूढाः | – दुष्कृतिनः + मूढाः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | माययापहृतज्ञानाः | – मायया + अपहृतज्ञानाः सवर्णदीर्घसन्धिः |
| | अपहृतज्ञाना आसुरम् | – अपहृतज्ञानाः + आसुरम् विसर्गसन्धिः (लोपः) |
| (ख) समासः | दुष्कृतिनः | – दुष्टं कृतं, दुष्कृतम् – प्रादिसमासः। दुष्कृतम् एषाम् एषु वा अस्ति। मतुबर्थे इनिः। |
| | नराधमाः | – नरेषु अधमाः – सप्तमीतत्पुरुषः। |
| | अपहृतज्ञानाः | – अपहृतं ज्ञानं येषां ते – बहुव्रीहिः। |
| (ग) कृदन्तः | मूढाः | – मुह् + क्त (कर्तरि)। |
| | आश्रिताः | – आ + श्रि + क्त (कर्तरि)। |
| (घ) तद्धितान्तः | आसुरम् | – असुर + अण् (इदमर्थे) तम्। असुराणाम् इदम् इत्यर्थः। |

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥7.16॥**

**पदार्थः** – भरतर्षभ = भरतोत्तम! आर्तः = रोगादिपीडितः, जिज्ञासुः = ज्ञातुमिच्छुः, अर्थार्थी = धनाभिलाषी, ज्ञानी च = आत्मज्ञानवान्, (इति) चतुर्विधाः = इति चतुष्प्रकाराः, सुकृतिनः = पुण्यवन्तः, जनाः = मानवाः, माम् = माम्, भजन्ते = सेवन्ते।

**अन्वयः** – भरतर्षभ अर्जुन! आर्तः जिज्ञासुः अर्थार्थी ज्ञानी च (इति) चतुर्विधाः सुकृतिनः जनाः मां भजन्ते।

**तात्पर्यम्** – हे भरतोत्तम अर्जुन! रोगादिग्रस्तः, भगवत्तत्त्वं ज्ञातुम् इच्छुः, धनाभिलाषी, आत्मज्ञानवान् च इत्येते चतुर्विधाः पुण्यकर्माणः जनाः मां भजन्ते।

**रामानुजीयमतम्** – जिज्ञासुः = प्रकृतिवियुक्तं यदात्मस्वरूपं तत्प्राप्तीच्छुः, ज्ञानी = भगवच्छेषैकरसात्मस्वरूपवित्।

**व्याकरणम्** –

**(क) सन्धिः** चतुर्विधा भजन्ते – चतुर्विधाः + भजन्ते विसर्गसन्धिः (लोपः)
सुकृतिनोऽर्जुन – सुकृतिनः + अर्जुन विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च
आर्तो जिज्ञासुः – आर्तः + जिज्ञासुः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
जिज्ञासुरर्थार्थी – जिज्ञासुः + अर्थार्थी विसर्गसन्धिः (रेफः)

**(ख) समासः** चतुर्विधाः – चतस्रः विधाः येषां ते – बहुव्रीहिः ।
सुकृतिनः – सुष्ठु कृतम्, सुकृतम् – प्रादिसमासः ।
सुकृतम् एषाम् एषु वा अस्ति । मतुबर्थे इनिः ।
अर्थार्थी – (असन्निहितः) अर्थः अस्ति इति अर्थी । मतुबर्थे इनिः ।
– अर्थेन अर्थी – तृतीयातत्पुरुषः ।

**(घ) तद्धितान्तः** जिज्ञासुः – ज्ञा + सन् (इच्छायाम्) + उ (कर्तरि) । ज्ञातुम् इच्छुः ।

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥7.17॥**

**पदार्थः** – तेषाम् = तेषु, नित्ययुक्तः = सततयोगी, एकभक्तिः = अनन्यभक्तिः, ज्ञानी = ज्ञानवान्, विशिष्यते = अतिरिच्यते, अहं हि = अहम्, ज्ञानिनः = ज्ञानवतः, अत्यर्थम् = अतिशयेन, प्रियः = अभीष्टः, सः च = सः अपि, मम = मे, प्रियः = अभीष्टः ।

**अन्वयः** – तेषां नित्ययुक्तः एकभक्तिः ज्ञानी विशिष्यते । अहं हि ज्ञानिनः अत्यर्थं प्रियः । सः च मम प्रियः ।

**तात्पर्यम्** – तेषां सततयोगी अनन्यभक्तिः ज्ञानी विशिष्यते । अहं ज्ञानवतः अतीव प्रियः । सोऽपि मम अतीव प्रियः ।

**व्याकरणम्** –

**(क) सन्धिः** नित्ययुक्त एकभक्तिः – नित्ययुक्तः + एकभक्तिः विसर्गसन्धिः (लोपः)
एकभक्तिर्विशिष्यते – एकभक्तिः + विशिष्यते विसर्गसन्धिः (रेफः)
प्रियो हि – प्रियः + हि विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
ज्ञानिनोऽत्यर्थम् – ज्ञानिनः + अत्यर्थम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च
स च – सः + च विसर्गसन्धिः (लोपः)

**(ख) समासः** नित्ययुक्तः – नित्यं युक्तः – सुपूसमासः ।
एकभक्तिः – एकस्मिन् भक्तिः यस्य सः – बहुव्रीहिः ।

(ग) कृदन्तः भक्तिः - भज् + क्तिन्। (भावे)

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥7.18॥**

**पदार्थः** - एते = इमे, सर्वे = सकलाः, उदाराः एव = उत्कृष्टाः एव, ज्ञानी तु = ज्ञानवान् तु, आत्मा एव = आत्मा एव (इति), मे = मम, मतम् = अभिप्रायः, हि = यस्मात्, सः = ज्ञानी, युक्तात्मा = समाहितचित्तः, अनुत्तमाम् = उत्कृष्टाम्, गतिम् = पदम्, मामेव आस्थितः = माम् एव मत्वा प्राप्तः।

**अन्वयः** - एते सर्वे उदाराः एव। ज्ञानी तु मे आत्मा एव (इति) मतम्। सः हि युक्तात्मा अनुत्तमां गतिं माम् एव आस्थितः।

**तात्पर्यम्** - एते सर्वे उत्कृष्टाः एव। ज्ञानवान् तु मत्तः अन्यः न, अपि तु मत्स्वरूपः एव इति मम अभिप्रायः। यतः सः ज्ञानवान् प्राप्यं पदं भगवान् एव इति मामेव आश्रितवान्।

**माध्वमतम्** - चतुर्विधेषु भक्तेषु ज्ञानी मम (भगवतः) अत्यन्तं प्रियः। स हि परमात्मानमेव आश्रयति।

**रामानुजीयमतम्** - ज्ञानी तु आत्मैव इति मे मतम्। तेन विना मम अपि आत्मधारणं न सम्भवति। ततः ममापि स एव आत्मा।

**व्याकरणम्** -

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | सर्व एवैते | - | सर्वे + एव | यान्तवान्तादेशसन्धिः (यलोपः) |
| | | - | एव + एते | वृद्धिसन्धिः |
| | त्वात्मैव | - | तु + आत्मा | यणसन्धिः |
| | | - | आत्मा + एव | यणसन्धिः |
| **(ख) समासः** | युक्तात्मा | - | युक्तः आत्मा यस्य सः - बहुव्रीहिः। | |
| | अनुत्तमाम् | - | न विद्यते उत्तमा यस्याः (यतः) सा, ताम् - बहुव्रीहिः। | |

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥7.19॥**

**पदार्थः** - बहूनाम् = असङ्ख्यानाम्, जन्मनाम् = जन्मनाम्, अन्ते = अवसाने, वासुदेवः = नारायणः, सर्वम् इति = निखिलम् इति, (यः = यः पुरुषः) ज्ञानवान् = ज्ञानयुक्तः, मां प्रपद्यते = मां प्राप्नोति, सः = तादृशः, महात्मा = महानुभावः, सुदुर्लभः = अत्यन्तं दुष्प्रापः।

**अन्वयः** - बहूनां जन्मनाम् अन्ते वासुदेवः सर्वम् इति (यः) ज्ञानवान् मां प्रपद्यते सः महात्मा सुदुर्लभः।

**तात्पर्यम्** - असङ्ख्यानां जन्मनाम् समाप्तौ सत्यां सर्वमपि एतत् वासुदेवः इति ज्ञानयुक्तः मां प्राप्नोति। तादृशः पुरुषः अत्यन्तं दुष्प्रापः।

**माध्वमतम्** - वासुदेवाधीनसत्तामत् इदं जगत् इत्याकारकज्ञानवान् महात्मा सुदुर्लभः।

**व्याकरणम्** –

**(क) सन्धिः** स महात्मा – सः + महात्मा विसर्गसन्धिः (लोपः)

**(ख) समासः** वासुदेवः – वसन्ति अस्मिन् भूतानि इति वासुः। दीव्यति (लसति) इति देवः।
– वासुः देवः – कर्मधारयः।
महात्मा – महान् आत्मा यस्य सः – बहुव्रीहिः।

**(ग) कृदन्तः** सुदुर्लभः – सु + दुर् + लभ् + खल्। (कर्मणि) अत्यन्तं कृच्छ्रेण लब्धुं शक्यः इत्यर्थः।

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥7.20॥**

**पदार्थः** – तैः तैः = अनेकविधैः, कामैः = अभिलाषैः, हृतज्ञानाः = अपगतविवेकाः, स्वया = स्वकीयेन, प्रकृत्या = स्वभावेन, नियताः = नियन्त्रिताः, तं तम् = बहुप्रकारम्, नियमम् = जपोपवासरूपं नियमम्, आस्थाय = आश्रित्य, अन्यदेवताः = इतरदेवताः, प्रपद्यन्ते = भजन्ते।

**अन्वयः** – तैः तैः कामैः हृतज्ञानाः स्वया प्रकृत्या नियताः तं तं नियमम् आस्थाय अन्यदेवताः प्रपद्यन्ते।

**तात्पर्यम्** – अनेकविधैः अभिलाषैः अपगतविवेकाः केचन जनाः स्वस्य स्वभावेन नियन्त्रिताः सन्तः तं तं जपोपवासादिरूपं नियमम् आश्रित्य मां विहाय अन्याः देवताः भजन्ते।

**व्याकरणम्** –

**(क) सन्धिः** कामैस्तैस्तैर्हृतज्ञानाः – कामैः + तैः विसर्गसन्धिः (सकारः)
– कामैस्तैः + तैः विसर्गसन्धिः (सकारः)
– कामैस्तैस्तैः + हृतज्ञानाः विसर्गसन्धिः (रेफः)
प्रपद्यन्तेऽन्यदेवताः – प्रपद्यन्ते + अन्यदेवताः पूर्वरूपसन्धिः

**(ख) समासः** हृतज्ञानाः – हृतं ज्ञानं येषां ते – बहुव्रीहिः।
अन्यदेवताः – अन्याः देवताः – कर्मधारयः।

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥7.21॥**

**पदार्थः** – यः यः भक्तः = यः यः भजनशीलः, यां यां तनुम् = यां यां मूर्तिम्, श्रद्धया = आसक्त्या, अर्चितुम् = आराधयितुम्, इच्छति = अभिलषति, तस्य तस्य = भक्तस्य, ताम् एव = तादृशीम् एव, अचलाम् = स्थिराम्, श्रद्धाम् = आसक्तिम्, विदधामि = करोमि।

**अन्वयः** – यः यः भक्तः यां यां तनुं श्रद्धया अर्चितुम् इच्छति तस्य तस्य ताम् एव अचलां श्रद्धाम् अहं विदधामि।

**तात्पर्यम्** – यः यः भक्तः यां यां मूर्तिं श्रद्धया अर्चितुम् इच्छति तस्य भक्तस्य तादृशीम् एव स्थिरां श्रद्धाम् अहं करोमि।

**व्याकरणम्** –

**(क) सन्धिः** यो यः – यः + यः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

| | | | |
|---|---|---|---|
| | श्रद्धयार्चितुम् | - श्रद्धया + अर्चितुम् | सवर्णदीर्घसन्धिः |
| | तस्याचलाम् | - तस्य + अचलाम् | सवर्णदीर्घसन्धिः |
| | विदधाम्यहम् | - विदधामि + अहम् | यण्सन्धिः |
| **(ख) समासः** | अचलाम् | - न चला, ताम् - नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | श्रद्धा | - श्रत् + धा + अङ् । (भावे) | |

**स तया श्रद्धया युक्तस्तस्या राधनमीहते ।**
**लभते च ततः कामान्मयैव विहितान्हि तान् ॥7.22॥**

**पदार्थः** - सः = सः भक्तः, तया श्रद्धया = तया आसक्त्या, युक्तः = संयुक्तः, तस्याः = एतस्य मूर्तेः, राधनम् = सेवनम्, ईहते = करोति, ततः च = पश्चात्, मया एव = भगवता मया एव, विहितान् = दत्तानि, तान् कामान् = तानि फलानि, लभते हि = प्राप्नोति खलु ।

**अन्वयः** - सः तया श्रद्धया युक्तः तस्याः राधनम् ईहते । ततः च मया एव विहितान् तान् कामान् हि लभते ।

**तात्पर्यम्** - सः भक्तः तया आसक्त्या युक्तः सन् तस्याः देवतातनोः सेवनं करोति । पश्चात् मया एव दत्तानि तानि फलानि प्राप्नोति ।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | स तया | - सः + तया | विसर्गसन्धिः (लोपः) |
| | युक्तस्तस्याः | - युक्तः + तस्याः | विसर्गसन्धिः (सकारः) |
| | तस्या राधनम् | - तस्याः + राधनम् | विसर्गसन्धिः (लोपः) |
| | मयैव | - मया + एव | वृद्धिसन्धिः |
| **(ग) कृदन्तः** | राधनम् | - राध् + ल्युट् (भावे) | |
| | विहितान् | - वि + धा (हि इति आदेशः) + क्त (कर्मणि) तान् । | |

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥7.23॥**

**पदार्थः** - अल्पमेधसाम् = अल्पमतीनाम्, तेषाम् = भक्तानाम्, तत् फलं तु = तत् प्रयोजनं तु, अन्तवत् = विनाशि, भवति = सम्पद्यते, देवयजः = देवाराधकाः, देवान् = विविधदेवान्, यान्ति = प्राप्नुवन्ति, मद्भक्ताः अपि = मदाराधकाः तु, माम् = माम्, यान्ति = प्राप्नुवन्ति ।

**अन्वयः** - अल्पमेधसां तेषां तत् फलं तु अन्तवत् भवति । देवयजः देवान् यान्ति । मद्भक्ताः अपि मां यान्ति ।

**तात्पर्यम्** - अल्पमतीनां भक्तानां तत् फलं तु विनाशि भवति । देवान् ये आराध्यन्ति ते तान् देवान् प्राप्नुवन्ति । ये माम् आराध्यन्ति ते तु माम् एव प्राप्नुवन्ति ।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | भवत्यल्पमेधसाम् | - भवति + अल्पमेधसाम् | यण्सन्धिः |
| | देवयजो यान्ति | - देवयजः + यान्ति | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |

| | | |
|---|---|---|
| | मद्भक्ता यान्ति | – मद्भक्ताः + यान्ति विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | अल्पमेधसाम् | – अल्पा मेधा येषां ते अल्पमेधसः, तेषाम् – बहुव्रीहिः । समासान्तः असिच्प्रत्ययः । |
| | देवयजः | – देवान् यजन्ति – कर्तरि क्विप्प्रत्ययः उपपदसमासश्च । |
| | मद्भक्ताः | – मम भक्ताः – षष्ठीतत्पुरुषः । |
| **(घ) तद्धितान्तः** | अन्तवत् | – अन्त + मतुप् । अन्तः अस्य अस्मिन् वा अस्ति । |

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥7.24॥**

**पदार्थः** – अबुद्धयः = अविवेकिनः, मम = मे, अनुत्तमम् = उत्तमोत्तमम्, परम् = उत्कृष्टम्, अव्ययम् = नाशरहितम्, भावम् = स्वरूपम्, अजानन्तः = अविदन्तः, अव्यक्तम् = अप्रकाशम्, माम् = माम्, व्यक्तिम् = प्रकाशम्, आपन्नम् = प्राप्तवन्तम्, मन्यन्ते = चिन्तयन्ति ।

**अन्वयः** – अबुद्धयः मम अनुत्तमं परम् अव्ययं भावम् अजानन्तः अव्यक्तं मां व्यक्तिम् आपन्नं मन्यन्ते ।

**तात्पर्यम्** – अविवेकिनः मम उत्तमोत्तमम् उत्कृष्टम् नाशरहितं स्वरूपम् अजानन्तः अप्रकाशं मां मत्स्यकूर्मादिरूपेण प्रकाशं प्राप्तवन्तं चिन्तयन्ति ।

**व्याकरणम्** –

| | | |
|---|---|---|
| **(क) सन्धिः** | अजानन्तो मम | – अजानन्तः + मम विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | ममाव्ययम् | – मम + अव्ययम् सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अव्यक्तम् | – न व्यक्तः, तम् – नञ्तत्पुरुषः । |
| | अबुद्धयः | – न विद्यते बुद्धिः येषां ते – बहुव्रीहिः । |
| | अजानन्तः | – न जानन्तः – नञ्तत्पुरुषः । |

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥7.25॥**

**पदार्थः** – योगमायासमावृतः = इच्छाधीनमायया आच्छन्नः, अहम् = अहम्, सर्वस्य = सकलस्य लोकस्य, न प्रकाशः = न प्रकटः, मूढः = मूर्खः, अयं लोकः = एषः जनः, अव्ययम् = नाशरहितम्, अजम् = उत्पत्तिविहीनम्, माम् = माम्, न अभिजानाति = न वेत्ति ।

**अन्वयः** – योगमायासमावृतः अहं सर्वस्य न प्रकाशः । मूढः अयं लोकः अव्ययम् अजं मां न अभिजानाति ।

**तात्पर्यम्** – सङ्कल्पाधीनया मायया समावृतः अहं सकलस्य लोकस्य दृष्टिगोचरः न भवामि । केषाञ्चिदेव दृष्टिगोचरो भवामि । मूढः तु अयं जनः नाशरहितम् उत्पत्तिरहितं च मां न जानाति ।

**माध्वमतम्**– योगमायासमावृतः = भगवतः सामर्थ्ये लक्षणोपायेन त्रिगुणात्मिकया मायया समावृतः । भगवान् सर्वस्य ज्ञानविषयः न भवति ।

**रामानुजीयमतम्** – योगमाया = क्षेत्रज्ञासाधारणमनुष्यत्वादिसंस्थानयोगाख्या माया ।

**व्याकरणम्** –

**(क) सन्धिः** नाहम् – न + अहम् सवर्णदीर्घसन्धिः
मूढोऽयम् – मूढः + अयम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च
नाभिजानाति – न + अभिजानाति सवर्णदीर्घसन्धिः
लोको मम – लोकः + मम विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** योगमायासमावृतः – योगाधीना माया योगमाया – मध्यमपदलोपी तत्पुरुषः ।
– योगमायया समावृतः – तृतीयातत्पुरुषः ।

**(ग) कृदन्तः** प्रकाशः – प्र + काश् + अच् (कर्तरि) । प्रकाशते इति प्रकाशः ।

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥7.26॥**

**पदार्थः** – अहम् = परमेश्वरः अहम्, समतीतानि = अतिक्रान्तानि, वर्तमानानि च = वर्तमानानि च, भविष्याणि च = आगामीनि अपि, भूतानि = स्थावरजङ्गमानि, वेद = जानामि, मां तु = परमेश्वरं तु, कश्चन = कोऽपि, न वेद = न जानाति ।

**अन्वयः** – अर्जुन ! अहं समतीतानि वर्तमानानि च भविष्याणि च भूतानि वेद । मां तु कश्चन न वेद ।

**तात्पर्यम्** – हे अर्जुन ! अहं अतिक्रान्तानि वर्तमानानि आगामीनि अपि सर्वाण्यपि भूतानि जानामि । मां तु कोऽपि न जानाति ।

**व्याकरणम्** –

**(क) सन्धिः** वेदाहम् – वेद + अहम् सवर्णदीर्घसन्धिः

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥7.27॥**

**पदार्थः** – भारत = अर्जुन ! परन्तप = शत्रुतापन ! सर्गे = देहोत्पत्तौ सत्याम्, सर्वभूतानि = भूतजातम्, इच्छाद्वेषसमुत्थेन = रागद्वेषसम्भूतेन, द्वन्द्वमोहेन = द्वन्द्वव्यामोहेन, सम्मोहम् = मूढत्वम्, यान्ति = लभन्ते ।

**अन्वयः** – भारत, परन्तप ! सर्गे सर्वभूतानि इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन सम्मोहं यान्ति ।

**तात्पर्यम्** – यदा स्थूलदेहस्य उत्पत्तिः भवति तदैव विषयेषु रागः द्वेषश्च सम्भवति । तेन च शीतोष्णसुखदुःखादिद्वन्द्वात् जातेन विवेकनाशेन अहं सुखी अहं दुःखी इति जानन्तः सर्वेऽपि प्राणिनः मोहम् आपन्नाः मां न जानन्ति ।

**व्याकरणम्** –

**(ख) समासः** इच्छाद्वेषसमुत्थेन – इच्छा च द्वेषश्च इच्छाद्वेषौ – द्वन्द्वः ।
– इच्छाद्वेषाभ्यां समुत्थः, तेन – तृतीयातत्पुरुषः ।
द्वन्द्वमोहेन – द्वन्द्वानां मोहः, तेन – षष्ठीतत्पुरुषः ।

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥7.28॥**

**पदार्थः** – येषां तु = येषां तु, पुण्यकर्मणाम् = पुण्याचारशीलानाम्, जनानाम् = मानवानाम्, पापम् = कल्मषम्, अन्तगतम् = नष्टप्रायम्, ते = मानवाः, द्वन्द्वमोहनिर्मुक्ताः = शीतोष्णादिजन्येन मोहेन रहिताः, दृढव्रताः = गाढसङ्कल्पाः, मां भजन्ते = मां सेवन्ते ।

**अन्वयः** – येषां तु पुण्यकर्मणां जनानां पापम् अन्तगतं ते द्वन्द्वमोहनिर्मुक्ताः दृढव्रताः मां भजन्ते ।

**तातर्यम्** – पुण्यं कर्म समाचरतां पापं यदा समाप्तप्रायं भवति तदा ते दृढसङ्कल्पाः शीतोष्णसुखदुःखादिद्वन्द्वजन्येन मोहेन मुच्यमानाः मां प्राप्नुवन्ति ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | त्वन्तगतम् | – | तु + अन्तगतम् | यणसन्धिः |
| | निर्मुक्ता भजन्ते | – | निर्मुक्ताः + भजन्ते | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | अन्तगतम् | – | अन्तं गतम् – द्वितीयातत्पुरुषः । | |
| | पुण्यकर्मणाम् | – | पुण्यं कर्म येषां ते, तेषाम् – बहुव्रीहिः । | |
| | द्वन्द्वमोहनिर्मुक्ताः | – | द्वन्द्वस्य मोहः – षष्ठीतत्पुरुषः । | |
| | | – | द्वन्द्वमोहेन निर्मुक्ताः – तृतीयातत्पुरुषः । | |
| | दृढव्रताः | – | दृढं व्रतं येषां ते – बहुव्रीहिः । | |

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥7.29॥**

**पदार्थः** – ये = ये मानवाः, जरामरणमोक्षाय = जरामृत्युहानाय, माम् आश्रित्य = माम् अवलम्ब्य, यतन्ति = यतन्ते, ते = ते मानवाः, तत् ब्रह्म = प्रसिद्धं परमात्मानम्, कृत्स्नम् = समग्रम्, अध्यात्मम् = आत्मविषयम्, अखिलम् = समस्तम्, कर्म च = कर्तव्यं च, विदुः = जानन्ति ।

**अन्वयः** – ये माम् आश्रित्य जरामरणमोक्षाय यतन्ति ते तत् ब्रह्म कृत्स्नम् अध्यात्मम् अखिलं च कर्म विदुः ।

**तात्पर्यम्** – ये मानवाः माम् अवलम्ब्य जरामरणविमोक्षाय प्रयतन्ते ते मानवाः तत् परब्रह्म जानन्ति तथा समग्रम् आत्मविषयं कर्तव्यं च जानन्ति ।

**रामानुजीयमतम्** – जरामरणमोक्षः = प्रकृतिवियुक्तात्मदर्शनम्, अध्यात्मम् = आत्मनि सम्बद्ध्यमानं भूतसूक्ष्मतद्वासनादिकम्, कर्म = श्रुतिसिद्धो योषित्सम्बन्धः ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | चाखिलम् | – | च + अखिलम् | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | जरामरणमोक्षाय | – | जरा च मरणं च जरामरणे – द्वन्द्वः । | |
| | | – | जारामरणयोः मोक्षः, तस्मै – षष्ठीतत्पुरुषः । | |
| | | | जरामरणाभ्यां मोक्षः इति यावत् । | |

| | | | |
|---|---|---|---|
| | अध्यात्मम् | - | आत्मनि इति - अव्ययीभावः। |
| **(ग) कृदन्तः** | आश्रित्य | - | आ + श्रि + ल्यप्। |

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥7.30॥**

**पदार्थः** - ये = ये मानवाः, साधिभूताधिदैवम् = प्रतिभूतं प्रतिदैवं च वर्तमानम्, साधियज्ञं च = प्रतियज्ञमपि वर्तमानम्, मां विदुः = मां जानन्ति, ते = ते मानवाः, युक्तचेतसः = समाहितमनसः, प्रयाणकाले अपि च = मरणसमये अपि, मां विदुः = मां जानन्ति।

**अन्वयः** - ये साधिभूताधिदैवं साधियज्ञं च मां विदुः ते युक्तचेतसः प्रयाणकाले अपि च मां विदुः।

**तात्पर्यम्** - ये मां प्रतिभूतं प्रतिदैवं प्रतियज्ञं च वर्तमानं जानन्ति ते मानवाः समाहितमनसः मरणसमये अपि मां जानन्ति।

**व्याकरणम्** -

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | प्रयाणकालेऽपि | - | प्रयाणकाले + अपि | पूर्वरूपसन्धिः |
| | विदुर्युक्तचेतसः | - | विदुः + युक्तचेतसः | विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | साधिभूतादिदैवम् | - | भूतेषु इति अधिभूतम् - अव्ययीभावः। | |
| | | - | अधिभूतेन सहितः साधिभूतः - बहुव्रीहिः। | |
| | | - | देवेषु इति अधिदैवम् - अव्ययीभावः। | |
| | | - | अधिदैवेन सहितः - साधिदैवः - बहुव्रीहिः। | |
| | | - | साधिभूतः च साधिदैवः च तम् - कर्मधारयः। | |
| | साधियज्ञम् | - | यज्ञे इति अधियज्ञम् - अव्ययीभावः। | |
| | | - | अधियज्ञेन सहितः, तम् - बहुव्रीहिः। | |
| | प्रयाणकाले | - | प्रयाणस्य कालः, तस्मिन् - षष्ठीतत्पुरुषः। | |
| | युक्तचेतसः | - | युक्तं चेतः यस्य सः, तस्य - बहुव्रीहिः। | |

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः।

श्रीमद्भगवद्गीता

अथ अष्टमोऽध्यायः

## अक्षरब्रह्मयोगः

**अर्जुन उवाच – किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥8.1॥**
**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥8.2॥**

**पदार्थः** – पुरुषोत्तम = पुरुषश्रेष्ठ ! (कृष्ण), किं तत् ब्रह्म = ब्रह्मनामकं तत् किम् ? अध्यात्मं किम् = अध्यात्मं नाम किम् ? कर्म किम् = कर्म नाम किम् ? अधिभूतं च = अधिभूतम् इति, किं प्रोक्तम्=किंस्वरूपं भणितम् ? अधिदैवम् = अधिदैवम् इति, किम् उच्यते = किंस्वरूपं कथ्यते ? मधुसूदन = मधुविनाशक कृष्ण ! अत्र = अत्र, अस्मिन् देहे = एतस्मिन् शरीरे, अधियज्ञः = अधियज्ञः इत्येषः, कः = किंस्वरूपः ? कथम् = सः केन प्रकारेण भवति ? नियतात्मभिः = संयतचित्तैः योगिभिः, प्रयाणकाले = मरणसमये, कथं च =केन प्रकारेण च, ज्ञेयः असि = ज्ञातुं योग्यः भवसि ?

**अन्वयः** – पुरुषोत्तम ! किं तद् ब्रह्म ? किम् अध्यात्मम् ? किं कर्म ? किम् अधिभूतं च प्रोक्तम् ? अधिदैवं किम् उच्यते ? मधुसूदन ! अत्र अस्मिन् देहे अधियज्ञः कः ? कथम् ? नियतात्मभिः प्रयाणकाले कथं च ज्ञेयः असि ?

**तात्पर्यम्** – पुरुषोत्तम ! ब्रह्म किम् ? अध्यात्मं किम् ? कर्म किम् ? अधिभूतं किम् ? अधिदैवं किम् ? अधियज्ञः कः ? मानवेन अन्तकाले त्वं कथं स्मरणीयः भवसि ?

**व्याकरणम्** –

**(क) सन्धिः** तद्ब्रह्म – तत् + ब्रह्म जश्त्वसन्धिः
कोऽत्र – कः + अत्र विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः, पूर्वरूपं च
देहेऽस्मिन् – देहे + अस्मिन् पूर्वरूपसन्धिः

**(ख) समासः** पुरुषोत्तमः – पुरुषेषु उत्तमः, तत्सम्बुद्धौ – सप्तमीतत्पुरुषः ।
नियतात्मभिः – नियतः आत्मा यैः ते, तैः – बहुव्रीहिः ।

**(ग) कृदन्तः** प्रोक्तम् – प्र + वच् + क्त । (कर्मणि)
ज्ञेयः – ज्ञा + यत् (कर्मणि)

**(घ) तद्धितान्तः** अधियज्ञः – अधि + यज्ञ + अच् (मतुबर्थे) अधियज्ञम् अस्य अस्मिन् वा अस्ति ।

**श्रीभगवानुवाच – अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥8.3॥**

**पदार्थः** – अक्षरम् = विनाशरहितः परमात्मा, परमम् = अत्युत्तमम्, ब्रह्म = ब्रह्म (उच्यते), स्वभावः = जीवरूपेण देहे भवनम्, अध्यात्मम् = अध्यात्मम्, उच्यते = कथ्यते, भूतभावोद्भवकरः = भूतानाम् उत्पत्तेः वृद्धेः च

कारणम्, विसर्गः = यज्ञः, कर्मसंज्ञितः = कर्मनामकः ।

**अन्वयः** – परमम् अक्षरं ब्रह्म, स्वभावः अध्यात्मम् उच्यते । भूतभावोद्भवकरः विसर्गः कर्मसंज्ञितः ।

**तात्पर्यम्** – अत्युत्तमं विनाशरहितं सर्वव्यापकं च ब्रह्म इत्युच्यते । तादृशस्य ब्रह्मणः जीवरूपेण शरीरे अवस्थानम् अध्यात्मं कथ्यते । सर्वेषां भूतानाम् उत्पत्तौ वृद्धौ च कारणीभूतः यज्ञः (देवतोद्देशेन चरुपुरोडाशादेः द्रव्यस्य विसर्जनम्) कर्म इति उच्यते ।

**माध्वमतम्**– उत्तमम् अक्षरं ब्रह्मेत्युच्यते । जीवानामुपकारित्वेन देहेन्द्रियान्तःकरणानि अध्यात्ममित्युच्यते । ईश्वरकर्तृकः सृष्ट्यादिविषयकव्यापारः कर्म इत्युच्यते ।

**रामानुजीयमतम्** – परमम् अक्षरम् = प्रकृतिविनिर्मुक्तात्मस्वरूपम् ।

**व्याकरणम्** –

**(क) सन्धिः** स्वभावोऽध्यात्मम् – स्वभावः + अध्यात्मम् विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

भूत...करो विसर्गः – भूत...करः + विसर्गः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** भूतभावोद्भवकरः – भावश्च उद्भवश्च भावोद्भवौ – द्वन्द्वः ।
– भूतानां भावोद्भवौ भूतभावोद्भवौ – षष्ठीतत्पुरुषः ।
– करोतीति करः, कर्तरि अच् ।
– भूतभावोद्भवयोः करः – षष्ठीतत्पुरुषः ।

कर्मसंज्ञितः – कर्म इति संज्ञा कर्मसंज्ञा – कर्मधारयः ।
– कर्मसंज्ञा अस्य सञ्जाता कर्मसंज्ञितः ।
(अस्य सञ्जाता इत्यर्थे इतच्प्रत्ययः)

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥8.4॥**

**पदार्थः** – क्षरः = विनाशशीलः, भावः = पदार्थः, अधिभूतम् = अधिभूतम् इति व्यवह्रियते, पुरुषः च =हिरण्यगर्भः च, अधिदैवतम् = अधिदैवतम् इति कथ्यते, देहभृतां वर = शरीरिणां श्रेष्ठ ! (अर्जुन), अत्र = अस्मिन्, देहे = शरीरे, अहम् एव = अहं केवलम्, अधियज्ञः = अधियज्ञः ।

**अन्वयः** – क्षरः भावः अधिभूतम्, पुरुषः च अधिदैवतम् । देहभृतां वर ! अत्र देहे अहम् एव अधियज्ञः ।

**तात्पर्यम्** – विनाशशीलः वस्तुसमुदायः अधिभूतम् इति उच्यते । सर्वप्राणीन्द्रियाणाम् अनुग्राहकः हिरण्यगर्भः च अधिदैवतम् इति कथ्यते । अर्जुन ! अत्र शरीरे अहमेव अधियज्ञः इति ज्ञातव्यम् ।

**माध्वमतम्**– भूतानामुपकारिणः विषयपदार्थाः अधिभूतमित्युच्यन्ते । सर्वजीवाभिमानी संकर्षणः ब्रह्मा वा अधिदैवतमित्युच्यते । सर्वयज्ञानां प्रेरकत्वात् भोक्तृत्वात् च विष्णुरेव अधियज्ञः इत्युच्यते ।

**रामानुजीयमतम्** – अधिदैवतम् = दैवतोपरि वर्तमानम् ।

**व्याकरणम्** –

**(क) सन्धिः** क्षरो भावः – क्षरः + भावः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

| | | | |
|---|---|---|---|
| | पुरुषश्च | - पुरुषः + च | विसर्गसन्धिः (सकारः) श्चुत्वम् |
| | चाधिदैवतम् | - च + अधिदैवतम् | सवर्णदीर्घसन्धिः |
| | अधियज्ञोऽहम् | - अधियज्ञः + अहम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च |
| **(ख) समासः** | अधिदैवतम् | - दैवतेषु इति - अव्ययीभावः। | |
| | देहभृताम् | - देहं बिभ्रति इति देहभृतः, तेषाम् - कर्तरि क्विप् उपपदसमासश्च। | |

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥8.5॥**

**पदार्थः** - अन्तकाले च = मरणसमये, माम् एव = मामेव, स्मरन् = चिन्तयन्, कलेवरम् = देहम्, मुक्त्वा = परित्यज्य, यः प्रयाति = यः गच्छति, सः = सः पुरुषः, मद्भावम् = मद्रूपताम्, याति = प्रयाति, अत्र = अस्मिन् विषये, संशयः = सन्देहः, न अस्ति = न वर्तते।

**अन्वयः** - यः अन्तकाले च माम् एव स्मरन् कलेवरं मुक्त्वा प्रयाति सः पुरुषः मद्भावं याति। अत्र न संशयः।

**तात्पर्यम्** - यः अन्तकाले माम् एव चिन्तयन् शरीरं परित्यजति सः पुरुषः अवश्यं मदभेदं प्राप्नोति। अस्मिन् विषये सन्देहः न वर्तते।

**माध्वमतम्**- मद्भावम् = मयि (भगवति) भावम्, निर्दुःखनिरतिशयानन्दात्मिकां सत्ताम् (उपयाति)।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | स मद्भावम् | - सः + मद्भावम् | विसर्गसन्धिः (लोपः) |
| | नास्त्यत्र | - नास्ति + अत्र | यण्सन्धिः |
| **(ख) समासः** | अन्तकाले | - अन्तस्य कालः, तस्मिन् - षष्ठीतत्पुरुषः। | |
| | मद्भावम् | - मम भावः, तम् - षष्ठीतत्पुरुषः। | |

**यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥8.6॥**

**पदार्थः** - कौन्तेय = कुन्तीपुत्र, यं यं वा अपि = यादृशम्, भावम् = देवताविशेषम्, स्मरन् = चिन्तयन्, अन्ते = अन्तकाले, कलेवरम् = देहम्, त्यजति = मुञ्चति, (सः) सदा = सततम्, तद्भावभावितः = तदनुसन्धान-संस्कृतचित्तः सन्, तं तम् एव = तादृशं देवताविशेषमेव, एति = प्राप्नोति।

**अन्वयः** - कौन्तेय ! अन्ते यं यं वापि भावं स्मरन् कलेवरं त्यजति (सः) सदा तद्भावभावितः तं तम् एव एति।

**तात्पर्यम्** - कौन्तेय ! जीवः स्वस्य अन्तकाले यादृशं भावं चिन्तयन् शरीरं त्यजति यस्यानुसन्धानं तेन पुनः पुनः कृतम्, सः तस्य भावं प्राप्नोति।

**माध्वमतम्**- यं पदार्थं चिन्तयन् मरणमुपयाति सः तमेव पदार्थम् अवाप्नोति। तस्मात् सततं भगवन्नामस्मरणशीलः अन्ते परमात्मानं यदि स्मरति तर्हि स्वकीयप्रारब्धादिनाशानन्तरं भगवन्तं प्राप्नोति।

**व्याकरणम्** -

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | वापि | - वा + अपि | सवर्णदीर्घसन्धिः |

त्यजत्यन्ते - त्यजति + अन्ते यणसन्धिः
एवैति - एव + एति वृद्धिसन्धिः
**(ख) समासः** तद्भावभावितः - तस्य भावः, तद्भावः - षष्ठीतत्पुरुषः ।
- तद्भावेन भावितः - तृतीयातत्पुरुषः ।

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥8.7॥**

**पदार्थः** - तस्मात् = ततः हेतोः, सर्वेषु = सकलेषु, कालेषु = समयेषु, माम् अनुस्मर = मां ध्याय, युद्ध्य च = युद्धं च कुरु, मयि = परमात्मनि, अर्पितमनोबुद्धिः = समर्पितचित्तः, माम् एव = परमात्मानम् एव, एष्यसि = प्राप्नोषि, असंशयः = संशयः नास्ति ।

**अन्वयः** - तस्मात् सर्वेषु कालेषु माम् अनुस्मर युध्य च । मयि अर्पितमनोबुद्धिः माम् एव एष्यसि । असंशयः ।

**तात्पर्यम्** - ततः सकलेषु समयेषु मां ध्याय युद्धं च कुरु । यदि मय्येव मनः समर्पयसि तर्हि मामेव प्राप्नोषि । अत्र संशयः नास्ति । (सङ्कल्पात्मकं मनः, व्यवसायात्मिका बुद्धिः ।)

**व्याकरणम्** -

**(क) सन्धिः** मय्यर्पितमनोबुद्धिः - मयि + अर्पितमनोबुद्धिः यणसन्धिः
.... बुद्धिर्माम् - बुद्धिः + माम् विसर्गसन्धिः (रेफः)
एवैष्यसि - एव + एष्यसि वृद्धिसन्धिः
एष्यस्यसंशयः - एष्यसि + असंशयः यणसन्धिः
**(ख) समासः** अर्पितमनोबुद्धिः - मनश्च बुद्धिश्च मनोबुद्धी - द्वन्द्वः ।
- अर्पिते मनोबुद्धी येन सः - बहुव्रीहिः ।
असंशयः - न संशयः - नञ्तत्पुरुषः ।

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥8.8॥**

**पदार्थः** - पार्थ = अर्जुन ! अभ्यासयोगयुक्तेन = आवर्तनरूपेण उपायेन सहितः, नान्यगामिना = अनन्यगतेन, चेतसा = मनसा, अनुचिन्तयन् = अनुध्यायन्, दिव्यम् = दिवि वर्तमानम्, परमं पुरुषम् = निरतिशयं पुरुषम्, याति = गच्छति ।

**अन्वयः** - पार्थ ! अभ्यासयोगयुक्तेन नान्यगामिना चेतसा अनुचिन्तयन् दिव्यं परमं पुरुषं याति ।

**तात्पर्यम्** - अर्जुन ! यः अभ्यासरूपम् उपायम् अवलम्ब्य एकाग्रेण चित्तेन ध्यायति सः दिव्यं पुरुषं प्राप्नोति ।

**रामानुजीयमतम्** - अभ्यासः = नित्यनैमित्तिकाविरुद्धेषु सर्वेषु कालेषु उपास्यसंशीलनम् । योगस्तु अहरहः योगकाले अनुष्ठीयमानं यथोक्तलक्षणम् उपासनम् ।

**व्याकरणम्** -

**(क) सन्धिः** पार्थानुचिन्तयन् - पार्थ + अनुचिन्तयन् सवर्णदीर्घसन्धिः
**(ख) समासः** अभ्यासयोगयुक्तेन - अभ्यासः एव योगः अभ्यासयोगः - कर्मधारयः ।

– अभ्यासयोगेन युक्तः, तेन – तृतीयातत्पुरुषः ।
नान्यगामिना – अन्यं गामी अन्यगामी – द्वितीयातत्पुरुषः ।
– न अन्यगामी, तेन – नञ्तत्पुरुषः । अत्र नञर्थे न इति शब्दः ।

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ।।8.9।।**

**पदार्थः** – कविम् = सर्वज्ञम्, पुराणम् = पुरातनम्, अनुशासितारम् = जगन्नियामकम्, अणोः = सूक्ष्मात् अपि, अणीयांसम् = सूक्ष्मतरम्, सर्वस्य = सकलस्य, धातारम् = पोषकम्, अचिन्त्यरूपम् = दुर्ज्ञेयरूपम्,आदित्यवर्णम्= सूर्यसमानवर्णम्, तमसः = अज्ञानान्धकारात्, परस्तात् = परतः विद्यमानम्, यः अनुस्मरेत्= यः ध्यायेत् ....

**अन्वयः** – यः कविं पुराणम् अनुशासितारम् अणोः अणीयांसं सर्वस्य धातारम् अचिन्त्यरूपम् आदित्यवर्णं तमसः परस्तात् अनुस्मरेत् ।

**तात्पर्यम्** – यः सर्वज्ञं पुरातनं जगन्नियन्तारं सूक्ष्मात् सूक्ष्मतरं सकलस्य धातारम् अगम्यस्वरूपं सूर्यसमप्रभम् अज्ञानान्धकारात् परतः विद्यमानं ध्यायति । (सः दिव्यं पुरुषं याति ।)

**माध्वमतम्**– सर्वस्य धातारम् = चराचरात्मकविश्वस्य धारणपोषणकर्तारम्, अचिन्त्यरूपम् = मनसः साकल्येन अविषयम्, तमसः परस्तात् = मृत्योः प्रकृतेर्वा सम्बन्धरहितम् ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | अणोरणीयांसम् | – अणोः + अणीयांसम् | विसर्गसन्धिः (रेफः) |
| | अनुस्मरेद्यः | – अनुस्मरेत् + यः | जश्त्वसन्धिः |
| **(ख) समासः** | अचिन्त्यरूपम् | – न चिन्त्यम् अचिन्त्यम् – नञ्तत्पुरुषः । | |
| | | – अचिन्त्यं रूपं यस्य सः, तम् – बहुव्रीहिः । | |
| | आदित्यवर्णम् | – आदित्यस्य वर्णः इव वर्णः यस्य सः, तम् – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | अनुशासितारम् | – अनु + शास् + (इट्) + तृच् (कर्तरि) तम् । | |
| | धातारम् | – धा + तृच् (कर्तरि) तम् । | |
| **(ग) तद्धितान्तः** | अणीयान् | – अणु + ईयसुन् । (अतिशये) अतिशयेन अणुः इत्यर्थः । | |

**प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ।।8.10।।**

**पदार्थः** – सः = सः योगी, भक्त्या युक्तः = भक्त्या सहितः, प्रयाणकाले = मरणसमये, योगबलेन च एव = समाधिबलेन, भ्रुवोः मध्ये = भ्रुवोः मध्यदेशे, प्राणम् = प्राणवायुम्, सम्यक् = साधु, आवेश्य =स्थापयित्वा, अचलेन = निश्चलेन, मनसा = चित्तेन, (स्मरन्) दिव्यम् = लोकोत्तरम्, परम् = उत्तमम्, तं पुरुषम् = प्रसिद्धं पुरुषम्, उपैति = प्राप्नोति ।

**अन्वयः** – सः भक्त्या युक्तः प्रयाणकाले योगबलेन च एव भ्रुवोः मध्ये प्राणं सम्यक् आवेश्य अचलेन मनसा (स्मरन्) दिव्यं परं तं पुरुषम् उपैति ।

**तात्पर्यम्** – सः अनन्यभावेन सहितः मरणसमये समाधिबलेन भ्रुवोः मध्ये प्राणवायुं सम्यक् स्थापयित्वा निश्चलेन चित्तेन स्मरन् लोकोत्तरम् उत्तमं तमेव पुरुषं प्राप्नोति।

**रामानुजीयमतम्** – उपैति = तद्भावं याति।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | मनसाचलेन | – | मनसा + अचलेन | सवर्णदीर्घसन्धिः |
| | युक्तो योगबलेन | – | युक्तः + योगबलेन | विसर्गसन्धिः(सकारः) रेफः, उकारः, गुणः |
| | चैव | – | च + एव | वृद्धिसन्धिः |
| | भ्रुवोर्मध्ये | – | भ्रुवोः + मध्ये | विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | अचलेन | – | न चलम्, तेन – नञ्तत्पुरुषः। | |
| | योगबलेन | – | योगस्य बलम्, तेन – षष्ठीतत्पुरुषः। | |
| **(ग) कृदन्तः** | आवेश्य | – | आ + विश् + णिच् (प्रेरणार्थे)+ ल्यप्। | |

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥8.11॥**

**पदार्थः** – वेदविदः = वेदज्ञाः, यत् = यद्वस्तु, अक्षरम् = अविनाशि, वदन्ति = कथयन्ति, वीतरागाः =नष्टाभिलाषाः, यतयः = संन्यासिनः, यत् विशन्ति = यत् प्रविशन्ति, यत् = यद्वस्तु, इच्छन्तः = अभिलषन्तः, ब्रह्मचर्यम् = ब्रह्मचर्यव्रतम्, चरन्ति = आचरन्ति, तत् पदम् = तत् स्थानम्, ते = तुभ्यम्, सङ्ग्रहेण = सङ्क्षेपेण, प्रवक्ष्ये = वदिष्यामि।

**अन्वयः** – वेदविदः यत् अक्षरं वदन्ति, वीतरागाः यतयः यत् विशन्ति, यत् इच्छन्तः ब्रह्मचर्यं चरन्ति तत् पदं ते सङ्ग्रहेण प्रवक्ष्ये।

**तात्पर्यम्** – वेदज्ञाः यत् वस्तु अविनाशि इति वदन्ति, वीतरागाः सन्यासिनः यत् प्रविशन्ति, पुरुषाश्च यत् वस्तु अभिलषन्तः ब्रह्मचर्यव्रतम् आचरन्ति तत् प्रसिद्धं स्थानं तुभ्यं संक्षेपेण वदिष्यामि।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | यदक्षरम् | – | यत् + अक्षरम् | जश्त्वसन्धिः |
| | वेदविदो वदन्ति | – | वेदविदः + वदन्ति | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | यद्यतयः | – | यत् + यतयः | जश्त्वसन्धिः |
| | यद्यतयो वीतरागाः | – | यद्यतयः + वीतरागाः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | यदिच्छन्तः | – | यत् + इच्छन्तः | जश्त्वसन्धिः |
| | यदिच्छन्तो ब्रह्मचर्यम् | – | यदिच्छन्तः + ब्रह्मचर्यम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | वीतरागाः | – | वीतः रागः येभ्यः ते – बहुव्रीहिः। | |
| | वेदविदः | – | वेदं विदन्ति – कर्तरि क्विप् उपपदसमासश्च। | |
| **(ग) कृदन्तः** | इच्छन्तः | – | इषु + शतृ। (कर्तरि) | |

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥8.12॥**

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥8.13॥**

**पदार्थः** – सर्वद्वाराणि = सर्वाणि इन्द्रियाणि, संयम्य = निगृह्य, मनः = चित्तम्, हृदि = हृदयपद्मे, निरुध्य च = नियम्य च, आत्मनः = स्वस्य, प्राणम् = वायुम्, मूर्ध्नि = शिरसि, आधाय = स्थापयित्वा, योगधारणाम् = समाधिम्, आस्थितः = प्राप्तः, ओम् इति एकाक्षरम् = एकाक्षररूपम् ओङ्कारम्, ब्रह्म = ब्रह्मवाचकत्वात् तद्रूपम्, व्याहरन् = उच्चारयन्, माम् अनुस्मरन् = मां ध्यायन्, यः = यः मानवः, देहम् = शरीरम्, त्यजन् = मुञ्चन्, प्रयाति = गच्छति, सः = सः मानवः, परमाम् = उत्कृष्टाम्, गतिम् = स्थितिम्, याति = लभते ।

**अन्वयः** – सर्वद्वाराणि संयम्य मनः हृदि निरुध्य च आत्मनः प्राणं मूर्ध्नि आधाय योगधारणाम् आस्थितः ओम् इति एकाक्षरं ब्रह्म व्याहरन् माम् अनुस्मरन् यः देहं त्यजन् प्रयाति सः परमां गतिं याति ।

**तात्पर्यम्** – सकलप्रवेशद्वाराणि (नवद्वाराणि) निगृह्य चित्तं हृदये संस्थाप्य च स्वस्य प्राणं शिरसि स्थापयित्वा समाधिं प्राप्तः एकाक्षरं ब्रह्मवाचकत्वात् साक्षात् ब्रह्मरूपम् ओङ्कारम् उच्चारयन् मां ध्यायन् यः मानवः शरीरं मुञ्चति सः उत्कृष्टां गतिं लभते ।

**रामानुजीयमतम्** – परमा गतिः = प्रकृतिवियुक्तमत्समानाकारः अपुनरावृत्तिः आत्मा ।

**व्याकरणम्** –

**(क) सन्धिः** मनो हृदि – मनः + हृदि विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
मूर्ध्न्यादाय – मूर्ध्नि + आदाय यणसन्धिः
आधायात्मनः – आधाय + आत्मनः सवर्णदीर्घसन्धिः
आस्थितो योगधारणाम् – आस्थितः + योगधारणाम् विसर्गसन्धिः(सकारः)रेफः, उकारः, गुणः
स याति – सः याति विसर्गसन्धिः (लोपः)

**(ख) समासः** सर्वद्वाराणि – सर्वाणि द्वाराणि, तानि – कर्मधारयः ।
योगधारणाम् – योगस्य धारणा, ताम् – षष्ठीतत्पुरुषः ।
एकाक्षरम् – एकम् अक्षरं यस्य तत्, तत् – बहुव्रीहिः ।

**(ग) कृदन्तः** निरुध्य – नि + रुधिर् + ल्यप् ।
आधाय – आ + धाञ् + ल्यप् ।
व्याहरन् – वि + आ + हृञ् + शतृ । (कर्तरि)
अनुस्मरन् – अनु + स्मृ + शतृ । (कर्तरि)
त्यजन् – त्यज् + शतृ । (कर्तरि)

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥8.14॥**

**पदार्थः** – पार्थ = अर्जुन ! यः = यः मानवः, अनन्यचेताः = अनन्यमनस्कः, सततम् = सर्वदा, नित्यशः = प्रतिदिनम्, मां स्मरति = मां ध्यायति, नित्ययुक्तस्य = सततं युक्तस्य, योगिनः = योगवतः, तस्य= मानवस्य, अहं सुलभः = अहं सुखेन लभ्यः ।

**अन्वयः** – पार्थ ! यः अनन्यचेताः नित्यशः सततं मां स्मरति तस्य नित्ययुक्तस्य योगिनः अहं सुलभः ।

**तात्पर्यम्** – पार्थ ! यः मानवः अनन्यमनस्कः प्रतिदिनं सर्वदा मां ध्यायति तस्य सततयुक्तस्य योगवतः अहं सुखेन लभ्यः भवामि ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | यो माम् | – यः + माम् | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| | तस्याहम् | – तस्य + अहम् | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | अनन्यचेताः | – अन्यस्मिन् चेतः यस्य सः अन्यचेताः – बहुव्रीहिः । | |
| | | – न अन्यचेताः – नञ्तत्पुरुषः । | |
| **(ग) कृदन्तः** | सुलभः | – सु + लभ् + खल् । (कर्मणि) अकृच्छ्रेण लब्धुं शक्यः इत्यर्थः । | |
| **(घ) तद्धितान्तः** | नित्यशः | – नित्य + शस् । (स्वार्थे) | |

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥8.15॥**

**पदार्थः** – परमाम् = उत्कृष्टाम्, संसिद्धिम् = सिद्धिम् (मोक्षरूपाम्), गताः = प्राप्ताः, महात्मानः = महापुरुषाः, माम् उपेत्य = मां लब्ध्वा, अशाश्वतम् = अस्थिरम्, दुःखालयम् = दुःखस्थानम्, पुनर्जन्म = पुनर्जन्म, न आप्नुवन्ति = न लभन्ते ।

**अन्वयः** – परमां संसिद्धिं गताः महात्मानः माम् उपेत्य अशाश्वतं दुःखालयं पुनर्जन्म न आप्नुवन्ति ।

**तात्पर्यम्** – उत्कृष्टां मोक्षरूपां सिद्धिं प्राप्तवन्तः महापुरुषाः यदा मां लभन्ते पश्चात् ते क्षणिकं दुःखस्थानमिदं पुनर्जन्म न प्राप्नुवन्ति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | नाप्नुवन्ति | – न + आप्नुवन्ति | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | दुःखालयम् | – दुःखानाम् आलयः, तम् – षष्ठीतत्पुरुषः । | |
| | अशाश्वतम् | – न शाश्वतम्, तत् – नञ्तत्पुरुषः । | |
| | महात्मानः | – महान् आत्मा येषां ते – बहुव्रीहिः । | |
| **(ग) कृदन्तः** | उपेत्य | – उप + इण् + ल्यप् । | |

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥8.16॥**

**पदार्थः** – अर्जुन = हे अर्जुन ! आ ब्रह्मभुवनात् = ब्रह्मलोकपर्यन्तम्, लोकाः = भुवनानि, पुनः आवर्तिनः = आवर्तनशीलानि, कौन्तेय = अर्जुन ! माम् उपेत्य = मां प्राप्य (स्थितस्य), पुनर्जन्म = पुनर्जन्म, न विद्यते = नास्ति ।

**अन्वयः** – अर्जुन ! आब्रह्मभुवनात् लोकाः पुनरावर्तिनः । कौन्तेय ! माम् उपेत्य तु पुनर्जन्म न विद्यते ।

**तात्पर्यम्** – अर्जुन ! आब्रह्मलोकात् सर्वेऽपि लोकाः आवर्तनशीलाः इति हेतोः ते न शाश्वताः । कौन्तेय ! परन्तु मां प्राप्तवतः तु सर्वथा पुनर्जन्म नास्ति ।

**व्याकरणम्** –

**(क) सन्धिः** भुवनाल्लोकाः – भुवनात् + लोकाः परसवर्णसन्धिः
आवर्तिनोऽर्जुन – आवर्तिनः + अर्जुन विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

**(ख) समासः** ब्रह्मभुवनात् – ब्रह्मणः भुवनम्, तस्मात् – षष्ठीतत्पुरुषः ।

**(ग) कृदन्तः** आवर्तिनः – आ + वृतु + णिनि । (ताच्छीलिके कर्तरि) आवर्तनशीलाः इत्यर्थः ।

**सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥8.17॥**

**पदार्थः** – ब्रह्मणः = प्रजापतेः, अहः = दिनम्, सहस्रयुगपर्यन्तम् = युगसहस्रावधिकम्, ये विदुः = ये जानन्ति, ते अहोरात्रविदः = ते कालज्ञाः, जनाः = मानवाः, रात्रिम् = निशाम्, युगसहस्रान्ताम् = युगसहस्रावधिकीम्, विदुः = जानन्ति ।

**अन्वयः** – ब्रह्मणः यत् अहः सहस्रयुगपर्यन्तं ये विदुः ते अहोरात्रविदः जनाः रात्रिं युगसहस्रान्तां विदुः ।

**तात्पर्यम्** – कालज्ञाः जनाः प्रजापतेः दिनं युगसहस्रमिति वदन्ति, तथा रात्रिं युगसहस्रम् । तस्मात् ब्रह्मलोकादयः क्षणिकाः ।

**व्याकरणम्** –

**(क) सन्धिः** ब्रह्मणो विदुः – ब्रह्मणः + विदुः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः
तेऽहोरात्रविदः – ते + अहोरात्रविदः विसर्गसन्धिः(सकारः) रेफः, उकारः, गुणः पूर्वरूपं च
अहोरात्रविदो जनाः – अहोरात्रविदः + जनाः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः

**(ख) समासः** सहस्रयुगपर्यन्ताम् – सहस्रसंख्याकानि युगानि सहस्रयुगानि – मध्यमपदलोपी तत्पुरुषः ।
– सहस्रयुगानि पर्यन्तः यस्य तत्, तत् – बहुव्रीहिः ।
युगसहस्रान्ताम् – युगानां सहस्रम् युगसहस्रम् – षष्ठीतत्पुरुषः ।
– युगसहस्रम् अन्तः यस्याः सा, ताम् – बहुव्रीहिः ।
अहोरात्रविदः – अहश्च रात्रिश्च अहोरात्रम् – द्वन्द्वः ।
– अहोरात्रं विदन्ति – कर्तरि क्विप् उपपदसमासश्च ।

**अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥8.18॥**

**पदार्थः** – अहरागमे = दिनारम्भे, अव्यक्तात् = कारणीभूतात्, प्रजापतेः सर्वाः = सकलाः, व्यक्तयः = स्थावरजङ्गमाः भावाः, प्रभवन्ति = उत्पद्यन्ते, रात्र्यागमे = निशारम्भे, अव्यक्तसञ्ज्ञके = अव्यक्तनामके, तत्र एव = तस्मिन् एव प्रजापतौ, प्रलीयन्ते = विलीनाः भवन्ति ।

**अन्वयः** – अहरागमे अव्यक्तात् सर्वाः व्यक्तयः प्रभवन्ति । रात्र्यागमे अव्यक्तसंज्ञके तत्र एव प्रलीयन्ते ।

**तात्पर्यम्** – यदा दिनस्य आरम्भः भवति तदा कारणीभूतात् प्रजापतेः सर्वे स्थावरजङ्गमात्मकाः प्राणिनः सम्भवन्ति । यदा पुनः रात्रेः आरम्भः तदा कारणीभूते अव्यक्ते तस्मिन् एव प्रजापतौ सर्वेऽपि एते प्रलीनाः भवन्ति ।

**रामानुजीयमतम्** – अव्यक्तः = अव्यक्तावस्थाविशेषः चतुर्मुखदेहः ।

व्याकरणम् –

| | | | |
|---|---|---|---|
| (क) सन्धिः | अव्यक्ताद् व्यक्तयः | – अव्यक्तात् + व्यक्तयः | जश्त्वसन्धिः |
| | प्रभवन्त्यहरागमे | – प्रभवन्ति + अहरागमे | यण्सन्धिः |
| | तत्रैवाव्यक्तसंज्ञके | – तत्र + एव | वृद्धिसन्धिः |
| | | – तत्रैव + अव्यक्तसंज्ञके | सवर्णदीर्घसन्धिः |
| (ख) समासः | अहरागमे | – अह्नः आगमः, तस्मिन् – षष्ठीतत्पुरुषः । | |
| | रात्र्यागमे | – रात्र्याः आगमः, तस्मिन् – षष्ठीतत्पुरुषः । | |
| | अव्यक्तसंज्ञके | – अव्यक्तं संज्ञा यस्य सः, तस्मिन् – बहुव्रीहिः । स्वार्थे कप्रत्ययः। | |

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥8.19॥**

**पदार्थः** – पार्थ = अर्जुन ! सः एव अयम् = सः एव एषः, भूतग्रामः = भूतसमुदायः, अवशः = कर्मपरवशः सन्, भूत्वा भूत्वा = पुनः पुनः उत्पद्य, रात्र्यागमे = निशारम्भे, प्रलीयते = निलीयते, अहरागमे = दिनारम्भे, प्रभवति = उत्पद्यते ।

**अन्वयः** – पार्थ ! सः एव अयं भूतग्रामः अवशः भूत्वा भूत्वा रात्र्यागमे प्रलीयते । अहरागमे प्रभवति ।

**तात्पर्यम्** – अर्जुन ! सः एषः भूतसमुदायः कर्माधीनः सन् पुनःपुनः उत्पद्य निशारम्भे निलीयते । दिनारम्भे प्रभवति ।

व्याकरणम् –

| | | | |
|---|---|---|---|
| (क) सन्धिः | स एवायम् | – सः + एव | विसर्गसन्धिः (लोपः) |
| | | – एव + अयम् | सवर्णदीर्घसन्धिः |
| | रात्र्यागमेऽवशः | – रात्र्यागमे + अवशः | पूर्वरूपसन्धिः |
| | प्रभवत्यहरागमे | – प्रभवति + अहरागमे | यण्सन्धिः |
| (ख) समासः | भूतग्रामः | – भूतानां ग्रामः – षष्ठीतत्पुरुषः । | |

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥8.20॥**

**पदार्थः** – तस्मात् = पूर्वोक्तात्, अव्यक्तात् = कारणीभूतात् प्रजापतेः, परः = कारणत्वात् उत्कृष्टः, यः अन्यः = यः विलक्षणः, भावः = पदार्थः, अव्यक्तः = इन्द्रियागोचरः, (सः) सनातनः = सः चिरन्तनः, सः = स एषः, सर्वेषु = निखिलेषु, भूतेषु = भूतग्रामेषु, नश्यत्सु = विनाशं गतेषु, न विनश्यति = नैव नाशं प्राप्नोति ।

**अन्वयः** – तस्मात् अव्यक्तात् परः यः अन्यः अव्यक्तः भावः (सः) तु सनातनः । सः सर्वेषु भूतेषु नश्यत्सु न विनश्यति ।

**तात्पर्यम्** – स्थावरजङ्गमानां सर्वेषामपि पदार्थानाम् उत्पत्तौ कारणीभूतः यः अव्यक्तः प्रजापतिः वर्तते तस्यापि कारणीभूतः कश्चित् पदार्थो वर्तते । तदेव ब्रह्म । तच्च सर्वदा भवम् । तच्च ब्रह्म पदार्थान्तरेषु नाशं गतेष्वपि न नश्यति, उत्पद्यमानेष्वति नोत्पद्यते ।

**माध्वमतम्** – अव्यक्तः भगवान् व्यक्तात् चराचरप्रपञ्चात् भिन्नः, तन्नियामकश्च । तस्मात् चराचरेषु नश्यत्सु अपि परमात्मा न नश्यति ।

**रामानुजीयमतम्** – परःभावः = उत्कृष्टः भावः ।

**व्याकरणम्** –

**(क) सन्धिः** परस्तस्मात् – परः + तस्मात् विसर्गसन्धिः (सकारः)

भावोऽन्योऽव्यक्तोऽव्यक्तात् – भावः + अन्यः + अव्यक्तः + अव्यक्तात्

विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

स सर्वेषु – सः सर्वेषु विसर्गसन्धिः (लोपः)

**(ख) समासः** अव्यक्तः – न व्यक्तः – नञ्तत्पुरुषः ।

**(ग) कृदन्तः** नश्यत्सु – नश् + शतृ । (कर्तरि) तेषु ।

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥8.21॥**

**पदार्थः** – अव्यक्तः = परमात्मा, अक्षरः = इति, उक्तः = कथितः, तम् = अक्षरम्, परमम् = उत्तमाम्, गतिम् = स्थानम्, आहुः = वर्णयन्ति, यम् = अक्षरम्, प्राप्य = गत्वा, न निवर्तन्ते = न प्रत्यागच्छन्ति, तत् मम = तत् मे, परमम् = उत्कृष्टम्, धाम = स्थानम् ।

**अन्वयः** – अव्यक्तः अक्षरः इति उक्तः तं परमां गतिम् आहुः । यं प्राप्य न निवर्तन्ते तत् मम परमं धाम ।

**तात्पर्यम्** – परमात्मा अक्षरः इति कथितः । तम् उत्तमा गतिरिति वर्णयन्ति । तम् अक्षरं प्राप्य पुरुषाः न पुनः आगच्छन्ति तदेव मम उत्कृष्टं स्थानम् ।

**माध्वमतम्**– परमं तद्धाम = भगवतः उत्तमं स्वरूपम् ।

**रामानुजीयमतम्** – अव्यक्तः अक्षरः = प्रकृतिसंसर्गवियुक्तस्वरूपेण अवस्थितः आत्मा, धाम = नियमनस्थानम् ।

**व्याकरणम्** –

**(क) सन्धिः** अव्यक्तोऽक्षरः – अव्यक्तः+ अक्षरः विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः पूर्वरूपं च

अक्षर इत्युक्तः – अक्षरः + इति विसर्गसन्धिः (लोपः)

– इति + उक्तः यण्सन्धिः

तद्धाम – तत् +धाम जश्त्वसन्धिः

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥8.22॥**

**पदार्थः** – पार्थ = अर्जुन ! भूतानि = भूतसमुदायः, यस्य अन्तःस्थानि = यस्य अन्तः वर्तते, येन = येन, इदं सर्वम् = इदं कृत्स्नम्, ततम् = व्याप्तम्, सः तु = प्रसिद्धः, परः पुरुषः = उत्तमः परमात्मा, अनन्यया भक्त्या = एकान्तभक्त्या, लभ्यः = प्राप्यः ।

**अन्वयः** – पार्थ ! भूतानि यस्य अन्तःस्थानि, येन इदं सर्वं ततम्, सः तु परः पुरुषः अनन्यया भक्त्या लभ्यः ।

**तात्पर्यम्** – अर्जुन ! सर्वाणि भूतानि यस्मिन् अन्तर्गतानि सन्ति, येन च सर्वमिदं व्याप्तं वर्तते तादृशं तत् ब्रह्म केवलम् एकान्तभक्त्या एव लभ्यम् ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | स परः | – | सः + परः | विसर्गसन्धिः (लोपः) |
| | लभ्यस्त्वनन्यया | – | लभ्यः + तु | विसर्गसन्धिः (लोपः) |
| | | – | तु + अनन्यया | यणसन्धिः |
| **(ख) समासः** | अनन्यया | – | न अन्या, तया – नञ्तत्पुरुषः । | |

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥8.23॥**

**पदार्थः** – भरतर्षभ = भरतश्रेष्ठ ! योगिनः = कर्मिणः (अष्टाङ्गयोगिनः), यत्र = यस्मिन्, काले तु = समये, प्रयाताः = मृताः, आवृत्तिम् = प्रत्यागमनम्, अनावृत्तिं च = अनागमनं च, यान्ति = प्राप्नुवन्ति, तं कालम् एव = तं समयम्, वक्ष्यामि = वदिष्यामि ।

**अन्वयः** – भरतर्षभ ! योगिनः यत्र काले तु प्रयाताः आवृत्तिम् अनावृत्तिं चैव यान्ति तं कालं वक्ष्यामि ।

**तात्पर्यम्** – भरतश्रेष्ठ ! कर्मिणः यस्मिन् समये मृताः आवृत्तिं वा अनावृत्तिम् एव यान्ति तं कालं वक्ष्यामि ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | त्वनावृत्तिम् | – | तु + अनावृत्तिम् | यणसन्धिः |
| | चैव | – | च + एव | वृद्धिसन्धिः |
| | प्रयाता यान्ति | – | प्रयाताः + यान्ति | विसर्गसन्धिः (लोपः) |
| **(ख) समासः** | अनावृत्तिम् | – | न आवृत्तिः, ताम् – नञ्तत्पुरुषः । | |

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥8.24॥**

**पदार्थः** – अग्निः = अनलः (देवता), ज्योतिः = कान्तिः, अहः = दिवसः, शुक्लः = शुक्लपक्षः, षण्मासाः उत्तरायणम् = षण्मासावधिकमुत्तरायणम्, तत्र = तस्मिन् काले, प्रयाताः = गताः, ब्रह्मविदः = ब्रह्मोपासकाः, जनाः = मानवाः, ब्रह्म = परं वस्तु, गच्छन्ति = यान्ति ।

**अन्वयः** – अग्निः ज्योतिः अहः शुक्लः षण्मासाः उत्तरायणं तत्र प्रयाताः ब्रह्मविदः जनाः ब्रह्म गच्छन्ति ।

**तात्पर्यम्** – यत्र अनलः (देवता) कान्तिः (देवता) दिवसः (देवता) शुक्लपक्षः षण्मासावधिकम् उत्तरायणम् (देवता) तस्मिन् काले गताः ब्रह्मोपासकाः जनाः ब्रह्म गच्छन्ति ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | अग्निर्ज्योतिरहः | – | अग्निः + ज्योतिः + अहः | विसर्गसन्धिः (रेफः) |
| | षण्मासा उत्तरायणम् | – | षण्मासाः + उत्तरायणम् | विसर्गसन्धिः (लोपः) |
| | प्रयाता गच्छन्ति | – | प्रयाताः + गच्छन्ति | विसर्गसन्धिः (लोपः) |
| | ब्रह्मविदो जनाः | – | ब्रह्मविदः + जनाः | विसर्गसन्धिः (सकारः) रेफः, उकारः, गुणः |
| **(ख) समासः** | उत्तरायणम् | – | अयन्ते (गच्छन्ति) अनेन इति अयनं मार्गः । | |

| | – | उत्तरम् अयनम् – कर्मधारयः । |
|---|---|---|
| ब्रह्मविदः | – | ब्रह्म विदन्ति इति ब्रह्मविदः – कर्तरि क्विप् उपपदसमासश्च । |

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥8.25॥**

**पदार्थः** – धूमः = धूमः (देवता), रात्रिः = निशा (देवता), कृष्णः = कृष्णपक्षः (देवता), तथा = एवम्, षण्मासाः दक्षिणायनम् = षण्मासावधिकं दक्षिणायनम्, तत्र = तस्मिन् समये, योगी = कर्मयोगी च, चान्द्रमसम् = चन्द्रसम्बन्धि, ज्योतिः = अर्चिः (कान्तिम्), प्राप्य = लब्ध्वा, निवर्तते = पुनः आगच्छति ।

**अन्वयः** – धूमः रात्रिः कृष्णः तथा षण्मासाः दक्षिणायनं तत्र योगी चान्द्रमसं ज्योतिः प्राप्य निवर्तते ।

**तात्पर्यम्** – यत्र धूमः (देवता) रात्रिः (देवता) एवं कृष्णपक्षः (देवता) षण्मासाः दक्षिणायनम् (देवता) तत्र काले गतः योगी चन्द्रलोकं प्राप्य निवर्तते ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | धूमो रात्रिस्तथा | – धूमः + रात्रिः | विसर्गसन्धिः (सकारः) रेफः, उकारः गुणः |
| | | – रात्रिः + तथा | विसर्गसन्धिः (सकारः) |
| | षण्मासा दक्षिणायनम् | – षण्मासाः + दक्षिणायनम् | विसर्गसन्धिः (लोपः) |
| | ज्योतिर्योगी | – ज्योतिः + योगी | विसर्गसन्धिः (रेफः) |
| **(ख) समासः** | दक्षिणायनम् | – दक्षिणम् अयनम् – दक्षिणायनम् – कर्मधारयः । | |
| **(घ) तद्धितान्तः** | चान्द्रमसम् | – चन्द्रमस् + अण् । (इदमर्थे) चन्द्रमसः इदम् इत्यर्थः । | |

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥8.26॥**

**पदार्थः** – एते हि = इमे, शुक्लकृष्णे = शुक्ला कृष्णा चेति, गती = मार्गौ, जगतः = प्रपञ्चस्य, शाश्वते = नित्यौ, मते = अभीष्टौ, एकया = एकेन मार्गेण, अनावृत्तिम् = अनागमनम्, याति = गच्छति, अन्यया = अपरेण मार्गेण, पुनः = भूयः, आवर्तते = आवृत्तिं प्राप्नोति ।

**अन्वयः** – एते हि शुक्लकृष्णे गती जगतः शाश्वते मते । एकया अनावृत्तिं याति अन्यया पुनः आवर्तते ।

**तात्पर्यम्** – एवं शुक्लः कृष्णः चेति द्वौ मार्गौ स्तः । तत्र शुक्लमार्गेण ये गच्छन्ति ते न पुनरायान्ति । कृष्णमार्गेण पुनः ये गच्छन्ति ते चन्द्रलोकं प्राप्य पुनरायान्ति ।

**व्याकरणम्** –

| | | | |
|---|---|---|---|
| **(क) सन्धिः** | ह्येते | – हि + एते | यण्सन्धिः |
| | यात्यनावृत्तिम् | – याति + अनावृत्तिम् | यण्सन्धिः |
| | अन्ययावर्तते | – अन्यया + आवर्तते | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | शुक्लकृष्णे | – शुक्ला च कृष्णा च – द्वन्द्वः । | |
| | अनावृत्तिम् | – न आवृत्तिः, ताम् – नञ्तत्पुरुषः । | |

**नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥8.27॥**

**पदार्थः** – पार्थ = अर्जुन ! कश्चन = कोऽपि, योगी = समाहितचित्तः, एते = इमे, सृती = गती, जानन् = विदन्, न मुह्यति = भ्रान्तो न भवति, तस्मात् = ततः हेतोः, सर्वेषु = निखिलेषु, कालेषु = समयेषु, योगयुक्तः = समाधिविशिष्टः, भव = वर्तस्व ।

**अन्वयः** – पार्थ ! एते सृती जानन् कश्चन् योगी न मुह्यति । तस्मात् अर्जुन ! सर्वेषु कालेषु योगयुक्तः भव ।

**तात्पर्यम्** – अर्जुन ! एतौ मार्गौ विदन् कोऽपि योगी भ्रान्तो न भवति । तस्मात् सर्वेषु कालेषु समाहितचित्तः भव।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | नैते | – | न + एते | वृद्धिसन्धिः |
| | योगयुक्तो भवार्जुन | – | योगयुक्तः + भव | विसर्गसन्धिः (सकार) रेफः, उकारः, गुणः |
| | | – | भव + अर्जुन | सवर्णदीर्घसन्धिः |
| **(ग) कृदन्तः** | सृती | – | सृ + क्तिन् (करणे) । सरन्ति आभ्याम् इति सृती । | |

**वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥8.28॥**

**पदार्थः** – योगी = समाहितचित्तः, इदम् = एतत्, सर्वम् = सकलम्, विदित्वा = विज्ञाय, वेदेषु = निगमेषु, यज्ञेषु = यागेषु, तपस्सु = व्रतेषु, दानेषु च एव = वितरणेषु च, पुण्यफलम् = सुकृतफलम्, प्रदिष्टम् = प्रोक्तम्, तत्सर्वम् = तत्सकलम्, अत्येति = अतिक्राम्यति, परम् = उत्तमम्, आद्यम् = मूलकारणम्, स्थानम् = प्रदेशम्, उपैति = प्राप्नोति ।

**अन्वयः** – योगी एतत् सर्वं विदित्वा वेदेषु यज्ञेषु तपस्सु दानेषु च एव यत् पुण्यफलं प्रदिष्टं तत् अत्येति परम् आद्यं स्थानम् उपैति ।

**तात्पर्यम्** – समाहितचित्तः एतत् सर्वं विज्ञाय निगमेषु यागेषु व्रतेषु दानेषु च यत् सुकृतफलं प्रोक्तं तत् सर्वम् उपेक्षमाणः अतिक्राम्यति । सर्वेषां यत् मूलं तत् ब्रह्म प्राप्नोति ।

**माध्वमतम्**– इदम् अध्यात्मादिस्वरूपम्, भगवतः अशेषस्रष्टृत्वम्, शुक्लकृष्णमार्गादिकं च प्रागुक्तं विदित्वा अतिशयफलवान् भवति ।

**व्याकरणम्** –

| | | | | |
|---|---|---|---|---|
| **(क) सन्धिः** | चैव | – | च + एव | वृद्धिसन्धिः |
| | चाद्यम् | – | च + आद्यम् | सवर्णदीर्घसन्धिः |
| **(ख) समासः** | पुण्यफलम् | – | पुण्यस्य फलम् – षष्ठीतत्पुरुषः । | |

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अक्षरब्रह्मयोगो नाम अष्टमोऽध्यायः ॥

श्रीमद्भगवद्गीता

अथ नवमोऽध्यायः

## राजविद्याराजगुह्ययोगः

**श्रीभगवान् उवाच -** **इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥9.1॥**

**पदार्थः** - विज्ञानसहितम् = उपासनयुक्तम्, गुह्यतमम् = गोप्यतमम्, इदं तु = एतत्, ज्ञानं = ज्ञानम्, अनसूयवे = ईर्ष्यारहिताय, ते = तुभ्यम्, प्रवक्ष्यामि = वदिष्यामि, यत् = यत् ज्ञानम्, ज्ञात्वा = विज्ञाय, अशुभात् = अनर्थात्, मोक्ष्यसे = परित्यक्ष्यसे ।

**अन्वयः** - अनसूयवे ते इदं तु गुह्यतमं विज्ञानसहितं ज्ञानं प्रवक्ष्यामि यत् ज्ञात्वा अशुभात् मोक्ष्यसे ।

**तात्पर्यम्** - अर्जुन ! यदिदम् आत्मज्ञानम् तस्य च यदुपासनं तदुभयमपि ते कथयामि यत् ज्ञात्वा अनिष्टात् अस्मात् संसारात् मुक्तिं प्राप्नोषि ।

**रामानुजीयमतम्** - ज्ञानम् - भक्तिरूपम् उपासनाख्यं ज्ञानम् । विज्ञानम् - उपासनगतिविशेषज्ञानम् ।

**व्याकरणम्** - अनसूयवे - न विद्यते असूया यस्य सः - अनसूयः, तस्मै - नञ्बहुव्रीहिः । गुह्यतमम् - अतिशयेन गुह्यम् । (अतिशयार्थे तमप्प्रत्ययः ।)

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥9.2॥**

**पदार्थः** - इदम् = एतद् ज्ञानम्, राजविद्या = उत्तमविद्या, राजगुह्यम् = अतीव गोप्यम्, पवित्रम् = पावनम्, उत्तमम् = श्रेष्ठम्, प्रत्यक्षावगमम् = स्फुटबोधम्, धर्म्यम् = धर्मोपेतम्, कर्तुम् = आचरितुम्, सुसुखम् = अक्लिष्टम्, अव्ययम् = अविनाशि ।

**अन्वयः** - इदं राजविद्या राजगुह्यं पवित्रम् उत्तमं प्रत्यक्षावगमं धर्म्यं कर्तुं सुसुखम् अव्ययम् ।

**तात्पर्यम्** - उपासनसहितं यत् इदं ज्ञानमस्ति तत् विद्यासु श्रेष्ठम्, गोपनीयेषु अपि श्रेष्ठं पावनं च । किञ्च अस्य प्रतीतिरपि स्फुटा भवति । तादृशमिदं सुखेन आचरणयोग्यम् अनश्वरं च ।

**रामानुजीयमतम्** - राजाविद्या - विद्यानां राजा । राजगुह्यम् - गुह्यानां राजा । अवगमः - विशेषः ।

**व्याकरणम्** - प्रत्यक्ष्यावगमम् - प्रत्यक्षः अवगमः यस्य तत् - बहुव्रीहिः । राजविद्या - विद्यानां राजा - तत्पुरुषः । राजगुह्यम् - गुह्यानां राजा - तत्पुरुषः ।

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥9.3॥**

**पदार्थः** - परन्तप = शत्रुतापन ! अस्य = एतस्य, धर्मस्य = आत्मज्ञानरूपस्य धर्मस्य, अश्रद्दधानाः = विश्वासरहिताः, पुरुषाः = मानवाः, माम् अप्राप्य = माम् अलब्ध्वा, मृत्युसंसारवर्त्मनि = मरणसहित-संसारमार्गे, निवर्तन्ते = प्रत्यागच्छन्ति ।

---

**वि.सू.** - अस्मिन् अध्याये इतः अग्रिमेषु अध्यायेषु च व्याकरणविभागे उपविभागाः नैव दर्शिताः सन्ति । विशेषाः व्याकरणांशाः एव तत्र तत्र दर्शिताः सन्ति ।

**अन्वयः** – परन्तप ! अस्य धर्मस्य अश्रद्दधानाः पुरुषाः माम् अप्राप्य मृत्युसंसारवर्त्मनि निवर्तन्ते ।

**तात्पर्यम्** – येषाम् अस्मिन् उपासनसहिते आत्मज्ञाने धर्मसम्मते श्रद्धा नास्ति ते मां न प्राप्नुवन्ति, प्रत्युत जरामरणादियुक्तम् इमं संसारमार्गमेव प्रत्यायान्ति ।

**व्याकरणम्** – मृत्युसंसारवर्त्मनि – मृत्युश्च संसारश्च मृत्युसंसारौ – द्वन्द्वः, मृयुसंसारयोः वर्त्म, तस्मिन् – सप्तमीतत्पुरुषः । अश्रद्धधानाः – न श्रद्धधानाः – नञ्तत्पुरुषः । श्रद्धारहिताः इत्यर्थः ।

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥9.4॥**

**पदार्थः** – अव्यक्तमूर्तिना च मया = अतीन्द्रियेण च मया, इदम् = एतत्, सर्वम् = निखिलम्, जगत् = भुवनम्, ततम् = व्याप्तम्, सर्वभूतानि = स्थावराणि जङ्गमानि च भूतानि, मत्स्थानि = मयि वर्तमानानि, अहं तेषु = अहं तेषु भूतेषु, न अवस्थितः = न स्थितः अस्मि ।

**अन्वयः** – अव्यक्तमूर्तिना च मया इदं सर्वं जगत् ततम् । सर्वभूतानि मत्स्थानि । अहं तेषु न अवस्थितः ।

**तात्पर्यम्** – मम स्वरूपं कस्यापि इन्द्रियाणां गोचरः न भवति । तादृशः अहं सृष्ट्वा समग्रं जगदिदं व्याप्तवान् अस्मि । तस्मात् सर्वाण्यपि स्थावरजङ्गमानि भूतानि मयि अधीनानि सन्ति । अहं न तेषु अधीनोऽस्मि ।

**रामानुजीयमतम्** – अव्यक्तमूर्तिः – अप्रकाशितस्वरूपः ।

**व्याकरणम्** – अव्यक्तमूर्तिना – अव्यक्ता मूर्तिः यस्य सः, तेन – बहुव्रीहिः । मत्स्थानि – मयि तिष्ठन्ति, मद्गतानि इत्यर्थः ।

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥9.5॥**

**पदार्थः** – भूतानि = सकलवस्तूनि, न च = न अपि, मत्स्थानि = मयि स्थितानि, भूतभृत् = भूतधृत्, भूतस्थः = भूतस्थितः, न च = न अपि, मम = मे, आत्मा = स्वरूपम्, भूतभावनः = भूतोद्भवकरः, मे = मम, ऐश्वरम् = असाधारणम्, योगम् = अघटितघटनाचातुर्यम्, पश्य = अवलोकय ।

**अन्वयः** – (वस्तुतः) भूतानि मत्स्थानि न । भूतभृत् च भूतभावनः च मम आत्मा भूतस्थः न । ऐश्वरं मे योगं पश्य ।

**तात्पर्यम्** – यद्यपि अहं भूतानि सृजामि, तानि धारयामि तथा पालयामि इति तानि भूतानि मयि सन्ति इति सर्वे निर्णयन्ति, तथापि सङ्गरहितत्वात् भूतानि मयि न सन्ति इति वस्तुस्थितिः । इदमेव मम अघटित-घटनाचातुर्यरूपम् ऐश्वर्यम् । तदेव मम मायावैभवम् ।

**माध्वमतम्**– चराचरात्मकजगतः भगवानेव आश्रयः । किन्तु भूतलस्य इव भगवतः आश्रयत्वं जीवैः नानुभूयते । भगवच्छरीरमपि भूताश्रयः भूतकारणम् । परन्तु तच्छरीरं न कदापि जीवान् आश्रयते ।

**व्याकरणम्** – भूतभावनः – भूतानां भावनः – षष्ठीतत्पुरुषः । ऐश्वरम् – ईश्वरः + अण् । (इदमर्थे)

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥9.6॥**

**पदार्थः** – यथा = येन प्रकारेण, नित्यम् = सदा, सर्वत्रगः = सर्वत्र गन्ता, महान् = महापरिमाणः,

आकाशस्थितः = नभसि वर्तमानः, वायुः = अनिलः, तथा = तेन प्रकारेण, मत्स्थानि = मयि स्थितानि, सर्वाणि = सकलानि, भूतानि इति = भूतानि इति, उपधारय = जानीहि ।

**अन्वयः** - यथा नित्यं सर्वत्रगः महान् आकाशस्थितः वायुः तथा मत्स्थानि सर्वाणि भूतानि इति उपधारय ।

**तात्पर्यम्** - यथा सदा सर्वत्र संचरन् महान् वायुः आकाशे वर्तमानोऽपि न तेन सम्बध्यते तथा सर्वाणि भूतानि मयि वर्तमानान्यपि निस्सङ्गत्वात् न मया सम्बध्यन्ते इति विजानीहि ।

**माध्वमतम्**- आकाशे स्थितः महावायुः तत्तद्धर्मं (शैत्यस्पर्शादिकम्) स्वभावतः नाप्नोति । एवमेव भगवति स्थितानि भूतानि अन्योन्यधर्मसंक्रान्तिमन्ति न भवन्ति ।

**व्याकरणम्** - आकाशे स्थितः - आकाशस्थितः - सप्तमीतत्पुरुषः । सर्वत्र गच्छतीति सर्वत्रगः । कर्तरि डप्रत्ययः उपपदसमाश्च ।

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ।।9.7।।**

**पदार्थः** - कौन्तेय = कुन्तीपुत्र ! कल्पक्षये = प्रलयकाले, सर्वभूतानि = समस्तभूतानि, मामिकाम् = मदीयाम्, प्रकृतिम् = त्रिगुणात्मिकां प्रकृतिम्, यान्ति = प्राप्नुवन्ति, अहं कल्पादौ = अहं सृष्टिकाले, पुनः = भूयः, तानि = तानि भूतानि, विसृजामि = उत्पादयामि ।

**अन्वयः** - कौन्तेय ! कल्पक्षये सर्वभूतानि मामिकां प्रकृतिं यान्ति । पुनः कल्पादौ तानि अहं विसृजामि ।

**तात्पर्यम्** - हे अर्जुन ! यदा कल्पस्य क्षयः भवति तदा सर्वाण्यपि भूतानि मायारूपां मम शक्तिं प्रविशन्ति, अर्थात् तत्रैव लीयन्ते । यदा पुनः कल्पस्य आरम्भः तदा निलीनानि तानि सर्वाण्यपि भूतानि पुनः अहं सृजामि ।

**माध्वमतम्**- प्रलयकाले जीवजडजातानि मदधीनां त्रिगुणात्मिकां प्रकृतिं यान्ति ।

**व्याकरणम्** - कल्पक्षये - कल्पस्य क्षयः, तस्मिन् - षष्ठीतत्पुरुषः । कल्पादौ - कल्पस्य आदिः, तस्मिन् -षष्ठीतत्पुरुषः।

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।।9.8।।**

**पदार्थः** - स्वाम् = स्वकीयाम्, प्रकृतिम् = शक्तिम्, अवष्टभ्य = अवलम्ब्य, प्रकृतेः वशात् = स्वभाववशात्, अवशम् = कर्मपरतन्त्रम्, इमम् = अमुम्, कृत्स्नम् = सर्वम्, भूतग्रामम् = भूतसमुदायम्, पुनः पुनः = भूयो भूयः, विसृजामि = उत्पादयामि ।

**अन्वयः** - स्वां प्रकृतिम् अवष्टभ्य प्रकृतेः वशात् अवशम् इमं कृत्स्नं भूतग्रामं पुनः पुनः विसृजामि ।

**तात्पर्यम्** - यावन्ति भूतानि कल्पक्षये प्रकृतौ लीनानि सन्ति कल्पादौ तु तामेव प्रकृतिम् अधिष्ठाय तान्येव सर्वाणि भूतानि पुनः सृजामि ।

**व्याकरणम्** - अवष्टभ्य - अव + स्तम्भु + ल्यप् । भूतानां ग्रामः, तम् - भूतग्रामम् - षष्ठीतत्पुरुषः । न वशः - अवशः - नञ्तत्पुरुषः ।

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ।।9.9।।**

**पदार्थः** – धनञ्जय = अर्जुन ! उदासीनवत् = उपेक्षकवत्, आसीनम् = तिष्ठन्तम्, तेषु कर्मसु = तेषु कर्मविशेषेषु, असक्तं च माम् = असङ्गं माम्, तानि कर्मणि = कर्मविशेषाः, न निबध्नन्ति = न संयच्छन्ति।

**अन्वयः** – धनञ्जय ! तेषु कर्मसु असक्तं च उदासीनवत् आसीनं मां तानि कर्माणि न निबध्नन्ति।

**तात्पर्यम्** – यद्यपि अहं प्रकृतिम् अवलम्ब्य सृष्ट्यादीनि कार्याणि करोमि तथापि तत्र निरपेक्षतया स्थितिरिति हेतोः तानि कर्माणि मां न बध्नन्ति।

**व्याकरणम्** – आसीनः – आस् + लट् शानच्। उदासीनवत् – उदासीन + वतुप् (तुल्यार्थे)। उदासीनः इव इति विवक्षितोऽर्थः।

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥9.10॥**

**पदार्थः** – कौन्तेय = अर्जुन ! मया अध्यक्षेण = साक्षिभूतस्य मम सन्निधिमात्रेण, प्रकृतिः = माया, सचराचरम् = सजङ्गमस्थावरं जगत्, सूयते = उत्पादयति, अनेन = एतेन, हेतुना = कारणेन, जगत् = प्रपञ्चः, विपरिवर्तते = विपरिणमते।

**अन्वयः** – कौन्तेय ! अध्यक्षेण मया प्रकृतिः सचराचरं सूयते। अनेन हेतुना जगत् विपरिवर्तते।

**तात्पर्यम्** – साक्षिभूतस्य मम सन्निधिमात्रेण प्रकृतिरियं स्थावरजङ्गमात्मकम् इमं प्रपञ्चम् उत्पादयति। उत्पन्नश्च सः मत्सन्निधिवशादेव नानाकारः प्रतिभासते।

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥9.11॥**

**पदार्थः** – मम = मम, परं भावम् = श्रेष्ठं तत्त्वम्, अजानन्तः = अनवगच्छन्तः, मूढाः = अविवेकिनः, मानुषीम् = मानवीम्, तनुम् = मूर्तिम्, आश्रितम् = प्राप्तम्, भूतमहेश्वरम् = भूतानाम् अधिपम्, माम् अवजानन्ति = मां परिभवन्ति।

**अन्वयः** – मम परं भावम् अजानन्तः मूढाः मानुषीं तनुम् आश्रितं मां भूतमहेश्वरम् अवजानन्ति।

**तात्पर्यम्** – सर्वेषां भूतानाम् ईश्वरोऽहं भक्तेच्छावशात् मनुष्यरूपेण भूमौ अवतीर्णः अस्मि। मम इमं मनुष्याकारं दृष्ट्वा अविवेकिनः अयं साधारणः इति भावयन्तः तिरस्कुर्वन्ति।

**रामानुजीयमतम्** – भूतमहेश्वरः – अन्यत्र देहमात्रपरमेश्वरः जीवात्मा इत्युक्तम्। अत्र सर्वभूतानां महेश्वरः परमात्मा एकः एव इति वक्तव्यम्।

**व्याकरणम्** – मानुषी – मनुष्यस्य इयमिति इदमर्थे अण् प्रत्ययः, स्त्रीत्वे ङीप्। भूतमहेश्वरः – भूतानां महेश्वरः, तम् – षष्ठीतत्पुरुषः।

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥9.12॥**

**पदार्थः** – मोघाशाः = व्यर्थतृष्णाः, मोघकर्माणः = व्यर्थयज्ञाः, मोघज्ञानाः = निष्फलज्ञानाः, विचेतसः = विगतविवेकाः, राक्षसीम् = राक्षससम्बन्धिनीम्, आसुरीं च एव = असुरसम्बन्धिनीम्, मोहिनीम् =

व्यामोहकारिणीम्, प्रकृतिम् = स्वभावम्, श्रिताः = आस्थिताः । (मानुषीं तनुम् आश्रितं माम् अवजानन्ति)

**अन्वयः** – मोघाशाः मोघकर्माणः मोघज्ञानाः विचेतसः राक्षसीम् आसुरीं च मोहिनीं प्रकृतिम् एव श्रिताः (मानुषीं तनुम् आश्रितं माम् अवजानन्ति) ।

**तात्पर्यम्** – येषां मनोरथः व्यर्थः, कर्म व्यर्थम्, ज्ञानं च व्यर्थं तादृशाः बुद्धिहीनाः, तमोगुणप्रधानाः, राक्षसानां प्रकृतिम् आश्रिताः जनाः मनुष्याकारं माम् अवलोक्य अयं साधारणः इति भावयन्तः अवमानयन्ति ।

**व्याकरणम्** – आसुरीम् – असुराणाम् इयमिति इदमर्थे अण्, स्त्रीत्वे ङीप्, ताम् । राक्षसीम् – रक्षसाम् इयमिति इदमर्थे अण्, स्त्रीत्वे ङीप्, ताम् । मोघाशाः – मोघा आशा येषां ते – बहुव्रीहिः । मोघकर्माणः – मोघानि कर्माणि येषां ते – बहुव्रीहिः । मोघज्ञानाः – मोघं ज्ञानं येषां ते – बहुव्रीहिः । विचेतसः – विगतं चेतः येभ्यः ते – बहुव्रीहिः ।

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥9.13॥**

**पदार्थः** – पार्थ = अर्जुन ! दैवीम् = देवसम्बन्धिनम्, प्रकृतिम् = स्वभावम्, आश्रिताः = प्राप्ताः, महात्मानः तु = महानुभावाः तु, मां भूतादिम् = मां सर्वभूतकारणम्, अव्ययम् = अविनाशिनम्, ज्ञात्वा = विदित्वा, अनन्यमनसः = एकाग्रचित्ताः, भजन्ति = सेवन्ते ।

**अन्वयः** – पार्थ ! दैवीं प्रकृतिम् आश्रिताः महात्मानः तु मां भूतादिम् अव्ययम् ज्ञात्वा अनन्यमनसः भजन्ति ।

**तात्पर्यम्** – सत्त्वगुणप्रधानाः महात्मानस्तु देवानां प्रकृतिम् आश्रिताः मां सर्वेषां भूतानां कारणम् अविनाशिनं च मत्वा एकाग्रचित्ताः सन्तः मां ध्यायन्ति ।

**व्याकरणम्** – दैवीम् – देवानाम् इयमिति इदमर्थे अण्, स्त्रीत्वे ङीप् ताम् । भूतादिः – भूतानाम् आदिः, तम् – षष्ठीतत्पुरुषः । अनन्यमनसः – अन्यस्मिन् मनः येषां ते अन्यमनसः – बहुव्रीहिः । न अन्यमनसः अनन्यमनसः – नञ्तत्पुरुषः ।

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥9.14॥**

**पदार्थः** – दृढव्रताः = कठोरनियमाः, सततम् = सदा, मां कीर्तयन्तः = मां गायन्तः, यतन्तः च = पूजादिषु प्रयत्नं कुर्वन्तः, भक्त्या = प्रीत्या, नमस्यन्तः च = नमस्कुर्वन्तः च, नित्ययुक्ताः = सततयोगाः सन्तः, माम् उपासते = मां भजन्ते ।

**अन्वयः** – दृढव्रताः सततं कीर्तयन्तः यतन्तः च मां नमस्यन्तः च नित्ययुक्ताः भक्त्या माम् उपासते ।

**तात्पर्यम्** – केचित् कठोरं नियमम् अनुसरन्तः पुरुषाः मां सर्वदा स्तुवन्तः, पूजादिषु प्रयत्नं कुर्वन्तः, भक्त्या नमस्कुर्वन्तश्च मां सर्वदा समाहितमनस्काः सेवन्ते ।

**व्याकरणम्** – दृढव्रताः – दृढं व्रतं येषां ते – बहुव्रीहिः । नित्ययुक्ताः – नित्यं युक्ताः – सुपूसमासः ।

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥9.15॥**

**पदार्थः** – अन्ये च = इतरे तु, विश्वतोमुखं माम् = सर्वतोमुखं माम्, ज्ञानयज्ञेन = तत्त्वज्ञानरूपयज्ञेन, एकत्वेन =

एकतया, पृथक्त्वेन = पृथक्तया, बहुधा = बहुप्रकारेण, यजन्तः अपि = आराधयन्तः अपि, उपासते = सेवन्ते।

**तात्पर्यम्** – अन्ये एतत्सर्वं वासुदेव इति ज्ञानरूपेण यज्ञेन मां पूजयन्ति। तत्रापि केचन सर्वत्र वर्तमानं माम् एकमेव परं ब्रह्मेति बुद्ध्या पूजयन्ति, अन्ये तु तादृशस्य ब्रह्मणः दासोऽहमिति भेदबुद्ध्या इति विशेषः।

**अन्वयः** – अन्ये च विश्वतोमुखं मां ज्ञानयज्ञेन एकत्वेन पृथक्त्वेन बहुधा यजन्तः अपि उपासते।

**माध्वमतम्** – केचन भक्ताः श्रवणमननादिरूपेण ज्ञानयज्ञेन मां सततं भजन्ते। एकत्वेन स्थितम् = भगवतः रूपेषु नारायणरूपम्, पृथक्त्वेन स्थितम् = वासुदेवादि यत् रूपम्, बहुधा स्थितम् = नारायणादिपञ्चरूपम्, विश्वतोमुखम् = द्वादशचतुर्विंशतिभेदेन स्थितं भगवद्रूपम् उपासते।

**व्याकरणम्** – ज्ञानयज्ञः – ज्ञानमेव यज्ञः, तेन – कर्मधारयः। विश्वतोमुखम् – विश्वतः मुखानि यस्य सः, तम् – बहुव्रीहिः। एकत्वेन – एकस्य भावः एकत्वम्, तेन – भावार्थे त्वप्रत्ययः। पृथक्त्वेन – पृथक् भावः पृथक्त्वम्, तेन। भावार्थे त्वप्रत्ययः।

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥9.16॥**

**पदार्थः** – अहं क्रतुः = अहं वेदोक्तः यज्ञः, अहं यज्ञः = अहं स्मार्तः यज्ञः, अहं स्वधा = अहं पितृभ्यः प्रदेयमन्नम्, अहम् औषधम् = अहं भेषजम्, अहं मन्त्रः = अहं वेदमन्त्रः, अहम् आज्यम् = अहं घृतम्, अहम् अग्निः = अहम् अनलः, अहमेव हुतम् = हवनकर्म अहमेव।

**अन्वयः** – अहं क्रतुः, अहं यज्ञः, अहं स्वधा, अहम् औषधम्, अहं मन्त्रः, अहम् आज्यम्, अहम् अग्निः, अहमेव हुतम्।

**तात्पर्यम्** – अहं श्रौतयज्ञः, स्मार्तयज्ञः, पितृभ्यो देयं हविः, औषधम्, मन्त्रः, आज्यम्, हविश्चेति सर्वमपि अस्मि।

**पिताहमस्य जगतो माता धाता पितामहः।**
**वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेव च ॥ 9.17 ॥**

**पदार्थः** – अस्य = एतस्य, जगतः = प्रपञ्चस्य, पिता = जनकः, माता = जननी, धाता = पोषयिता, पितामहः = पितुः पिता, वेद्यम् = वेदितव्यं वस्तु, पवित्रम् = पावनं वस्तु, ओङ्कारः = प्रणवः, ऋक् = ऋग्वेदः, साम = सामवेदः, यजुः च = यजुर्वेदः च, अहमेव = अहमेव।

**अन्वयः** – अस्य जगतः पिता माता धाता पितामहः वेद्यं पवित्रम् आङ्कारः ऋक् साम यजुः च अहम् एव।

**तात्पर्यम्** – अहमेव अस्य जगतः पिता, माता, पोषयिता, पितामहः, ज्ञेयं वस्तु, पावयिता, ओङ्कारः, ऋग्वेदादिश्च अस्मि।

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥9.18॥**

**पदार्थः** – गतिः = अहमेव कर्मफलम्, भर्ता = पोषणकर्ता, प्रभुः = स्वामी, साक्षी = शुभाशुभयोः द्रष्टा, निवासः = गृहम्, शरणम् = रक्षकः, सुहृत् = सखा, प्रभवः = उत्पत्तिहेतुः, प्रलयः = प्रलयहेतुः, स्थानम् = आधारः, निधानम् = लयस्थानम्, अव्ययम् = नाशरहितं च, बीजम् = प्ररोहनिमित्तम्।

**अन्वयः** – (अहमेव) गतिः भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् प्रभवः प्रलयः स्थानं निधानम् अव्ययम् बीजम्।

**तात्पर्यम्** – अहमेव कर्मणां फलम्, पोषकः, स्वामी, शुभाशुभयोः द्रष्टा, वासस्थानम्, रक्षकः, हितकारी, उत्पत्तिस्थानम्, प्रलयकर्ता, आधारः, लयस्थानम्, नाशरहितं बीजं च अस्मि ।

**माध्वमतम्**– गतिः = मुमुक्षुभिः अवगम्यः, भर्ता = पोषकः, प्रभुः = स्वामी, साक्षी = सर्वं साक्षात् ईक्षते, निवासः = आश्रयः, शरणम् = भीतरक्षकः, सुहृत् = अनिमित्तोपकारी, प्रभवः = जगदुत्पत्तिकर्ता, प्रलयः = प्रलयकर्ता, स्थानम् = सर्वाधारः, निधनम् = प्रलयकाले प्रकृत्या जगत् अत्र (भगवति) निधीयते इत्यतः, बीजम् = जगद्व्यञ्जकः, अव्ययम् = अविकारी ।

**रामानुजीयमतम्** – अव्ययं बीजम् – तत्र तत्र व्ययरहितं कारणम् ।

**व्याकरणम्** – प्रभवति अस्मात् इति प्रभवः उत्पत्तिस्थानम् – अपादाने अप् । प्रलीयते अनेन इति प्रलयः लयसाधनम् – करणे अच् । तिष्ठन्ति भूतानि अस्मिन् इति स्थानम् आधारः – अधिकरणे ल्युट् ।

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥9.19॥**

**पदार्थः** – अर्जुन = हे अर्जुन ! अहं तपामि = अहं तापयामि, वर्षम् = वृष्टिम्, निगृह्णामि = रुणध्मि, उत्सृजामि च= त्यजामि अपि, अमृतं च एव = अमृतम् अपि, मृत्युः च = मरणं च, सत् = स्थूलं दृश्यम्, असत् च = सूक्ष्मं च ।

**अन्वयः** – अर्जुन ! अहं तपामि, अहं वर्षं निगृह्णामि, अहम् उत्सृजामि च । अहम् एव अमृतं च मृत्युः च सत् असत् च ।

**तात्पर्यम्** – अहमेव ग्रीष्मकाले आदित्यरूपः सन् जगदिदं तापयामि । वृष्टिकाले चतुरः मासान् जलं मुञ्चामि, अन्यान् अष्ट मासान् निगृह्णामि । अहमेव सर्वेषां जीवनं मृत्युश्च । अहमेव स्थूलं दृश्यं सूक्ष्मं च ।

**माध्वमतम्**– आदित्यमण्डलगतः जगत् सन्तपामि । मेघमण्डलगतः वृष्टिं ददामि, निगृह्णामि । इन्द्रियाणां देहधारणेन मृतिं परिहरामि । प्रलयकाले जनान् संहरामि । सद्गुणपूर्णत्वात् सदिति तादृशपुरुषान्तर-विरहात् असदिति च अभिधानं वहामि ।

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥9.20॥**

**पदार्थः** – त्रैविद्याः = वेदत्रयविदः, सोमपाः = सोमपायिनः, पूतपापाः = अपगतकिल्बिषाः, यज्ञैः = क्रतुभिः, माम् इष्ट्वा = मां पूजयित्वा, स्वर्गतिम् = स्वर्गगमनम्, प्रार्थयन्ते = याचन्ते, ते = ते जनाः, पुण्यम् =पवित्रम्, सुरेन्द्रलोकम् = इन्द्रलोकम्, आसाद्य = प्राप्य, दिवि = स्वर्गे, दिव्यान् = स्वर्गस्थितान्, देवभोगान् = सुरभोगान्, अश्नन्ति = अनुभवन्ति ।

**अन्वयः** – त्रैविद्याः सोमपाः पूतपापाः मां यज्ञैः इष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्यं सुरेन्द्रलोकम् आसाद्य दिवि दिव्यान् देवभोगान् अश्नन्ति ।

**तात्पर्यम्** – वेदत्रयविदः केचित् सोमयागेन इन्द्रादीन् सन्तोष्य यागशेषं सोमं च पीत्वा स्वर्गं प्राप्नुवन्ति । तत्र कञ्चित् कालं वसन्तः दिव्यान् भोगान् अनुभवन्ति ।

**रामानुजीयमतम्** – त्रैविद्याः – ऋग्यजुस्सामरूपाः तिस्रः विद्याः – त्रिविद्यम् केवलं त्रिविद्ये निष्ठाः त्रिविद्याः न तु त्र्यन्तरूपायाम् उपनिषदि निष्ठाः ।

**व्याकरणम्** – त्रैविद्याः – त्रिसंख्याका विद्या त्रिविद्या – मध्यमपदलोपी कर्मधारयः । त्रिविद्याम् अधीयते विदन्ति वा इत्यर्थे अण् त्रैविद्याः । वेदत्रयम् अधीयानाः विदन्तः वा इत्यर्थः । सोमं पिबन्ति इति सोमपाः । कर्तरि कप्रत्ययः, उपपदसमासश्च । पूतं पापं येषां ते पूतपापाः – बहुव्रीहिः ।

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥9.21॥**

**पदार्थः** – ते = ते मानवाः, विशालम् = विपुलम्, तम् = प्रसिद्धम्, स्वर्गलोकम् = स्वर्गभुवनम्, भुक्त्वा = अनुभूय, पुण्ये = सत्कर्मजन्यफलविशेषे, क्षीणे = विनष्टे सति, मर्त्यलोकम् = मानवलोकम्, विशन्ति = प्रविशन्ति । एवम् = इत्थम्, त्रयीधर्मम् = वेदत्रयधर्मम्, अनुप्रपन्नाः = प्राप्ताः, कामकामाः = भोगवस्तूनि इच्छन्तः, गतागतम् = यातायातम्, लभन्ते = प्राप्नुवन्ति ।

**अन्वयः** – ते तं विशालं स्वर्गलोकं भुक्त्वा पुण्ये क्षीणे (सति) मर्त्यलोकं विशन्ति । एवं त्रयीधर्मम् अनुप्रपन्नाः कामकामाः गतागतं लभन्ते ।

**तात्पर्यम्** – ते च वेदत्रयविदः विशाले तस्मिन् स्वर्गलोके कञ्चित् कालं सुखम् अनुभूय पुण्ये क्षीणे सति इमं लोकम् आगच्छन्ति । पुनरपि वैदिकमार्गम् अनुसरन्तः भोगान् अपेक्षमाणाः स्वर्गं गच्छन्ति । ततः पुण्ये क्षीणे सति ततः प्रत्यागच्छन्ति ।

**व्याकरणम्** – स्वर्गः इति लोकः, स्वर्गलोकः, तम् – कर्मधारयः । मर्त्यानां लोकः मर्त्यलोकः, तम् – षष्ठीतत्पुरुषः । अनु प्र इति उपसर्गद्वयपूर्वकात् पद्धातोः कर्तरि क्तप्रत्यये अनुप्रपन्नाः इति शब्दः – प्राप्ताः इत्यर्थः । त्रय्याः धर्मः त्रयीधर्मः, तम् – षष्ठीतत्पुरुषः । गतं च आगतं च अनयोः समाहारः गतागतम् – द्वन्द्वः । कामान् (सुखकरपदार्थान्) कामयन्ते इति कामकामाः – कर्तरि अण्प्रत्ययः ।

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥9.22॥**

**पदार्थः** – अनन्याः = मामेव आश्रिताः, ये जनाः = ये मानवाः, चिन्तयन्तः = ध्यायन्तः, मां पर्युपासते = मां सेवन्ते, नित्याभियुक्तानाम् = सततयोगिनाम्, तेषाम् = एतेषाम्, योगक्षेमम् = अप्राप्तस्य लाभं प्राप्तस्य च परिपालनम्, वहामि = धारयामि ।

**अन्वयः** – अनन्याः ये जनाः मां चिन्तयन्तः पर्युपासते नित्याभियुक्तानां तेषां योगक्षेमम् अहम् वहामि ।

**तात्पर्यम्** – ये जनाः इन्द्रादीन् विहाय मामेव शरणम् आपन्नाः सेवन्ते तेषाम् अप्राप्तस्य प्राप्तिं स्थितस्य च परिरक्षणम् अहं करोमि ।

**माध्वमतम्** – अन्यदचिन्तयन्तः, भगवन्तमेव चिन्तयन्तः ये जनाः भक्त्युद्रेकेण तमुपासते, मनोवाक्कायैः नित्यस्मरणशीलानां तेषां मोक्षरूपं योगं तस्य अनन्तत्वं (क्षेमम्) च भगवान् वहति ।

**व्याकरणम्** – न विद्यते अन्यः येषां ते, अनन्याः – बहुव्रीहिः । योगश्च क्षेमं च अनयोः समाहारः योगक्षेमम् – द्वन्द्वः । नित्यम् अभियुक्ताः, तेषाम्, नित्याभियुक्तानाम् – सुप् समासः ।

**येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥9.23॥**

**पदार्थः** – कौन्तेय = हे अर्जुन ! ये भक्ताः अपि = ये भक्ताः, श्रद्धया = आसक्त्या, अन्विताः = संयुक्ताः, अन्यदेवताः = इतरदेवताः, यजन्ते = उपासते, ते अपि = ते मानवाः, अविधिपूर्वकम् = अज्ञानपूर्वकम्, मामेव यजन्ति = मामेव अर्चन्ति ।

**अन्वयः** – कौन्तेय ! ये भक्ताः अपि श्रद्धया अन्विताः अन्यदेवताः यजन्ते ते अपि अविधिपूर्वकं माम् एव यजन्ति ।

**तात्पर्यम्** – येऽपि इन्द्रादीन् अन्यान् देवान् श्रद्धायुक्ताः पूजयन्ति ते अजानन्तः मामेव पूजयन्ति इति तेषामपि अभ्युदयः अवश्यं भवति, किन्तु न शाश्वतः इति विशेषः ।

**व्याकरणम्** – अन्याः देवताः अन्यदेवताः – कर्मधारयः । विधिः पूर्वः यथा भवति तथेति विधिपूर्वकम् – बहुव्रीहिः । न विधिपूर्वकम्, अविधिपूर्वकम् इति – क्रियाविशेषणं नञ्तत्पुरुषः । मोक्षातिरिक्तविधिपूर्वकम् इत्यर्थः ।

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥9.24॥**

**पदार्थः** – अहम् एव सर्वयज्ञानाम् = अहम् एव सकलक्रतूनाम्, भोक्ता च = अनुभविता च, प्रभुः च = स्वामी च, ते तु तत्त्वेन = ते तु यथावत्, मां न अभिजानन्ति = मां न सम्यक् विदन्ति, अतः = तस्मात्, च्यवन्ति = फलात् भ्रष्टाः भवन्ति ।

**अन्वयः** – अहम् एव हि सर्वयज्ञानां भोक्ता च प्रभुः च । ते मां तत्त्वेन न तु अभिजानन्ति । अतः च्यवन्ति ।

**तात्पर्यम्** – अहमेव सर्वेषां यज्ञानां भोक्ता फलस्य प्रदाता च । एवं ये न जानन्ति ते कर्मफलं भुक्त्वा तदन्ते च्यवन्ते ।

**माध्वमतम्**– सर्वयज्ञभोक्ता भगवानेव इति ज्ञानविरहात् स्वर्गात् मर्त्यलोकं विशन्ति ।

**व्याकरणम्** – सर्वे यज्ञाः तेषाम्, सर्वयज्ञानाम् – कर्मधारयः ।

**यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥9.25॥**

**पदार्थः** – देवव्रताः = देवपरायणाः, देवान् = तत्तद्देवविशेषान्, यान्ति = प्राप्नुवन्ति, पितृव्रताः =पितृपरायणाः, पितॄन् = पितृदेवान्, यान्ति = प्राप्नुवन्ति, भूतेज्याः = भूतपूजकाः, भूतानि = विविधभूतगणान्, यान्ति = प्राप्नुवन्ति, मद्याजिनः अपि = मदाराधकाः च, मां यान्ति = मां प्राप्नुवन्ति ।

**अन्वयः** – देवव्रताः देवान् यान्ति । पितृव्रताः पितॄन् यान्ति । भूतेज्याः भूतानि यान्ति । मद्याजिनः अपि मां यान्ति ।

**तात्पर्यम्** – ये देवान् पूजयन्ति ते देवलोकं गच्छन्ति । ये पितॄन् ते पितृलोकम् । ये पुनः भूतानि ते भूतलोकम् । किन्तु एषां सर्वेषामपि प्रत्यागमनम् अस्ति । मां तु ये पूजयन्ति ते मामेव यान्ति, न प्रत्यागच्छन्ति ।

**व्याकरणम्** – देवेषु व्रतं येषां ते देवव्रताः – बहुव्रीहिः । देवे नियमवन्तः इत्यर्थः । पितृषु व्रतं येषां ते पितृव्रताः – बहुव्रीहिः । भूतेषु इज्या येषां ते भूतेज्याः – बहुव्रीहिः । मां यजन्ति इति मद्याजिनः – ताच्छीलिके णिनिः उपपदसमासश्च ।

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥9.26॥**

**पदार्थः** – यः = यः मानवः, पत्रम् = पर्णम्, पुष्पम् = कुसुमम्, फलम् = फलम्, तोयम् = उदकम्, मे = मह्यम्, भक्त्या = प्रीत्या, प्रयच्छति = ददाति, प्रयतात्मनः = निगृहीतमनस्कस्य, भक्त्युपहृतम् = भक्त्या समर्पितम्, तत् = तद्वस्तु, अहम् अश्नामि = अहं परिगृह्णामि ।

**अन्वयः** – यः पत्रं पुष्पं फलं तोयं मे भक्त्या प्रयच्छति प्रयतात्मनः भक्त्युपहृतं तत् अहम् अश्नामि ।

**तात्पर्यम्** – यस्तु मनः निगृह्य पत्रं पुष्पं फलं तोयं च भक्त्या प्रयच्छति भक्त्या प्रदत्तं तत्सर्वम् अहम् अवश्यं परिगृह्णामि ।

**माध्वमतम्**– अनिषिद्धपत्रादिकं मह्यं ये भक्त्या समर्पयन्ति तदहं स्वीकरोमि ।

**रामानुजीयमतम्** – अश्नामि – प्रतिगृह्णामि इत्यर्थः ।

**व्याकरणम्** – भक्त्या उपहृतं भक्त्युपहृतम्, तत् – तृतीयातत्पुरुषः । प्रयतः आत्मा यस्य सः प्रयतात्मा, तस्य – बहुव्रीहिः ।

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥9.27॥**

**पदार्थः** – कौन्तेय = कुन्तीपुत्र, यत् करोषि = यत् कर्म आचरसि, यत् अश्नासि = यद्वस्तु खादसि, यत् जुहोषि = यत् हुतं करोषि, यत् ददासि = यद्वस्तु यच्छसि, यत् तपस्यसि = यत् तपः चरसि, तत् = तत् सर्वम्, मदर्पणम् = मदर्पितम्, कुरुष्व = विधेहि ।

**अन्वयः** – कौन्तेय ! यत् करोषि यत् अश्नासि यत् जुहोषि यत् ददासि यत् तपस्यसि तत् मदर्पणं कुरुष्व ।

**तात्पर्यम्** – अर्जुन ! त्वं यत् करोषि, यत् खादसि, अग्नौ यद् अर्पयसि, यत् प्रयच्छसि, यच्च तपः चरसि तत्सर्वं वासुदेवाय इति बुद्ध्या मह्यं समर्पय । एतेन ते श्रेयो भविष्यति ।

**व्याकरणम्** – अर्पणम् इति ऋ धातोः णिजन्तात् कर्मणि ल्युट् । अर्पितमित्यर्थः । मयि अर्पणं मदर्पणम् – सप्तमीतत्पुरुषः ।

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥9.28॥**

**पदार्थः** – एवम् = इत्थम्, शुभाशुभफलैः = इष्टानिष्टफलैः, कर्मबन्धनैः = कर्मजन्यैः पापैः पुण्यैः च, मोक्ष्यसे = मुक्तिं प्राप्स्यसि, संन्यासयोगयुक्तात्मा = कर्मसमर्पणरूपयोगसहितः, विमुक्तः = कर्मरूपबन्धविमुक्तः, माम् उपैष्यसि = मां लप्स्यसे ।

**अन्वयः** – एवं शुभाशुभफलैः कर्मबन्धनैः मोक्ष्यसे । सन्न्यासयोगयुक्तात्मा विमुक्तः माम् उपैष्यसि ।

**तात्पर्यम्** – एवं सर्वस्यापि कर्मणः मयि अर्पणेन त्वं तत्फलीभूतैः शुभाशुभैः पुण्यपापैः मुक्तो भविष्यसि । एवं कर्मसन्न्यासरूपेण सहितः बन्धनात् विमुक्तश्च अन्ते मां प्राप्नोषि ।

**व्याकरणम्** – शुभानि च अशुभानि, तैः, शुभाशुभैः – द्वन्द्वः, कर्मणां बन्धनानि, कर्मबन्धनानि, तैः – षष्ठी–तत्पुरुषः । सन्न्यास एव योगः, सन्न्यासयोगः – कर्मधारयः । सन्न्यासयोगेन युक्तः सन्न्यासयोगयुक्तः – तृतीयातत्पुरुषः । सन्न्यासयोगेन युक्तः आत्मा यस्य सः सन्न्यासयोगयुक्तात्मा – बहुव्रीहिः ।

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥9.29॥**

**पदार्थः** – सर्वभूतेषु = सकलभूतेषु, अहं समः = अहं तुल्यः, मे = मम, द्वेष्यः न अस्ति = वैरी नास्ति, प्रियः = प्रीतिविषयः नास्ति, ये तु = ये च, मां भक्त्या = मां प्रीत्या, भजन्ति = सेवन्ते, ते मयि = ते मयि वर्तन्ते, अहं तेषु च अपि = अहं तेषु अपि वर्ते ।

**अन्वयः** – अहं सर्वभूतेषु समः । द्वेष्यः मे न अस्ति, प्रियः न । ये तु मां भक्त्या भजन्ति ते मयि अहं तेषु च अपि ।

**तात्पर्यम्** – अहं सर्वेषु अपि प्राणिषु समानः । न मे कुत्रचित् द्वेषो वर्तते । नापि कुत्रचित् प्रीतिः । किन्तु ये मां भजन्ति तेषामहं शैत्यपीडितानाम् अग्निरिव उपकारको भवामि । तेऽपि मया उपकृता भवन्ति ।

**माध्वमतम्** – भगवान् प्रियद्वेष्ययोः तत्तदीयभक्तिद्वेषानुसारेण तत्तत्सदृशफलं ददाति । तस्मात् सः सर्वेषु समः इत्युच्यते । भगवन्तं ये भक्त्या भजन्ति सः तद्वशः भवति । भक्ताश्च वयं भगवदधीनाः इति ज्ञानवन्तः भवन्ति ।

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥9.30॥**

**पदार्थः** – अपि चेत् सुदुराचारः = दुराचारोऽपि स्यात् तथापि, यः अनन्यभाक् = यः अनन्यभक्तिः, मां भजते = मां सेवते, सः = सः मानवः, साधुः एव = सद्वृत्तः एव, मन्तव्यः = ज्ञातव्यः, हि = यतः, सः = सः मानवः, सम्यक् = यथावत्, व्यवसितः = निश्चितवान् ।

**अन्वयः** – अपि चेत् सुदुराचारः अनन्यभाक् मां भजते सः साधुः एव मन्तव्यः । सः हि सम्यक् व्यवसितः ।

**तात्पर्यम्** – यदि कश्चित् दुराचारोऽपि एकाग्रचित्तः मां भजति तर्हि सः साधुरित्येव मे मतिः यतः स सम्यगेव निश्चयं कृतवान् ।

**व्याकरणम्** – दुष्टः आचारो यस्य स दुराचारः – बहुव्रीहिः । शोभनः दुराचारः, सुदुराचारः – तत्पुरुषः । अन्यं भजति इति अन्यभाक् – कर्तरि ण्विः उपपदसमासश्च । न अन्यभाक् – अनन्यभाक् – नञ्तत्पुरुषः ।

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥9.31॥**

**पदार्थः** – (दुराचारोऽपि) क्षिप्रम् = शीघ्रम्, धर्मात्मा = धर्मबुद्धिः, भवति = सम्पद्यते, शश्वत् = नित्यम्, शान्तिम् = उपशमम्, निगच्छति = प्राप्नोति, कौन्तेय = कुन्तीपुत्र ! मे भक्तः = मम भक्तः, न प्रणश्यति = नाशं न गच्छति इति, प्रतिजानीहि = प्रतिज्ञां कुरु ।

**अन्वयः** – दुराचारोऽपि क्षिप्रं धर्मात्मा भवति । शश्वत् शान्तिं निगच्छति । कौन्तेय ! प्रतिजानीहि, मे भक्तः न प्रणश्यति ।

**तात्पर्यम्** – अर्जुन ! दुराचारोऽपि पुरुषः अनन्यचित्तः मां यदि भजते तर्हि सः शीघ्रं पुण्यात्मा भवति, शाश्वतीं च शान्तिं प्राप्नोति । पार्थ ! सभासु दृढमिदम् उद्घोषय यत् 'मे भक्तः न प्रणश्यति ।'

**व्याकरणम्** – धर्मे आत्मा(मनः) यस्य सः, धर्मात्मा – बहुव्रीहिः ।

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥9.32॥**

**पदार्थः** – पार्थ = पृथायाः पुत्र !, पापयोनयः = पापात्मानः, ये अपि = ये केचन अपि, स्त्रियः = नार्यः, वैश्याः = वैश्यकुलजाः, तथा = एवम्, शूद्राः = शूद्रकुलजाः, स्युः = भवेयुः, ते अपि= ते मानवाः अपि,

मां व्यपाश्रित्य = माम् आश्रित्य, पराम् = उत्तमाम्, गतिम् = स्थानम्, यान्ति हि = निश्चयेन लभन्ते।

**अन्वयः**- पार्थ ! पापयोनयः ये अपि स्त्रियः वैश्याः तथा शूद्राः स्युः ते अपि मां व्यपाश्रित्य परां गतिं यान्ति हि।

**तात्पर्यम्** - ये पापाधिक्यवशात् जाताः ते स्त्रियः स्युः, वैश्याः स्युः, शूद्रा वा स्युः ते सर्वेऽपि मां सेवमानाः परमां शान्तिम् अवाप्नुवन्तीति निश्चितम्।

**व्याकरणम्** - वि अप आङ् इति उपसर्गत्रयपूर्वकात् श्रिञ्धातोः ल्यप् - व्यपाश्रित्य। पापं योनिः (कारणम्) येषां ते, पापयोनयः - बहुव्रीहिः।

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥9.33॥**

**पदार्थः** - (ये पुनः) पुण्याः = पुण्याधिक्यविशिष्टाः, भक्ताः = अनुरक्ताः, ब्राह्मणाः = ब्राह्मणकुलजाः, तथा = तथा, राजर्षयः = राजर्षयः, किं पुनः = तान् अधिकृत्य किं वक्तव्यम्, (तस्मात्) अनित्यम् = तस्मात् नश्वरम्, असुखम् = सुखरहितम्, इमम् = अमुम्, लोकम् = देहम्, पाप्य = लब्ध्वा, मां भजस्व = मां सेवस्व।

**अन्वयः** - पुण्याः भक्ताः ब्राह्मणाः तथा राजर्षयः पुनः किम् ? (तस्मात्) इमम् अनित्यम् असुखं लोकं प्राप्य मां भजस्व।

**तात्पर्यम्** - एवं पापयोनयः स्त्रीवैश्यादयः एव मां भजमानाः परमां शान्तिम् अवाप्नुवन्तीति स्थिते पुण्यवन्तः भक्ताः च ये ब्राह्मणाः राजानश्च ते तादृशीं शान्तिं प्राप्नुवन्तीति पुनः वक्तव्यं किम् ? तस्मात् यावद् अयं देहो भविष्यति तावदेव शीघ्रं मम सेवने प्रवर्तस्व।

**व्याकरणम्** - पुण्यम् एषाम् एषु वा अस्ति इति पुण्याः - मतुबर्थे अच् प्रत्ययः। राजानश्च ते ऋषयश्च - राजर्षयः - कर्मधारयः। न नित्यः अनित्यः - नञ्तत्पुरुषः। न विद्यते सुखं यस्मिन् सः असुखः, तम् - नञ्बहुव्रीहिः।

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥9.34॥**

**पदार्थः** - मन्मनाः = मच्चित्तः, मद्भक्तः = मदनुरक्तः, मद्याजी = मत्पूजकः, भव = वर्तस्व, मां नमस्कुरु = मां प्रणम, एवम् = इत्थम्, मत्परायणः = मदासक्तः, आत्मानम् = स्वम्, युक्त्वा = समाधाय, माम् एव = माम् एव, एष्यसि = अधिगमिष्यसि।

**अन्वयः** - मन्मनाः मद्याजी मद्भक्तः भव। मां नमस्कुरु। एवम् आत्मानं युक्त्वा मत्परायणः माम् एव एष्यसि।

**तात्पर्यम्** - तस्मात् मय्येव मनो निवेश्य, मद्भक्तश्च भूत्वा मामेव पूजय येन मदेकमनस्को भवान् समाहितः सन् अन्ते मामेव प्राप्नोति।

**रामानुजीयमतम्** - मद्भक्तः सन् मन्मनाः भव, एवं मद्भक्तः सन् मद्याजी भव इत्यादिरूपेण अन्वयो ज्ञेयः।

**व्याकरणम्** - मयि मनः यस्य सः मन्मनाः - बहुव्रीहिः। मां यजतीति मद्याजी - ताच्छीलिककर्तरि णिनिः उपपदसमासश्च। अहमेव परायणं यस्य सः पत्परायणः - बहुव्रीहिः।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः॥

## श्रीमद्भगवद्गीता

अथ दशमोऽध्यायः

# विभूतियोगः

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥10.1॥**

**पदार्थः** – महाबाहो = अर्जुन, भूयः एव = पुनः अपि, मे = मम, परमम् = उत्कृष्टम्, वचः = वचनम्, शृणु = आकर्णय, यत् = यद्वचनम्, अहम् = एषोऽहम्, प्रीयमाणाय = सन्तुष्यते, ते = तुभ्यम्, हितकाम्यया = हितेच्छया, वक्ष्यामि = वदिष्यामि ।

**अन्वयः** – महाबाहो ! भूयः एव मे परमं वचः शृणु यत् अहं प्रीयमाणाय ते हितकाम्यया वक्ष्यामि ।

**तात्पर्यम्** – महाबाहो ! पुनः अपि मम उत्कृष्टं वचनम् आकर्णय यत् अहं मम वचनेन सन्तुष्यते ते हितेच्छया वदिष्यामि ।

**व्याकरणम्** – हितस्य काम्या हितकाम्या, तया – षष्ठीतत्पुरुषः । प्रीङ् इति धातोः कर्तरि शानच् – प्रीयमाणः इति शब्दः ।

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥10.2॥**

**पदार्थः** – सुरगणाः = देवसङ्घाः, मे = मम, प्रभवम् = उत्पत्तिस्थानम्, न विदुः = न जानन्ति, महर्षयः न = महामुनयः न जानन्ति, हि = यस्मात्, अहम् = अहम् एव, सर्वशः = सर्वेण प्रकारेण, देवानाम् = सुराणाम्, महर्षीणां च = महामुनीनां च, आदिः = मूलकारणम् ।

**अन्वयः** – सुरगणाः मे प्रभवं न विदुः, महर्षयः न । अहं हि सर्वशः देवानां महर्षीणां च आदिः ।

**तात्पर्यम्** – मम उत्पत्तिस्थानं देवसङ्घाः न जानन्ति । महामुनयः न जानन्ति । यतः अहं सर्वेण प्रकारेण देवानां महामुनीनां च आदिमः ।

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥10.3॥**

**पदार्थः** – यः = यः मानवः, असम्मूढः = मोहरहितः, माम् = माम्, अजम् = जन्मरहितम्, अनादिम् = आदिरहितम्, लोकमहेश्वरं च = लोकाधिपतिं च, वेत्ति = वेद, सः मर्त्येषु = सः मानवेषु, सर्वपापैः = सकलपापैः, प्रमुच्यते = विमुक्तो भवति ।

**अन्वयः** – यः असम्मूढः माम् अजम् अनादिं लोकमहेश्वरं च वेत्ति सः मर्त्येषु सर्वपापैः प्रमुच्यते ।

**तात्पर्यम्** – यः मोहरहितः माम् अजम् आदिरहितं लोकाधिपतिम् अपि जानाति मानवेषु सः सकलपापैः विमुक्तः भवति ।

**व्याकरणम्** – सम् उपसर्गपूर्वकात् मुह्धातोः कर्तरि क्तप्रत्यये सम्मूढशब्दः । न सम्मूढः असम्मूढः – नञ्तत्पुरुषः । सर्वाणि पापानि, तैः, सर्वपापैः – कर्मधारयः ।

**बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥10.4॥**
**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥10.5॥**

**पदार्थः** - बुद्धिः = सूक्ष्मग्राहित्वम्, ज्ञानम् = वस्तुज्ञानम्, असम्मोहः = व्याकुलत्वाभावः, क्षमा = सहनम्, सत्यम् = यथार्थवचनम्, दमः = बाह्येन्द्रियनिग्रहः, शमः = अन्तःकरणनिग्रहः, सुखम् = आह्लादः, दुःखम् = सन्तापः, भवः = उद्भवः, अभावः = विनाशः, भयं च = भीतिः च, अभयम् एव च = भीतिराहित्यम् अपि, अहिंसा = अपीडनम्, समता = साम्यम्, तुष्टिः = सन्तोषः, तपः = नियमपूर्वकं शरीरपीडनम्, दानम् = वितरणम्, यशः = कीर्तिः, अयशः = अपकीर्तिः, पृथग्विधाः = एवं नानाप्रकाराः, भावाः = चित्तवृत्तयः, भूतानाम् = प्राणिनाम्, मत्तः एव = ईश्वरात् एव, भवन्ति = सम्पद्यन्ते।

**अन्वयः** - बुद्धिः ज्ञानम् असम्मोहः क्षमा सत्यं दमः शमः सुखं दुःखं भवः अभावः भयं च अभयम् एव च अहिंसा समता तुष्टिः तपः दानं यशः अयशः पृथग्विधाः भावाः भूतानां मत्तः एव भवन्ति ।

**तात्पर्यम्** - सूक्ष्मग्राहित्वम्, वस्तुज्ञानम्, विवेकः, सहनम्, यथार्थवचनम्, बाह्येन्द्रियनिग्रहः, अन्तःकरणनिग्रहः, आह्लादः, सन्तापः, उद्भवः, विनाशः, भीतिः, भीतिराहित्यम्, अहिंसा, साम्यम्, सन्तोषः, तपः, दानम्, कीर्तिः, अपकीर्तिः - एवं नानाप्रकाराः चित्तवृत्तयः प्राणिनां मत्तः एव सम्पद्यन्ते ।

**व्याकरणम्** - पृथक् विधाः येषां ते, पृथग्विधाः - बहुव्रीहिः ।

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥10.6॥**

**पदार्थः** - सप्त महर्षयः = सप्त महामुनयः, तथा = एवम्, पूर्वे = पुरातनाः, चत्वारः मनवः = स्वायम्भुवादयः, मद्भावाः = मच्चिन्तनपराः, मानसाः = मानसिकाः, जाताः = उत्पन्नाः, येषाम् = महामुनिप्रभृतीनाम्, इमाः = एताः, प्रजाः = सन्ततयः, लोके = भुवने सन्ति ।

**अन्वयः** - सप्त महर्षयः तथा पूर्वे चत्वारः मनवः मद्भावाः मानसाः जाताः येषाम् इमाः प्रजाः लोके ।

**तात्पर्यम्** - प्रसिद्धाः सप्त ऋषयः तथा पुरातनाः स्वायम्भुवादयः चत्वारः मनवः मच्चिन्तनपराः सङ्कल्पमात्रेण उत्पन्नाः । तेषामेव सन्ततयः इदानीं भूमौ वर्तन्ते ।

**व्याकरणम्** - मम भावः मद्भावः - षष्ठीतत्पुरुषः । मद्भावः एषु अस्ति इति मद्भावाः, मच्चिन्तनविशिष्टाः इत्यर्थः । मनस आगताः मानसाः - आगत इत्यर्थे अण्प्रत्ययः ।

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥10.7॥**

**पदार्थः** - यः = यः मनुजः, एताम् = एनाम्, मम विभूतिम् = मे ऐश्वर्यम्, योगं च = तत्तदर्थनिर्माणसामर्थ्यं च, तत्त्वतः = यथावत्, वेत्ति = जानाति, सः = सः मानवः, अविकम्पेन = अचञ्चलेन, योगेन = सम्यक् दर्शनेन, युज्यते = सम्बध्यते, अत्र = अस्मिन् विषये, संशयः न = सन्देहः नास्ति ।

**अन्वयः** – यः मम एतां विभूतिं योगं च तत्त्वतः वेत्ति सः अविकम्पेन योगेन युज्यते, अत्र संशयः न ।

**तात्पर्यम्** – यः मनुष्यः मम एतत् ऐश्वर्यं तत्तत्पदार्थनिर्माणसामर्थ्यं च यथावत् जानाति सः अचञ्चलेन सम्यक् दर्शनेन सम्बध्यते । अस्मिन् विषये संशयः नास्ति ।

**माध्वमतम्** – पूर्वोक्तं भगवतः महिमानं वक्ष्यमाणं च तस्य नानारूपादिकं यो वेत्ति सः निश्चयेन ध्यानरूपोपायेन युक्तः भवति ।

**रामानुजीयमतम्** – विभूतिः – ऐश्वर्यम् । योगः – हेयप्रत्यनीककल्याणगुणरूपः । द्वितीयो योगशब्दः भक्तियोगपरः ।

**व्याकरणम्** – विकम्पते इति विकम्पः – कर्तरि अच् प्रत्ययः । न विकम्पः अविकम्पः, तेन – नञ्तत्पुरुषः।

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥10.8॥**

**पदार्थः** – अहम् = परब्रह्म, सर्वस्य = सकलस्य, प्रभवः = उत्पत्तिस्थानम्, मत्तः = परब्रह्मणः एव, सर्वम् = जगत्, प्रवर्तते = सम्भवति, इति = एवम्, मत्वा = विज्ञाय, बुधाः = पण्डिताः, भावसमन्विताः = प्रीतिसहिताः, मां भजन्ते = मा सेवन्ते ।

**अन्वयः** – अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते इति मत्वा बुधाः भावसमन्विताः मां भजन्ते ।

**तात्पर्यम्** – अहं (परब्रह्म) सकलस्य मूलकारणम्, मत्तः (परब्रह्मणः) एव निखिलं जगत् सम्भवति इति मत्वा भावसहिताः पण्डिताः मामुपासते ।

**माध्वमतम्** – भगवान् सर्वस्य उत्पत्तिकारणम् । जगदिदं तेनैव प्रवर्तते । तदेवं भक्तिभावेन युक्ताः भक्ताः परमात्मानं सेवन्ते ।

**व्याकरणम्** – भावेन समन्विताः भावसमन्विताः – तृतीयातत्पुरुषः ।

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥10.9॥**

**पदार्थः** – मच्चित्ताः = मन्मानसाः, मद्गतप्राणाः = मद्गतेन्द्रियाः, परस्परम् = अन्योन्यम्, मां बोधयन्तः = माम् अवगमयन्तः, कथयन्तः च = कीर्तयन्तः च, नित्यम् = सदा, तुष्यन्ति च = सन्तोषं प्राप्नुवन्ति च, रमन्ति च = (मय्येव) विहरन्ति च ।

**अन्वयः** – (बुधाः भावसमन्विताः) मच्चित्ताः मद्गतप्राणाः परस्परं मां बोधयन्तः कथयन्तः च नित्यं तुष्यन्ति च रमन्ति च ।

**तात्पर्यम्** – येषां चित्तं मयि संलग्नं भवति, येषाम् इन्द्रियाणि मयि सन्ति तादृशाः बुधाः भावसमन्विताः अन्योन्यं मां बोधयन्तः कीर्तयन्तः च सदा सन्तोषं प्राप्नुवन्ति, मय्येव च विहरन्ति ।

**व्याकरणम्** – मयि चित्तं येषां ते, मच्चित्ताः – बहुव्रीहिः । मां गताः मद्गताः – द्वितीयातत्पुरुषः । मद्गताः प्राणाः येषां ते मद्गतप्राणाः – बहुव्रीहिः ।

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥10.10॥**

**पदार्थः** – सततयुक्तानाम् = नित्ययुक्तानाम्, प्रीतिपूर्वकम् = स्नेहपूर्वकम्, भजताम् = सेवमानानाम्, तेषाम् =

तेषां बुधानाम्, बुद्धियोगम् = मद्विषयकं योगम्, ददामि = प्रयच्छामि, येन = येन योगेन, ते = बुधाः, माम् उपयान्ति = मां प्राप्नुवन्ति ।

**अन्वयः** – सततयुक्तानां प्रीतिपूर्वकं भजतां तेषां तं बुद्धियोगं ददामि येन ते माम् उपयान्ति ।

**तात्पर्यम्** – नित्ययुक्तानां स्नेहपूर्वकं सेवमानानां तेषां बुधानां तं मद्विषयकं योगं प्रयच्छामि येन योगेन ते बुधाः मां प्राप्नुवन्ति ।

**माध्वमतम्** – सततं भजतः भक्तान् भगवान् अपरोक्षज्ञानरूपेण मोक्षसाधनेन अनुगृह्णाति । तेन ते मोक्षम् उपयान्ति ।

**रामानुजीयमतम्** – बुद्धियोगः = विपाकदशापन्नं ज्ञानम् ।

**व्याकरणम्** – सततं युक्ताः सततयुक्ताः, तेषाम् – सुप्समासः । प्रीतिः पूर्वा यथा भवति तथेति प्रीतिपूर्वकम्, क्रियाविशेषणम् – बहुव्रीहिः ।

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।।10.11।।**

**पदार्थः** – आत्मभावस्थः = बुद्धौ वर्तमानः, अहम् = परमात्मा, तेषाम् एव = तादृशबुधानाम् एव, अनुकम्पार्थम् = दयाहेतोः, भास्वता = प्रकाशमानेन, ज्ञानदीपेन = विवेकदीपेन, अज्ञानजम् = मिथ्याज्ञानोत्पन्नम्, तमः = अन्धकारम्, नाशयामि = विध्वंसयामि ।

**अन्वयः** – आत्मभावस्थः अहं तेषाम् एव अनुकम्पार्थं भास्वता ज्ञानदीपेन अज्ञानजं तमः नाशयामि ।

**तात्पर्यम्** – तादृशानां बुधानाम् अनुग्रहार्थम् अहं तेषाम् अन्तःकरणे तिष्ठन् तेषु अज्ञानेन जन्यं तमः प्रकाशमानेन ज्ञानरूपेण दीपेन नाशयामि ।

**माध्वमतम्** – तुष्टश्च भगवान् अज्ञानिनाम् अज्ञानजन्यं दुःखरूपं संसारबन्धं ज्ञानप्रदानेन नाशयति । तदेवं तस्य प्रसादेन मुक्तिं लभन्ते ।

**व्याकरणम्** – अज्ञानेन जातम् अज्ञानजम् – कर्तरि डप्रत्ययः उपपदसमासश्च । आत्मनो भावः आत्मभावः – षष्ठीतत्पुरुषः । आत्मभावे तिष्ठतीति आत्मभावस्थः – कर्तरि कः उपपदसमासश्च ।

अर्जुन उवाच – **परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ।।10.12।।**
**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ।।10.13।।**

**पदार्थः** – भवान् = त्वम्, परम् = उत्तमम्, ब्रह्म = ब्रह्म, परम् = उत्कृष्टम्, धाम = स्थानम्, परमम् = श्रेष्ठम्, पवित्रम् = पावनम्, इति देवर्षिः नारदः = सुरर्षिः नारदः, असितः = असितनामकः ऋषिः, देवलः = देवल-नामकः ऋषिः, व्यासः = बादरायणः, सर्वे ऋषयः = सकलाः ऋषयः, त्वाम् = त्वाम्, शाश्वतम् = सनातनम्, दिव्यम् = दिवि भवम्, पुरुषम् = पुरुषोत्तमम्, आदिदेवम् = मूलदैवम्, अजम् = जन्मरहितम्, विभुम् = व्यापकम्, आहुः = वदन्ति, तथा = तेन प्रकारेण, स्वयं च एव = त्वमपि, मे = मह्यम्, ब्रवीषि = वदसि ।

**अन्वयः** – भवान् परं ब्रह्म, परं धाम, परमं पवित्रम् । देवर्षिः नारदः असितः देवलः व्यासः इति सर्वे ऋषयः

त्वां शाश्वतं दिव्यं पुरुषम् आदिदेवम् अजं विभुम् आहुः। तथा स्वयं च एव मे ब्रवीषि।

**तात्पर्यम्** – भवान् उत्तमं ब्रह्म, उत्कृष्टं स्थानम्, परमं पवित्रं च अस्ति। देवर्षिः नारदः, असितः, देवलः, बादरायणः इत्यादयः सर्वेऽपि ऋषयः 'त्वं सनातनः दिव्यश्च पुरुषः, त्वम् आदिदेवः, त्वं जन्मरहितः, विभुः' इति वदन्ति यदेतत् त्वम् अपि मां वदसि।

**रामानुजीयमतम्** – ऋषयः – परावरतत्त्वयाथात्म्यविदः।

**व्याकरणम्** – आदिः देवः आदिदेवः – कर्मधारयः।

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव।**
**न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥10.14॥**

**पदार्थः** – केशव = हे कृष्ण ! मां यत् वदसि = मां यत् कथयसि, एतत् = इदम्, सर्वम् = सकलम्, ऋतम् = सत्यम्, मन्ये = भावयामि, भगवन् = हे देव, देवाः = सुराः, ते = तव, व्यक्तिम् = प्रभावम्, न हि विदुः = न हि जानन्ति, न दानवाः = असुराः अपि न जानन्ति।

**अन्वयः** – केशव ! मां यत् वदसि एतत् सर्वम् ऋतं मन्ये। भगवन् ! देवाः ते व्यक्तिं न विदुः, न हि दानवाः।

**तात्पर्यम्** – कृष्ण ! माम् उद्दिश्य यद्विषयं कथयसि इदं सर्वं सत्यं मन्ये। हे भगवन् ! सुराः तव प्रभावं न जानन्ति। असुराः अपि न जानन्ति।

**माध्वमतम्**– कृष्ण ! यदुक्तं भवता तत्सत्यमिति मन्ये। तव सामर्थ्यं देवाः दानवाश्च न विदुः।

**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम।**
**भूतभावन भूतेश देवदेव जगत्पते ॥10.15॥**

**पदार्थः** – पुरुषोत्तम = पुरुषश्रेष्ठ, भूतभावन = भूतोत्पादक, भूतेश = भूतप्रभो, देवदेव = देवाधिदेव, जगत्पते = जगदीश, त्वं स्वयमेव = त्वं स्वयमेव, आत्मना आत्मानम् = आत्मना स्वम्, वेत्थ = जानासि।

**अन्वयः** – पुरुषोत्तम भूतभावन भूतेश देवदेव जगत्पते ! त्वं स्वयम् एव आत्मना आत्मानं वेत्थ।

**तात्पर्यम्** – पुरुषश्रेष्ठ भूतोत्पादक भूतप्रभो देवाधिदेव जगदीश ! भवान् स्वयम् एव आत्मानं जानाति, नान्ये।

**व्याकरणम्** – भूतानां भावनः भूतभावनः, तत्सम्बुद्धौ भूतभावन – षष्ठीतत्पुरुषः। भूतानाम् ईशः भूतेशः, तत्सम्बुद्धौ भूतेश – षष्ठीतत्पुरुषः। देवानां देवः देवदेवः, तत्सम्बुद्धौ देवदेव – षष्ठीतत्पुरुषः। जगतां पतिः जगत्पतिः, तत्सम्बुद्धौ जगत्पते – षष्ठीतत्पुरुषः।

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥10.16॥**

**पदार्थः** – याभिः विभूतिभिः = यैः माहात्म्यविस्तरैः, इमान् लोकान् = एतान् लोकान्, व्याप्य = आक्रम्य, तिष्ठसि = वर्तसे, दिव्याः हि = लोकोत्तोरान्, आत्मविभूतयः = माहात्म्यविस्तरान्, अशेषेण = साकल्येन, वक्तुम् अर्हसि = कथयितुम् अर्हसि।

**अन्वयः** – याभिः विभूतिभिः त्वम् इमान् लोकान् व्याप्य तिष्ठसि ताः दिव्याः आत्मविभूतयः अशेषेण वक्तुम् अर्हसि।

**तात्पर्यम्** – भवान् स्वीयैः ऐश्वर्यैः एतान् लोकान् अभिव्याप्य तिष्ठति। तानि सर्वाणि अपि ऐश्वर्याणि साकल्येन कथयितुम् अर्हति।

**व्याकरणम्** – आत्मनः विभूतयः आत्मविभूतयः – षष्ठीतत्पुरुषः।

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन्।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥10.17॥**

**पदार्थः** – योगिन् = योगिवर ! अहं सदा = अहं सततम्, त्वां परिचिन्तयन् = त्वां ध्यायन्, कथम् = केन प्रकारेण, विद्याम् = विजानीयाम्, भगवन् = पूजार्ह ! मया केषु केषु च = मया केषु केषु च, भावेषु = वस्तुषु, चिन्त्यः असि = ध्यातव्यः असि।

**अन्वयः** – योगिन् ! अहं सदा त्वां परिचिन्तयन् कथं विद्याम् ? भगवन् ! मया केषु केषु च भावेषु चिन्त्यः असि।

**तात्पर्यम्** – योगिवर ! अहं सततं त्वां ध्यायन् केन प्रकारेण विज्ञातुं शक्नुयाम् ? हे पूजार्ह ! मया केषु केषु पदार्थेषु त्वं ध्यातव्यः भवसि ?

**रामानुजीयमतम्** – योगी – भक्तियोगनिष्ठः।

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥10.18॥**

**पदार्थः** – जानार्दन = कृष्ण ! आत्मनः = स्वस्य, योगम् = स्वरूपम्, विभूतिं च = ऐश्वर्यं च, विस्तरेण = विपुलं यथा तथा, भूयः = पुनः, कथय = वद, हि = यस्मात्, अमृतम् = अमृततुल्यम्, शृण्वतः मे = आकर्णयतः मम, तृप्तिः = तुष्टिः, नास्ति = न विद्यते।

**अन्वयः** – जनार्दन ! आत्मनः योगं विभूतिं च विस्तरेण भूयः कथय। अमृतं शृण्वतः मे तृप्तिः नास्ति।

**तात्पर्यम्** – कृष्ण ! स्वस्य स्वरूपं माहात्म्यविस्तरं च विस्तरेण पुनः वद। अमृततुल्यं तत् आकर्णयतः मम तृप्तिः एव न भवति।

**माध्वमतम्**– भगवन् ! तव रूपाणि सामर्थ्यं च अधिकृत्य सविस्तरं कथय।

**श्रीभगवान् उवाच – हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥10.19॥**

**पदार्थः** – कुरुश्रेष्ठ = कुरुपुङ्गव ! हन्त = अहो ! दिव्याः हि = दिव्याः, आत्मविभूतयः = स्वस्य ऐश्वर्यविशेषाः, च ते = तुभ्यम्, प्राधान्यतः = मुख्यत्वेन, कथयिष्यामि = वदिष्यामि, मे विस्तरस्य = मम विभूतीनां वैशाल्यस्य, अन्तः = अवधिः, नास्ति = न विद्यते।

**अन्वयः** – कुरुश्रेष्ठ ! हन्त दिव्याः आत्मविभूतयः हि ते प्राधान्यतः कथयिष्यामि। मे विस्तरस्य अन्तः नास्ति।

**तात्पर्यम्** – कुरुपुङ्गव ! अधुना स्वस्य दिव्येषु ऐश्वर्येषु प्राधान्यतः कानिचिदेव कथयिष्यामि। यतः मम विभूतीनाम् अन्तः नास्ति।

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥10.20॥**

**पदार्थः** – गुडाकेश = (जितनिद्र) अर्जुन ! सर्वभूताशयस्थितः = सर्वप्राणिहृदयस्थितः, आत्मा = प्रत्यगात्मा अहम्, भूतानाम् = प्राणिनाम्, आदिः च = मूलं च, मध्यं च = मध्यभागः च, अन्तः एव च = अवसानम् अपि, अहम् = अहम् ।

**अन्वयः** – गुडाकेश ! सर्वभूताशयस्थितः आत्मा अहं भूतानाम् आदिः च मध्यं च अन्तः च एव अहम् ।

**तात्पर्यम्** – अर्जुन ! सर्वप्राणिहृदयस्थितः प्रत्यगात्मा अहं प्राणिनां मूलं मध्यभागः अवसानं च अस्मि ।

**व्याकरणम्** – गुडाकायाः निद्रायाः ईशः गुडाकेशः, तत्सम्बुद्धौ गुडाकेश – षष्ठीतत्पुरुषः । सर्वभूतानाम् आशयः सर्वभूताशयः – षष्ठीतत्पुरुषः । सर्वभूताशये स्थितः सर्वभूताशयस्थितः – सप्तमीतत्पुरुषः ।

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥10.21॥**

**पदार्थः** – आदित्यानाम् = सूर्याणाम्, विष्णुः = विष्णुः, ज्योतिषाम् = प्रकाशयितॄणाम्, अंशुमान् = रश्मिमान्, रविः = सूर्यः, मरुताम् = मरुद्देवतानाम्, मरीचिः = मरीचिनामकः, अहम् अस्मि = अहं भवामि, नक्षत्राणाम् = नक्षत्राणाम्, शशी = चन्द्रः ।

**अन्वयः** – अहम् आदित्यानां विष्णुः, ज्योतिषाम् अंशुमान् रविः, मरुतां मरीचिः अस्मि, नक्षत्राणाम् अहं शशी ।

**तात्पर्यम्** – अहं द्वादशादित्यानां मध्ये विष्णुनामकः आदित्यः अस्मि । प्रकाशयितॄणां मध्ये रश्मिमान् सूर्यः अस्मि। मरुद्देवतानां मध्ये मरीचिः अस्मि । नक्षत्राणां मध्ये चन्द्रः अस्मि ।

**व्याकरणम्** – अंशवः अस्य अस्मिन् वा सन्ति इति अंशुमान् – मतुप् ।

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥10.22॥**

**पदार्थः** – वेदानाम् = चतुर्णां वेदानाम्, सामवेदः अस्मि = सामवेदः अस्मि, देवानाम् = सुराणाम्, वासवः अस्मि = इन्द्रः अस्मि, इन्द्रियाणाम् = इन्द्रियाणाम्, मनः च = चित्तम्, भूतानाम् = प्राणिनाम्, चेतना अस्मि = चैतन्यम् अस्मि ।

**अन्वयः** – वेदानां सामवेदः अस्मि । देवानां वासवः अस्मि । इन्द्रियाणां मनः च अस्मि । भूतानां चेतना अस्मि ।

**तात्पर्यम्** – चतुर्षु वेदेषु अहं सामवेदः अस्मि । सुरेषु इन्द्रः अस्मि । इन्द्रियेषु मनः अस्मि । प्राणिषु चैतन्यम् अस्मि ।

**माध्वमतम्**– वेदेषु सामवेदोऽस्मि । देवानाम् इन्द्रोऽस्मि । इन्द्रियेषु मनश्चास्मि । भूतेषु बहुस्मरणशक्तिश्च चेतनेत्यभिधीयते – इत्युक्तदिशा चेतननामकोऽस्मि ।

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥10.23॥**

**पदार्थः** – रुद्राणाम् = रुद्राणाम्, शङ्करः च अस्मि = शङ्करः अस्मि, यक्षरक्षसाम् = यक्षाणां राक्षसानां च,

वित्तेशः = कुबेरः, वसूनाम् = वसूनाम्, पावकः = अग्निः, शिखरिणाम् = पर्वतानाम्, मेरुः च = मेरुपर्वतः च अस्मि ।

**अन्वयः** – रुद्राणां शङ्करः च अस्मि । यक्षरक्षसां वित्तेशः, वसूनां पावकः, शिखरिणां मेरुः च अहम् अस्मि ।

**तात्पर्यम्** – एकादशसु रुद्रेषु अहं शङ्करः अस्मि । यक्षाः राक्षसाश्च ये सन्ति तेषु कुबेरः अस्मि । विख्यातेषु अष्टसु वसुषु अग्निः अस्मि । पर्वतेषु मेरुपर्वतः अस्मि ।

**व्याकरणम्** – वित्तानाम् ईशः वित्तेशः – षष्ठीतत्पुरुषः । यक्षाश्च रक्षांसि च यक्षरक्षांसि, तेषाम् – द्वन्द्वः । शिखरम् एषाम् एषु वा अस्ति इति शिखरिणः, तेषाम् – मतुबर्थे इनिप्रत्ययः ।

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥10.24॥**

**पदार्थः** – पार्थ = अर्जुन ! पुरोधसाम् = पुरोहितानाम्, मुख्यम् = प्रधानम्, बृहस्पतिम् = गुरुम्, मां विद्धि = मां जानीहि, सेनानीनाम् = सेनापतीनाम्, स्कन्दः अहम् = कुमारः अहम्, सरसाम् = तटाकानाम्, सागरः = समुद्रः, अस्मि = भवामि ।

**अन्वयः** – पार्थ ! पुरोधसां मुख्यं बृहस्पतिं मां विद्धि । सेनानीनां स्कन्दः अहम् । सरसां सागरः अस्मि ।

**तात्पर्यम्** – अर्जुन ! पुरोहितानां मुख्यः देवगुरुः बृहस्पतिः अहमेव इति जानीहि । सेनापतयः ये सन्ति तेषु अहं देवसेनापतिः स्कन्दः अस्मि । देवखातानि सरांसि यानि सन्ति तेषु सागरः अहमस्मि ।

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥10.25॥**

**पदार्थः** – महर्षीणाम् = महामुनीनाम्, अहं भृगुः = अहं भृगुमहर्षिः, गिराम् = वाचाम्, एकम् अक्षरमस्मि = ओङ्कारः अस्मि, यज्ञानाम् = यागेषु, जपयज्ञः अस्मि = जपयागः अस्मि, स्थावराणाम् = स्थितिमताम्, हिमालयः = हिमवान् ।

**अन्वयः** – महर्षीणाम् अहं भृगुः । गिराम् एकम् अक्षरम् अस्मि । यज्ञानां जपयज्ञः अस्मि । स्थावराणां हिमालयः अस्मि ।

**तात्पर्यम्** – महर्षिषु अहं भृगुमहर्षिः । शब्दरूपासु गीर्षु ओङ्कारः अस्मि । यज्ञेषु जपयज्ञः अस्मि । स्थितियुक्तेषु अहं हिमालयपर्वतः अस्मि ।

**व्याकरणम्** – जपः इति यज्ञः जपयज्ञः – कर्मधारयः ।

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥10.26॥**

**पदार्थः** – सर्ववृक्षाणाम् = सकलतरूणाम्, अश्वत्थः = अश्वत्थवृक्षः, देवर्षीणाम् = सुरमुनीनाम्, नारदः = नारदमहर्षिः, गन्धर्वाणाम् = गन्धर्वाणाम्, चित्ररथः = तन्नामकः प्रसिद्धगन्धर्वः, सिद्धानाम् = जन्मतः ज्ञानादिशालिनाम्, कपिलः मुनिः = कपिलनामधेयः मुनिः ।

**अन्वयः** – सर्ववृक्षाणाम् अश्वत्थः देवर्षीणां च नारदः गन्धर्वाणां चित्ररथः सिद्धानां कपिलः मुनिः (अस्मि) ।

**तात्पर्यम्** – सर्वेषु वृक्षेषु अहम् अश्वत्थः अस्मि । देवमुनिषु अहं नारदः । गन्धर्वेषु चित्ररथः अस्मि । जन्मना एव ज्ञानैश्वर्यादिकं प्राप्तवत्सु सिद्धेषु अहं कपिलमुनिः अस्मि ।

**व्याकरणम्** – सर्वे वृक्षाः सर्ववृक्षाः, तेषाम्, सर्ववृक्षाणाम् – कर्मधारयः ।

**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥10.27॥**

**पदार्थः** – अश्वानाम् = हयानाम्, अमृतोद्भवम् = अमृतमथनकालसम्भवम्, उच्चैःश्रवसम् = तन्नामकम् अश्वम्, गजेन्द्राणाम् = गजाधिपतीनाम्, ऐरावतम् = इन्द्रवाहनम्, नराणाम् = मनुष्याणाम्, नराधिपं च = राजानम् अपि, मां विद्धि = मां जानीहि ।

**अन्वयः** – अश्वानाम् अमृतोद्भवम् उच्चैःश्रवसं गजेन्द्राणाम् ऐरावतं नराणां नराधिपं च मां विद्धि ।

**तात्पर्यम्** – अमृतस्य हेतोः देवासुरैः यदा समुद्रमथनं कृतं तदा उच्चैःश्रवाः नाम सर्वोत्कृष्टः अश्वः उत्पन्नः । अश्वेषु मां तं जानीहि । गजश्रेष्ठेषु इन्द्रवाहनभूतम् ऐरावतं मनुष्येषु राजानं च मां जानीहि ।

**व्याकरणम्** – अमृतात् उद्भवः यस्य सः अमृतोद्भवः, तम् अमृतोद्भवम् – पञ्चमीतत्पुरुषः । गजेषु इन्द्राः गजेन्द्राः, तेषाम्, गजेन्द्राणाम् – सप्तमीतत्पुरुषः । नरेषु अधिपः नराधिपः, तम्, नराधिपम्– सप्तमीतत्पुरुषः ।

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥10.28॥**

**पदार्थः** – आयुधानाम् = शस्त्राणाम्, वज्रम् = वज्रायुधम्, धेनूनाम् = गवाम्, कामधुक् = कामधेनुः, प्रजनः = अपत्योत्पत्तिहेतुः, कन्दर्पः = मन्मथः, सर्पाणाम् = विषसहितानाम् उरगाणाम्, वासुकिः च अस्मि = वासुकिनामकः अस्मि ।

**अन्वयः** – अहम् आयुधानां वज्रं धेनूनां कामधुक् प्रजनः कन्दर्पः सर्पाणां वासुकिः च अस्मि ।

**तात्पर्यम्** – शस्त्रेषु अहं दधीचेः अस्थ्ना निर्मितं वज्रायुधम् अस्मि । धेनुषु कामधेनुः अस्मि । जनयिता मन्मथः अपि अस्मि । सर्पविशेषेषु वासुकिनामकः सर्पराजः अस्मि ।

**व्याकरणम्** – कामान् दोग्धि इति कामधुक् – कर्तरि क्विप् उपपदसमासश्च ।

**अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।**
**पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥10.29॥**

**पदार्थः** – नागानां च = विषरहितानाम् उरगाणाम्, अनन्तः अस्मि = अनन्तः अस्मि, यादसाम् = जलचराणाम्, अहं वरुणः = अहं वरुणदेवः, पितॄणां च = पितृदेवतानाम्, अर्यमा = अर्यमा नाम पितृराजः, संयमताम् = संयमवताम्, यमः = अन्तकः ।

**अन्वयः** – नागानां च अनन्तः अस्मि । यादसाम् अहं वरुणः । पितॄणां च अर्यमा अस्मि । संयमतां यमः अहम् ।

**तात्पर्यम्** – सर्पविशेषेषु नागराजः अनन्तः अहम् अस्मि । जलचरेषु अहं तदधिपतिः वरुणः अस्मि । पितृदैवतेषु अर्यमा अस्मि । संयमनं कुर्वत्सु अन्तकः अस्मि ।

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥10.30॥**

**पदार्थः** – दैत्यानाम् = दानवानाम्, प्रह्लादः अस्मि = हिरण्यकशिपुपुत्रः अस्मि, कलयताम् = गणनं कुर्वताम्, अहं कालः = अहं समयः, मृगाणां च = जन्तूनाम् अपि, अहं मृगेन्द्रः = अहं सिंहः, पक्षिणाम् = खगानाम्, वैनतेयः च = गरुडः च ।

**अन्वयः** – दैत्येषु प्रह्लादः च अस्मि । कलयत्सु अहं कालः । मृगेषु च अहं मृगेन्द्रः । पक्षिषु च वैनतेयः ।

**तात्पर्यम्** – दानवेषु अहं प्रह्लादः अस्मि । गणनं कुर्वत्सु अहं समयः, मृगेषु मृगराजः सिंहः, पक्षिषु पक्षिराजः गरुडश्च अस्मि ।

**व्याकरणम्** – विनतायाः अपत्यं पुमान् वैनतेयः – अपत्यार्थे ढक् । मृगाणां मृगेषु वा इन्द्रः मृगेन्द्रः – षष्ठीतत्पुरुषः, सप्तमीतत्पुरुषो वा ।

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥10.31॥**

**पदार्थः** – पवताम् = पावयितॄणाम्, पवनः अस्मि = वायुः अस्मि, शस्त्रभृताम् = आयुधधारिणाम्, अहं रामः = अहं दाशरथिः रामः, झषाणाम् = मत्स्यादीनाम्, मकरः च अस्मि = नक्रः च अस्मि, स्रोतसाम् = नदीनाम्, जाह्नवी अस्मि = गङ्गा अस्मि ।

**अन्वयः** – पवतां पवनः अस्मि । शस्त्रभृताम् अहं रामः, झषाणां मकरः च अस्मि । स्रोतसां जाह्नवी अस्मि ।

**तात्पर्यम्** – पावयितॄणां मध्ये अहं वायुः अस्मि । आयुधधारिषु कोदण्डधरः श्रीरामः अस्मि । मत्स्यादिषु मकरः अस्मि । नदीषु पवित्रतमा गङ्गा अस्मि ।

**माध्वमतम्**– शोधकानां वेगवतां च पवनः (वायुः) अस्मि ।

**रामानुजीयमतम्** – रामः शस्त्रभृताम् अहम् – परशुरामः इत्यर्थः शस्त्रभृत्त्वम् अत्र विभूतिः – अर्थान्तराभावात् ।

**व्याकरणम्** – शस्त्रं बिभ्रति इति शस्त्रभृतः, तेषाम् शस्त्रभृताम् – कर्तरि क्विप् उपपदसमासश्च ।

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥10.32॥**

**पदार्थः** – अर्जुन = हे अर्जुन ! सर्गाणाम् = सृष्टीनाम्, आदिः = उत्पत्तिः, मध्यम् = स्थितिः, अन्तः च = लयः च, अहम् एव = अहम्, विद्यानाम् = सर्वविद्यानाम्, अध्यात्मविद्या = ब्रह्मविद्या, प्रवदताम् = वादं कुर्वताम्, वादः अहम् = सयुक्तिकः वादः अस्मि ।

**अन्वयः** – अर्जुन ! सर्गाणाम् आदिः अन्तः च मध्यं च अहम् एव । विद्यानाम् अध्यात्मविद्या प्रवदताम् अहं वादः अस्मि ।

**तात्पर्यम्** – अर्जुन ! सृष्टीनाम् आरम्भः प्रलयः स्थितिः च अहम् एव । विद्यासु ब्रह्मविद्या, वादं कुर्वत्सु सत्यशोधनफलकः सम्भाषणविशेषः अहम् ।

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥10.33॥**

**पदार्थः** – अक्षराणाम् = वर्णानाम्, अकारः अस्मि = अकारः अस्मि, सामासिकस्य = समाससमूहस्य, द्वन्द्वः च = द्वन्द्वसमासः च, अक्षयः = अक्षीणः, कालः = समयः, विश्वतोमुखः = सर्वतोमुखः, धाता अहम् = कर्मफलदाता अहम्।

**अन्वयः** – अक्षराणाम् अकारः अस्मि। सामासिकस्य द्वन्द्वः च। अहम् एव अक्षयः कालः। विश्वतोमुखः धाता अहम्।

**तात्पर्यम्** – वर्णेषु अकारः अस्मि। समाससमुदाये द्वन्द्वसमासः अस्मि। अहम् एव अक्षीणः कालः। सर्वजगतः सर्वतोमुखः कर्मफलदाता च अहम् अस्मि।

**व्याकरणम्** – समासानां समूहः सामासिकम् – समूहार्थे ठक् (इक) प्रत्ययः। न विद्यते क्षयः यस्य सः अक्षयः – नञ्बहुव्रीहिः। विश्वतः मुखानि यस्य सः विश्वतोमुखः – बहुव्रीहिः।

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्।**
**कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥10.34॥**

**पदार्थः** – सर्वहरः = संहारकारिणां मध्ये, अहं मृत्युः च = अहं मृत्युदेवता च, भविष्यताम् = उत्पत्स्यमानानां शुभानाम्, उद्भवः च = प्रकर्षः च, नारीणाम् = स्त्रीणाम्, कीर्तिः = यशः, श्रीः = शोभा, वाक् = वाणी, स्मृतिः = स्मरणम्, मेधा = उत्तमा बुद्धिः, धृतिः = धैर्यम्, क्षमा च = सहनं च।

**अन्वयः** – अहं सर्वहरः मृत्युः च। भविष्यताम् उद्भवः च। नारीणां कीर्तिः श्रीः वाक् स्मृतिः मेधा धृतिः क्षमा च।

**तात्पर्यम्** – अहं प्राणहरः मृत्युः। अहम् उत्पत्स्यमानानां पदार्थानाम् अभ्युदयः। नारीणां यशः शोभा वाणी स्मृतिः मेधा धृतिः क्षमा इत्येते सद्गुणाः अहम् अस्मि।

**व्याकरणम्** – सर्वस्य हरः सर्वहरः – षष्ठीतत्पुरुषः। हरति इति हरः – कर्तरि अच्।

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम्।**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥10.35॥**

**पदार्थः** – तथा = एवम्, साम्नाम् = साम्नाम्, बृहत्साम = बृहत्साम, छन्दसाम् = छन्दोविशिष्टानां मन्त्राणाम्, अहं गायत्री = अहं गायत्री ऋक्, मासानाम् = द्वादशमासानाम्, अहं मार्गशीर्षः = अहम् आग्रहायणिकः मासः, ऋतूनाम् = षण्णाम् ऋतूनाम्, कुसुमाकरः = वसन्तः।

**अन्वयः** – तथा साम्नां बृहत्साम। छन्दसाम् अहं गायत्री। मासानां मार्गशीर्षः अहम्। ऋतूनां कुसुमाकरः।

**तात्पर्यम्** – तथा सामसु अहं बृहत्साम अस्मि। छन्दोविशिष्टानाम् ऋचाम् अहं गायत्रीच्छन्दः अस्मि। द्वादशसु मासेषु मार्गशीर्षः अहम्। षण्णाम् ऋतूनाम् अहं वसन्तः।

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्।**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥10.36॥**

**पदार्थः** – छलयताम् = छलकारिणाम्, द्यूतम् अस्मि = अक्षक्रीडा अस्मि, तेजस्विनाम् = तेजोवतां तेजः, अहम् = कान्तिः अहम्, जयः अस्मि = विजयः अस्मि, व्यवसायः अस्मि = प्रयत्नः अस्मि, सत्त्ववताम्

= सात्त्विकानाम्, सत्त्वम् अहम् = सत्त्वगुणः अहम् ।

**अन्वयः** – छलयतां द्यूतम् अस्मि । तेजस्विनां तेजः अहम् । जयः अस्मि । व्यवसायः अस्मि । सत्त्ववतां सत्त्वम् अहम् ।

**तात्पर्यम्** – छलकर्तॄणां द्यूतम् अस्मि । तेजोवतां तेजः अहमस्मि । विजेतॄणां विजयः अस्मि । व्यवसायिनां व्यवसायः अस्मि । सात्त्विकानां सत्त्वगुणः अस्मि ।

**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥10.37॥**

**पदार्थः** – वृष्णीनाम् = यादवानाम्, वासुदेवः अस्मि = कृष्णः अस्मि, पाण्डवानाम् = पाण्डुपुत्राणाम्, धनञ्जयः = अर्जुनः, मुनीनाम् अपि = ऋषिषु अपि, व्यासः = बादरायणः, कवीनाम् = क्रान्तदर्शिनाम्, उशना कविः = शुक्राचार्यः ।

**अन्वयः** – वृष्णीनां वासुदेवः अस्मि । पाण्डवानां धनञ्जयः । मुनीनाम् अपि अहं व्यासः । कवीनाम् उशना कविः ।

**तात्पर्यम्** – यादवानां कृष्णः अस्मि । पाण्डवानां धनञ्जयः अहमेव अस्मि । मुनीनाम् अपि अहं व्यासः । क्रान्तदर्शिनां शुक्राचार्यः ।

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥10.38॥**

**पदार्थः** – दमयताम् = दमयितॄणाम्, दण्डः = दमनम् अस्मि, जिगीषताम् = जेतुमिच्छताम्, नीतिः = नीतिः अस्मि, गुह्यानाम् = गोप्यानाम्, मौनं च एव = मौनमेव अस्मि, ज्ञानवताम् = ज्ञानयुक्तेषु, ज्ञानम् = प्रज्ञानम् अहम् ।

**अन्वयः** – दमयतां दण्डः अस्मि । जिगीषतां नीतिः अस्मि । गुह्यानां मौनं च एव अस्मि । ज्ञानवतां ज्ञानम् अहम् ।

**तात्पर्यम्** – दमयितॄणां दमनम् अस्मि । जेतुम् इच्छतां नीतिः अस्मि । गोप्यानां मौनम् अपि । ज्ञानिनां प्रज्ञानम् अहम् अस्मि ।

**व्याकरणम्** – जेतुम् इच्छन्तः जिगीषन्तः, तेषाम्, जिगीषताम् । ज्ञानम् एषाम् अस्तीति ज्ञानवन्तः – मतुप्प्रत्ययः तेषाम् ।

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥10.39॥**

**पदार्थः** – अर्जुन = हे अर्जुन ! सर्वभूतानाम् = सकलभूतानाम्, यत् बीजम् = यत् प्ररोहकारणम्, तत् अपि अहम् = तदपि अहमेव, मया विना = मां विना, यत् चराचरम् = स्थावरजङ्गमम्, यत् स्यात् = यत् भवेत्, तत् नास्ति = तद्वस्तु न विद्यते ।

**अन्वयः** – अर्जुन ! सर्वभूतानां यत् बीजं तत् अपि अहम् । मया विना चराचरं भूतं यत् स्यात् तत् नास्ति ।

**तात्पर्यम्** – अर्जुन ! सर्वभूतानां यत् प्ररोहकारणम् अस्ति तत् अपि अहम् । मया विरहितं यत्किञ्चिदपि स्थावरजङ्गमं नैव भवितुम् अर्हति । तादृशं किमपि न विद्यते एव ।

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥10.40॥**

**पदार्थः** – परन्तप = शत्रुतापन ! मम दिव्यानाम् = मे दिव्यानाम्, विभूतीनाम् = ऐश्वर्याणाम्, अन्तः न अस्ति =अवधिः नास्ति, एषः तु = अयं च, विभूतेः = ऐश्वर्यस्य, विस्तरः = प्रपञ्चः, उद्देशतः = एकदेशतः, प्रोक्तः = कथितः ।

**अन्वयः** – परन्तप ! मम दिव्यानां विभूतीनाम् अन्तः न अस्ति । मया एषः विभूतेः विस्तरः तु उद्देशतः प्रोक्तः ।

**तात्पर्यम्** – अर्जुन ! मम दिव्याः विभूतयः अनन्ताः सन्ति । ताः सर्वाः अत्र नैव उक्ताः । अधुना यदुक्तं तत्तु केवलं मम विभूतीनाम् एकदेशमात्रम् अस्ति ।

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥10.41॥**

**पदार्थः** – यद्यत् सत्त्वम् = यद्यत् वस्तु, विभूतिमत् = प्रभावयुक्तम्, श्रीमत् = शोभावहम्, ऊर्जितम् एव वा = उत्साहसहितं वा, तत्तत् एव = तत् सकलं वस्तु, मम तेजोंऽशसम्भवम् = मम ऐश्वर्यात् उत्पन्नम्, अवगच्छ = विजानीहि ।

**अन्वयः** – यद्यत् विभूतिमत् श्रीमत् ऊर्जितम् एव वा सत्त्वं तत्तत् एव मम तेजोंऽशसम्भवं त्वम् अवगच्छ ।

**तात्पर्यम्** – प्रभावयुक्तं शोभावहं बलसहितं वा यद्यत् वस्तु तत् सकलं मम ऐश्वर्यात् उत्पन्नम् इति त्वं जानीहि ।

**व्याकरणम्** – विभूतिः अस्य अस्मिन् वा अस्तीति विभूतिमत् – मतुप् । श्रीः अस्य अस्मिन् वा आस्तीति श्रीमत् – मतुप् । तेजसः अंशः तेजोंऽशः – षष्ठीतत्पुरुषः । तेजोंऽशात् सम्भवम्, तेजोंऽशसम्भवम् – पञ्चमीतत्पुरुषः ।

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥10.42॥**

**पदार्थः** – अथवा = यद्वा, एतेन = अनेन, ज्ञातेन = विदितेन, बहुना = अत्यधिकेन, तव किम् = ते किं प्रयोजनम्, अहम् इदम् = अहम् एतत्, कृत्स्नम् = निखिलम्, जगत् = लोकम्, एकांशेन = एकदेशेन, विष्टभ्य = व्याप्य, स्थितः = स्थितः ।

**अन्वयः** – अर्जुन ! अथवा एतेन बहुना ज्ञातेन तव किम् ? अहम् इदं कृत्स्नं जगत् एकांशेन विष्टभ्य स्थितः ।

**तात्पर्यम्** – अर्जुन ! अथवा मम विभूतीनां सर्वमपि विस्तरं विदित्वा तव किम् अधिकं प्रयोजनम् ? अतः संक्षेपतः इदं जानीहि यत् अहम् निखिलमपि एतत् जगत् एकावयवेन व्याप्य स्थितः अस्मि ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
विभूतियोगो नाम दशमोऽध्यायः ॥

श्रीमद्भगवद्गीता

अथ एकादशोऽध्यायः

# विश्वरूपदर्शनयोगः

**अर्जुन उवाच - मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥11.1॥**

**पदार्थः** - मदनुग्रहाय = मदनुग्रहार्थम्, परमम् = सातिशयम्, गुह्यम् = गोप्यम्, अध्यात्मसञ्ज्ञितम् = अध्यात्मम् इति शब्देन व्यपदेश्यम्, यत् वचः = यद्वचनम्, त्वया उक्तम् = त्वया गदितम्, तेन = तेन वचनेन, मम एषः = मम अयम्, मोहः = अविवेकः, विगतः = अपगतः ।

**अन्वयः** - मदनुग्रहाय परमं गुह्यम् अध्यात्मसञ्ज्ञितम् यत् वचः त्वया उक्तं तेन मम अयं मोहः विगतः ।

**तात्पर्यम्** - मदनुग्रहाय एव भवान् सातिशयं गोप्यम् आत्मानात्मविवेकविषयं वचनम् उक्तवान् अस्ति । तेन वचनेन मम कर्तव्ये यो मोहः सः दूरं गतः ।

**व्याकरणम्** - मम अनुग्रहः मदनुग्रहः, तस्मै, मदनुग्रहाय - षष्ठीतत्पुरुषः । अध्यात्ममिति संज्ञा अध्यात्मसंज्ञा - कर्मधारयः । अध्यात्मसंज्ञा अस्य सञ्जाता अध्यात्मसंज्ञितम् इति इतच्प्रत्ययान्तः शब्दः ।

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥11.2॥**

**पदार्थः** - कमलपत्राक्ष = पद्मपत्रनेत्र ! भूतानाम् = प्राणिनाम्, भवाप्ययौ = उत्पत्तिप्रलयौ, विस्तरशः = वैपुल्येन, त्वत्तः = तव सकाशात्, मया श्रुतौ = मया आकर्णितौ, अव्ययम् = अक्षयम्, माहात्म्यम् अपि च = प्रभावोऽपि (श्रुतः) ।

**अन्वयः** - कमलपत्राक्ष ! भूतानां भवाप्ययौ हि विस्तरशः त्वत्तः मया श्रुतौ । अव्ययं माहात्म्यम् अपि च ।

**तात्पर्यम्** - हे पद्मपत्रनेत्र, श्रीकृष्ण ! प्राणिनाम् उत्पत्तिं प्रलयं च भवतः मुखात् विस्तरेण अहं श्रुतवान् । भवतः अक्षयं प्रभावमपि श्रुतवान् ।

**व्याकरणम्** - भवश्च अप्ययश्च भवाप्ययौ - द्वन्द्वः । महात्मनो भावः माहात्म्यम् - भावे ष्यञ् । कमलस्य पत्रे कमलपत्रे - षष्ठीतत्पुरुषः । कमलपत्रे इव अक्षिणी यस्य सः, तत्सम्बुद्धौ कमलपत्राक्ष - बहुव्रीहिः ।

**एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥11.3॥**

**पदार्थः** - परमेश्वर = महेश्वर ! पुरुषोत्तम = पुरुषश्रेष्ठ ! आत्मानम् = स्वम्, त्वं यथा आत्थ = त्वं येन प्रकारेण ब्रवीषि, एवम् एतत् = इत्थमेव तत्, ते ऐश्वरम् = तव ज्ञानैश्वर्यादियुक्तम्, रूपम् = आकारम्, द्रष्टुम् = अवलोकयितुम्, इच्छामि = अभिलषामि ।

**अन्वयः** - परमेश्वर ! पुरुषोत्तम ! आत्मानं त्वं यथा आत्थ एवम् एतत् ते ऐश्वरं रूपं द्रष्टुम् इच्छामि ।

**तात्पर्यम्** - श्रीकृष्ण ! पुरुषोत्तम ! आत्मानं भवान् येन प्रकारेण वदति तादृशमेव तव ऐश्वर्ययुक्तम् स्वरूपं द्रष्टुम् अभिलषामि ।

**माध्वमतम्**– पुरुषोत्तम ! भवतः अचिन्त्यशक्तियुक्तं रूपं द्रष्टुम् इच्छामि ।
**व्याकरणम्** – ईश्वरस्य इदम् ऐश्वरम् – इदमर्थे अण् ।

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥11.4॥**

**पदार्थः** – प्रभो = ईश्वर ! तत् = तत् रूपम्, द्रष्टुम् = अवलोकितुम्, मया शक्यम् इति = मया शक्यम् इति, यदि मन्यसे = चिन्तयसि चेत्, ततः = तर्हि, योगेश्वर = योगेश्वर ! अव्ययम् = अनश्वरम्, आत्मानम् = स्वम्, मे दर्शय = मां प्रदर्शय ।
**अन्वयः** – प्रभो ! तत् मया द्रष्टुं शक्यम् इति यदि मन्यसे ततः हे योगेश्वर ! त्वम् अव्ययम् आत्मानं मे दर्शय ।
**तात्पर्यम्** – श्रीकृष्ण ! तत् रूपं मया अवलोकितुं शक्यम् इति यदि चिन्तयसि तर्हि त्वं तत् अनश्वरं रूपं मां दर्शय ।
**रामानुजीयमतम्** – योगेश्वरः – योगः ज्ञानादिकल्याणगुणयोगः ।

**श्रीभगवानुवाच – पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥11.5॥**

**पदार्थः** – पार्थ = अर्जुन ! शतशः अथ सहस्रशः = अपरिमितानि, नानाविधानि = बहुप्रकाराणि, दिव्यानि = लोकोत्तराणि, नानावर्णाकृतीनि च = नानावर्णाकाराणि, मे = मम, रूपाणि = स्वरूपाणि, पश्य = वीक्षस्व ।
**अन्वयः** – पार्थ ! शतशः अथ सहस्रशः नानाविधानि दिव्यानि नानावर्णाकृतीनि च मे रूपाणि पश्य ।
**तात्पर्यम्** – अर्जुन ! बहुप्रकाराणि दिव्यानि नावर्णाकाराणि च मम स्वरूपाणि च पश्य ।
**व्याकरणम्** – नाना विधाः येषां तानि नानाविधानि, तानि – बहुव्रीहिः । वर्णाश्च आकृतयश्च वर्णाकृतयः – द्वन्द्वः । नाना वर्णाकृतयः येषां तानि, नानावर्णाकृतीनि, तानि – बहुव्रीहिः । शतं शतमिति शतशः – वीप्सायां शस्, शतं शतं निरूप्यमाणानि इत्यर्थः ।

**पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥11.6॥**

**पदार्थः** – भारत = अर्जुन ! आदित्यान् = द्वादशादित्यान्, वसून् = अष्टवसून्, रुद्रान् = एकादशरुद्रान्, अश्विनौ = देववैद्यौ, तथा = तथा, मरुतः = सप्तमरुतः, पश्य = अवलोकय, अदृष्टपूर्वाणि = पूर्वम् अनवलोकितानि, बहूनि = नानासङ्ख्यानि, आश्चर्याणि = अद्भुतानि, पश्य = अवलोकय ।
**अन्वयः** – भारत ! आदित्यान् वसून् रुद्रान् अश्विनौ तथा मरुतः पश्य, अदृष्टपूर्वाणि बहूनि आश्चर्याणि पश्य ।
**तात्पर्यम्** – अर्जुन ! द्वादशादित्यान् अष्टवसून् एकादशरुद्रान् देववैद्यौ तथा सप्तमरुतः पश्य । पूर्वम् अनवलोकितानि नानासङ्ख्याकानि अद्भुतानि अत्र पश्य ।

**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥11.7॥**

**पदार्थः** – गुडाकेश = जितनिद्र ! अद्य = इदानीम्, एकस्थम् = एकत्र स्थितम्, सचराचरम् = स्थावरजङ्गम-

सहितम्, कृत्स्नम् = सकलम्, जगत् = भुवनम्, अन्यत् च = अपरमपि, यत् = यत्, द्रष्टुम् =अवलोकितुम्, इच्छसि = अभिलषसि, तत् इह = तत्सर्वम् अत्र, मम = मे, देहे = शरीरे, पश्य = अवलोकय।

**अन्वयः** – गुडाकेश ! अद्य एकस्थं सचराचरं कृत्स्नं जगत् अन्यत् च यत् द्रष्टुम् इच्छसि (तत्सर्वम्) इह मम देहे पश्य।

**तात्पर्यम्** – गुडाकेश ! इदानीम् एकत्रैव वर्तमानं स्थावरजङ्गमात्मकं समग्रमपि भुवनं पश्य। अन्यदपि यत् यत् द्रष्टुमिच्छसि तत्सर्वं ममास्मिन् शरीरे पश्य।

**व्याकरणम्** – एकस्मिन् तिष्ठति इति एकस्थम् – कर्तरि कः उपपदसमासश्च। चराश्च अचराश्च चराचराः – द्वन्द्वः। चराचरैः सहितम्, सचराचरम् – बहुव्रीहिः। पूर्वं दृष्टानि दृष्टपूर्वाणि – सुप्सुपासः। न दृष्टपूर्वाणि अदृष्टपूर्वाणि – नञ्तत्पुरुषः।

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥11.8॥**

**पदार्थः** – अनेन = एतेन, स्वचक्षुषा एव = स्वनेत्रेण एव, मां द्रष्टुम् = माम् अवलोकितुम्, न तु शक्यसे = न समर्थः भवसि, ते = तुभ्यम्, दिव्यम् = अलौकिकम्, चक्षुः = नेत्रम्, ददामि = यच्छामि, ऐश्वरम् = ईश्वरसम्बन्धि, मे योगम् = मम सामर्थ्यम्, पश्य = अवलोकय।

**अन्वयः** – अनेन स्वचक्षुषा एव मां द्रष्टुं न शक्यसे। ते दिव्यं चक्षुः ददामि। ऐश्वरं मे योगं पश्य।

**तात्पर्यम्** – एतेन नेत्रेण एव मां द्रष्टुं त्वं समर्थः न भवसि। अतः तुभ्यम् अलौकिकं नेत्रं यच्छामि येन ईश्वरस्य मम असाधारणं सामर्थ्यं पश्य।

**रामानुजीयमतम्** – दिव्यं चक्षुः – अप्राकृतं मद्दर्शनसाधनम् इत्यर्थः।

**व्याकरणम्** – स्वस्य चक्षुः स्वचक्षुः, तेन स्वचक्षुषा – षष्ठीतत्पुरुषः। शकमर्षणे इति दैवादिकात् आत्मनेपदिनः कर्तरि लटि शक्यसे इति शब्दः, शक्नोषि इत्यर्थः।

**सञ्जय उवाच – एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥11.9॥**

**पदार्थः** – राजन् = धृतराष्ट्र ! महायोगेश्वरः = महान् योगेश्वरः, हरिः = कृष्णः, एवम् = इत्थम्, उक्त्वा = कथयित्वा, ततः = पश्चात्, परमम् = उत्कृष्टम्, ऐश्वरम् = ईश्वरसम्बन्धिनम्, रूपम् = आकारम्, पार्थाय = अर्जुनाय, दर्शयामास = प्रदर्शितवान्।

**अन्वयः** – राजन् ! महायोगेश्वरः हरिः एवम् उक्त्वा ततः परमम् ऐश्वरं रूपं पार्थाय दर्शयामास।

**तात्पर्यम्** – धृतराष्ट्र ! महान् योगेश्वरः कृष्णः इत्थम् उक्त्वा पश्चात् स्वीयम् उत्कृष्टम् ईश्वरसम्बन्धिनम् आकारं पार्थाय प्रदर्शितवान्।

**व्याकरणम्** – योगस्य ईश्वरः, योगेश्वरः – षष्ठीतत्पुरुषः। महान् योगेश्वरः, महायोगेश्वरः – कर्मधारयः।

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥11.10॥**

**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥11.11॥**

**पदार्थः** – अनेकवक्त्रनयनम् = तच्च रूपं बहुमुखनेत्रम्, अनेकाद्भुतदर्शनम् = विविधाश्चर्योपेतम्, अनेकदिव्याभरणम् = विविधदिव्यालङ्कारम्, दिव्यानेकोद्यतायुधम् = बहुदिव्यशस्त्रास्त्रम्, दिव्यमाल्याम्बरधरम् = लोकोत्तरमालावस्त्रधारकम्, दिव्यगन्धानुलेपनम् = लोकोत्तरचन्दनानुलेपनम्, सर्वाश्चर्यमयम् = सकलाद्भुतमयम्, देवम् = विराजमानम्, अनन्तम् = अन्तरहितम्, विश्वतोमुखम् =सर्वतोवक्त्रं च ।

**अन्वयः** – (तच्च रूपम्) अनेकवक्त्रनयनम् अनेकाद्भुतदर्शनम् अनेकदिव्याभरणं दिव्यानेकोद्यतायुधं दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं सर्वाश्चर्यमयं देवम् अनन्तं विश्वतोमुखम् ।

**तात्पर्यम्** – भगवान् कृष्णः अर्जुनाय तादृशं स्वरूपं प्रदर्शयामास यस्मिन् बहूनि मुखानि नेत्राणि अद्भुतवस्तूनि दिव्याभरणानि लोकोत्तरशस्त्राणि च आसन् । तच्च स्वरूपम् अत्यन्तं विस्मयकरं द्योतमानं व्याप्तं च आसीत्।

**व्याकरणम्** – वक्त्रं च नयनं च अनयोः समाहारः वक्त्रनयनम् – समाहारद्वन्द्वः । अनेकं वक्त्रनयनं यस्मिन् तत् अनेक-वक्त्रनयनम् – बहुव्रीहिः । अनेकम् अद्भुतम् अनेकाद्भुतम् – कर्मधारयः । अनेकाद्भुतस्य दर्शनं यस्मिन् तत् अनेकाद्भुत-दर्शनम् – बहुव्रीहिः । दिव्यम् आभरणम् दिव्याभरणम् – कर्मधारयः । अनेकं दिव्याभरणं यस्मिन् तत्, अनेकदिव्याभरणम् – बहुव्रीहिः । उद्यतम् आयुधम् उद्यतायुधम् – कर्मधारयः । अनेकम् उद्यतायुधम्, अनेकोद्यतायुधम् – कर्मधारयः । दिव्यम् अनेकोद्यतायुधं यस्मिन् तत् – बहुव्रीहिः । माल्यं च अम्बरं च माल्याम्बरे – द्वन्द्वः। दिव्ये माल्याम्बरे दिव्यमाल्याम्बरे – कर्मधारयः । दिव्यमाल्याम्बरयोः धरम् दिव्यमाल्याम्बरधरम् – षष्ठीतत्पुरुषः । दिव्यः गन्धः दिव्यगन्धः – कर्मधारयः । दिव्यगन्धस्य अनुलेपनं यस्मिन् तत्, दिव्यगन्धानुलेपनम् – बहुव्रीहिः । दीव्यतीति देवः, तम् – कर्तरि अच् । विश्वतः मुखानि यस्य तत् विश्वतोमुखम् – बहुव्रीहिः ।

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥11.12॥**

**पदार्थः** – यदि = चेत्, दिवि = आकाशे, सूर्यसहस्रस्य = आदित्यसहस्रस्य, भाः = कान्तिः, युगपत्= सद्यः, उत्थिता भवेत् = उद्गता स्यात्, सा = कान्तिः, महात्मनः = महानुभावस्य, तस्य = नारायणस्य, भासः = कान्तेः, सदृशी = तुल्या, स्यात् = भवेत् ।

**अन्वयः** – यदि दिवि सूर्यसहस्रस्य भाः युगपत् उत्थिता भवेत् सा महात्मनः तस्य भासः सदृशी स्यात् ।

**तात्पर्यम्** – आकाशे यदि युगपदेव सहस्रं सूर्याः उत्थिताः स्युः तर्हि तेषां या कान्तिः स्यात् सा कान्तिः महानुभावस्य तस्य नारायणस्य कान्तेः तुल्या भवेत् ।

**व्याकरणम्** – सूर्याणां सहस्रम्, तस्य, सूर्यसहस्रस्य – षष्ठीतत्पुरुषः । महान् आत्मा यस्य सः महात्मा, तस्य – बहुव्रीहिः ।

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥11.13॥**

**पदार्थः** – तदा = तदानीम्, पाण्डवः = अर्जुनः, देवदेवस्य = हरेः, तत्र = तस्मिन्, शरीरे = देहे, अनेकधा= बहुधा, प्रविभक्तम् = पृथक्भूतम्, कृत्स्नम् = सकलम्, जगत् = भुवनम्, एकस्थम् = एकस्मिन् स्थितम्,

अपश्यत् = दृष्टवान्।

**अन्वयः** – तदा पाण्डवः देवदेवस्य तत्र शरीरे अनेकधा प्रविभक्तं कृत्स्नं जगत् एकस्थम् अपश्यत्।

**तात्पर्यम्** – तदा अर्जुनः हरेः तस्मिन् शरीरे बहुधा विभक्तं सकलमपि जगत् एकत्रैव वर्तमानम् अपश्यत्।

**व्याकरणम्** – देवानां देवः देवदेवः, तस्य, देवदेवस्य – षष्ठीतत्पुरुषः।

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥11.14॥**

**पदार्थः** – ततः = अनन्तरम्, हृष्टरोमा = सरोमाञ्चः, सः धनञ्जयः = सः अर्जुनः, विस्मयाविष्टः = आश्चर्योपेतः, शिरसा = शीर्षेण, देवम् = विष्णुम्, प्रणम्य = नमस्कृत्य, कृताञ्जलिः = बद्धाञ्जलिः, अभाषत = अवदत्।

**अन्वयः** – ततः हृष्टरोमा सः धनञ्जयः विस्मयाविष्टः शिरसा देवं प्रणम्य कृताञ्जलिः अभाषत।

**तात्पर्यम्** – अनन्तरं सरोमहर्षः सः अर्जुनः विस्मितः शिरसा विष्णुं नमस्कृत्य कृताञ्जलिः अवदत्।

**व्याकरणम्** – विस्मयेन आविष्टः विस्मयाविष्टः – तृतीया तत्पुरुषः। हृष्टानि रोमाणि यस्य सः हृष्टरोमा – बहुव्रीहिः। कृतः अञ्जलिः येन सः कृताञ्जलिः – बहुव्रीहिः।

**अर्जुन उवाच– पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान्।**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥11.15॥**

**पदार्थः** – देव = ईश्वर, तव देहे = तव शरीरे, सर्वान् = सकलान्, देवान् = सुरान्, तथा = तथा, भूतविशेष-सङ्घान् = भूतविशेषसमुदायान्, कमलासनस्थम् = कमलायमानभूमौ मध्ये कर्णिकासदृशे मेरौ स्थितम्, ब्रह्माणम्= चतुर्मुखम्, ईशम् = ईश्वरम्, सर्वान् = सकलान्, ऋषीन् च = मुनीन् च, दिव्यान् = दिवि स्थितान्, उरगान् च = सर्पान् च, पश्यामि = अवलोकयामि।

**अन्वयः** – देव ! तव देहे सर्वान् देवान् तथा भूतविशेषसङ्घान् कमलासनस्थं ब्रह्माणम् ईशं सर्वान् ऋषीन् च दिव्यान् उरगान् च पश्यामि।

**तात्पर्यम्** – देव ! तव शरीरे सकलान् देवान् तथा स्थावरजङ्गमात्मकभूतविशेषसमुदायान्, कमलकर्णिका-सदृशे भूमध्यस्थिते मेरौ आसीनं ब्रह्माणम्, पार्वतीपतिम् ईश्वरम्, सकलान् ऋषीन् मुनीन्, दिवि स्थितान् सर्पान् च पश्यामि।

**रामानुजीयमतम्** – कमलासनस्थम् – कमलासने ब्रह्मणि स्थितम् ईशम्, तन्मते अवस्थितम् इत्यर्थः।

**व्याकरणम्** – भूतानां विशेषाः भूतविशेषाः – षष्ठीतत्पुरुषः। भूतविशेषाणां सङ्घाः, तान् – षष्ठीतत्पुरुषः। कमलमेव आसनम् – कर्मधारयः। कमलासने तिष्ठतीति कमलासनस्थः, तम् – कर्तरि कः उपपदसमासश्च।

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥11.16॥**

**पदार्थः** – विश्वेश्वर = जगदीश्वर ! विश्वरूप = सर्वरूप ! त्वाम् = भवन्तम्, अनेकबाहूदरवक्त्रनेत्रम् = बहुहस्तकुक्षिमुखनयनम्, सर्वतः = सर्वत्र, अनन्तरूपम् = अनवधिकस्वरूपम्, पश्यामि = वीक्षे, तव आदिम्

= तव मूलम्, न पश्यामि = न वीक्षे, न मध्यम् = न मध्यभागम्, न पुनः अन्तम् = नापि अवसानम्।

**अन्वयः** - विश्वेश्वर, विश्वरूप ! त्वाम् अनेकबाहूदरवक्त्रनेत्रं सर्वतः अनन्तरूपं पश्यामि। तव आदिं न पश्यामि न मध्यं न पुनः अन्तम्।

**तात्पर्यम्** - जगदीश्वर ! समस्तरूप ! त्वां तव बहुहस्तं बहुकुक्षिं बहुमुखं बहुनयनम् अनन्तं च स्वरूपं पश्यामि। तव मूलं मध्यम् अन्तं च ज्ञातुं न शक्नोमि।

**रामानुजीयमतम्** - अनेकबाहूदरवक्त्रनेत्रम् - अस्य व्याख्या एकोनविंशश्लोकभाष्ये अस्ति। एकस्मात् कटिप्रदेशात् अनन्तपरिमाणात् ऊर्ध्वम् उद्भूताः यथोदितदिव्योदरादयः। अधश्च यथोदितदिव्यपादाः। तत्र एकस्मिन् मुखे नेत्रद्वयं इति च न विरोधः।

**व्याकरणम्** - बाहुश्च उदरं च वक्त्रं च नेत्रं च एषां समाहारः, बाहूदरवक्त्रनेत्रम् - द्वन्द्वः। अनेकं बाहूदरवक्त्र-नेत्रं यस्मिन् सः, अनेकबाहूदरवक्त्रनेत्रः, तम् - बहुव्रीहिः। अनन्तं रूपं यस्य सः अनन्तरूपः, तम् - बहुव्रीहिः। विश्वस्य ईश्वरः विश्वेश्वरः, तत्सम्बुद्धौ विश्वेश्वर - बहुव्रीहिः। विश्वं रूपं यस्य सः विश्वरूपः, तत्सम्बुद्धौ विश्वरूप - बहुव्रीहिः।

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम्।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥11.17॥**

**पदार्थः** - त्वाम् = त्वाम्, किरीटिनम् = शिरोभूषणयुक्तम्, गदिनम् = गदाधरम्, चक्रिणम् = चक्रपाणिम्, तेजोराशिम् = कान्तिपुञ्जम्, सर्वतः = सर्वत्र, दीप्तिमन्तम् = तेजस्विनम्, समन्तात् = सर्वतः, दीप्तानलार्कद्युतिम् = प्रदीप्ताग्निसूर्यतुल्यतेजसम्, अप्रमेयम् = विज्ञातुमशक्यम्, दुर्निरीक्ष्यम् = दुरवलोकम्, पश्यामि = अवलोकयामि।

**अन्वयः** - त्वां किरीटिनं गदिनं चक्रिणं तेजोराशिं सर्वतो दीप्तिमन्तं समन्तात् दीप्तानलार्कद्युतिम् अप्रमेयं दुर्निरीक्ष्यं च पश्यामि।

**तात्पर्यम्** - त्वं किरीटवान् गदाधरः चक्रपाणिः तेजस्वी दीप्तिमान् द्रष्टुम् अशक्यः, कान्त्या अग्नेः सूर्यस्य च समानः अप्रमेयश्च वर्तसे। तादृशं त्वाम् अहं पश्यामि।

**व्याकरणम्** - किरीटम् अस्य अस्ति इति किरीटी, तम् - मतुबर्थे इनिः। दीप्तिः अस्य अस्मिन् वा अस्ति इति दीप्तिमान्, तम् - मतुप्। अनलश्च अर्कश्च अनलार्कौ - द्वन्द्वः। दीप्तौ अनलार्कौ दीप्तानलार्कौ - कर्मधारयः। दीप्तानलार्कयोः द्युतिः, दीप्तानलार्कद्युतिः - षष्ठीतत्पुरुषः। दीप्तानलार्कद्युतिः इव द्युतिः यस्य सः दीप्तानलार्कद्युतिः, तम् - बहुव्रीहिः। न प्रमेयः अप्रमेयः, तम् - नञ्तत्पुरुषः।

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम्।**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥11.18॥**

**पदार्थः** - त्वम् = भवान्, परमम् = उत्कृष्टम्, वेदितव्यम् = ज्ञातव्यम्, अक्षरम् = अनश्वरं ब्रह्म, त्वम् अस्य = त्वम् एतस्य, विश्वस्य = जगतः, परम् = परमम्, निधानम् = आश्रयः, त्वम् अव्ययः = त्वं नाशरहितः, शाश्वतधर्मगोप्ता = सनातनधर्मरक्षकः, त्वं सनातनः = त्वं शाश्वतः, पुरुषः = पुरुषोत्तमः, मे = मम, मतः = अभीष्टः।

**अन्वयः** - त्वं परमं वेदितव्यम् अक्षरम्, त्वम् अस्य विश्वस्य परं निधानम्, त्वम् अव्ययः, शाश्वतधर्मगोप्ता, त्वं सनातनः पुरुषः मे मतः ।

**तात्पर्यम्** - त्वम् अनश्वरम् उत्कृष्टं ब्रह्म, त्वम् अस्य जगतः आधारः, त्वं नाशरहितः सनातनधर्मरक्षकः च त्वं शाश्वतः पुरुषोत्तमः च असि । एवम् अहं जानामि ।

**व्याकरणम्** - विद् धातोः कर्मणि तव्यत् प्रत्यये वेदितव्यम् इति शब्दः । नि इत्युपसर्गपूर्वकात् धाञ्धातोः अधिकरणे ल्युटि निधानमिति शब्दः, निधीयते अत्र इति निधानम् आधारः इत्यर्थः । शाश्वतो धर्मः शाश्वतधर्मः - कर्मधारयः । शाश्वतधर्मस्य गोप्ता शाश्वतधर्मगोप्ता - षष्ठीतत्पुरुषः ।

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥11.19॥**

**पदार्थः** - अनादिमध्यान्तम् = आदिमध्यान्तरहितम्, अनन्तवीर्यम् = अप्रमेयपराक्रमम्, अनन्तबाहुम् = असङ्ख्याकहस्तम्, शशिसूर्यनेत्रम् = चन्द्रार्कनयनम्, दीप्तहुताशवक्त्रम् = प्रदीप्ताग्निमुखम्, स्वतेजसा = आत्मकान्त्या, इदम् = एतत्, विश्वम् = जगत्, तपन्तम् = तापयन्तम्, त्वाम् = भवन्तम्, पश्यामि = अवलोकयामि ।

**अन्वयः** - अनादिमध्यान्तम् अनन्तवीर्यम् अनन्तबाहुं शशिसूर्यनेत्रं दीप्तहुताशवक्त्रं स्वतेजसा इदं विश्वं तपन्तं त्वां पश्यामि ।

**तात्पर्यम्** - तव आदिः मध्यः अन्तश्च नास्ति, तव पराक्रमः परिच्छेत्तुं न शक्यः, तव अनन्ताः हस्ताः सन्ति, सूर्यचन्द्रौ तव नयने स्तः, तव मुखेषु जाज्वल्यमानः अग्निः भासते, त्वं निजवर्चसा समग्रमिदं जगत् तापयन् वर्तसे । एतादृशं त्वामहं पश्यामि ।

**रामानुजीयमतम्** - शशिसूर्यनेत्रम् - शशिवत् सूर्यवच्च प्रसादप्रतापयुक्तसर्वनेत्रम् ।

**व्याकरणम्** - आदिश्च मध्यश्च अन्तश्च आदिमध्यान्ताः - द्वन्द्वः । न विद्यन्ते आदिमध्यान्ताः यस्य सः अनादिमध्यान्तः, तम् - बहुव्रीहिः । अनन्तं वीर्यं यस्य सः, अनन्तवीर्यः, तम् - बहुव्रीहिः । शशी च सूर्यश्च शशिसूर्यौ - द्वन्द्वः । शशिसूर्यौ नेत्रे यस्य सः शशिसूर्यनेत्रः, तम् - बहुव्रीहिः । दीप्तः हुताशः दीप्तहुताशः - कर्मधारयः । दीप्तहुताशः वक्त्रेषु यस्य सः दीप्तहुताशवक्त्रः, तम् - बहुव्रीहिः ।

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥11.20॥**

**पदार्थः** - महात्मन् = महानुभाव ! द्यावापृथिव्योः = भूम्यन्तरिक्षयोः, इदम् = असौ, अन्तरम् = अवकाशः, त्वया = भवता, एकेन = केवलेन, व्याप्तं = परिव्याप्तः, सर्वाः = सकलाः, दिशः च = आशाः अपि (व्याप्ताः), तव = ते, उग्रम् = क्रूरम्, अद्भुतम् = विस्मयकरम्, इदम् = एतत्, रूपम् = स्वरूपम्, दृष्ट्वा = ईक्षित्वा, लोकत्रयम् = भुवनत्रयम्, प्रव्यथितम् = खिन्नम् ।

**अन्वयः** - महात्मन् ! द्यावापृथिव्योः इदम् अन्तरं हि त्वया एकेन व्याप्तं सर्वाः दिशः च । तव उग्रम् अद्भुतम् इदं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितम् ।

**तात्पर्यम्** - महात्मन् ! भूम्यन्तरिक्षयोः मध्ये वर्तमानः सर्वोऽपि अवकाशः भवता एकेन परिव्याप्तः अस्ति । सर्वाः

दिशः अपि त्वयैव व्याप्ताः। तव क्रूरं विस्मयजनकं च इदं स्वरूपं दृष्ट्वा भुवनत्रयमपि किं भविष्यतीति चिन्ताकुलम् अस्ति।

**व्याकरणम्** – द्यौश्च पृथिवी च द्याव्यापृथिव्यौ, तयोः, द्याव्यापृथिव्योः – द्वन्द्वः। लोकानां त्रयम्, लोकत्रयम् – षष्ठीतत्पुरुषः।

**अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥11.21॥**

**पदार्थः** – अमी हि = एते, सुरसङ्घाः = देवसमूहाः, त्वां विशन्ति = त्वां प्रविशन्ति, केचित् भीताः = केचन भयसहिताः, प्राञ्जलयः = मुकुलितहस्ताः, गृणन्ति = स्तुवन्ति, महर्षिसिद्धसङ्घाः = महामुनीनां सिद्धानां च समुदायाः, स्वस्ति इति = स्वस्ति इत्येवम्, उक्त्वा = कथयित्वा, पुष्कलाभिः = समृद्धाभिः, स्तुतिभिः= नुतिभिः, त्वां स्तुवन्ति = त्वां प्रशंसन्ति।

**अन्वयः** – अमी हि सुरसङ्घाः त्वां विशन्ति। केचित् भीताः प्राञ्जलयः गृणन्ति। महर्षिसिद्धसङ्घाः स्वस्ति इति उक्त्वा पुष्कलाभिः स्तुतिभिः त्वां स्तुवन्ति।

**तात्पर्यम्** – एते हि देवसमूहाः त्वां प्रविशन्ति। केचित् भयसहिताः मुकुलितहस्ताः स्तुवन्ति। बहवो मुनयः सिद्धाश्च स्वस्ति इति उक्त्वा अर्थगर्भैः स्तोत्रैः त्वां प्रशंसन्ति।

**माध्वमतम्**– एते सुरवर्गाः केचित् त्वां प्रविशन्ति। केचिच्च भीताः स्तुवन्ति। महर्षिसिद्धसङ्घाः गुणपूर्णाभिः स्तुतिभिः त्वां स्तुवन्ति।

**व्याकरणम्** – प्रकृष्टः अञ्जलिः येषां ते प्राञ्जलयः – बहुव्रीहिः। महान्तः ऋषयः महर्षयः – कर्मधारयः। महर्षयश्च सिद्धाश्च महर्षिसिद्धाः – द्वन्द्वः। महर्षिसिद्धानां सङ्घाः, महर्षिसिद्धसङ्घाः – षष्ठीतत्पुरुषः।

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥11.22॥**

**पदार्थः** – रुद्रादित्याः = एकादश रुद्राः द्वादशादित्याश्च, वसवः = अष्ट वसवः, ये च साध्याः = ये अपि साध्याः, विश्वे = विश्वेदेवाः, अश्विनौ = देवभिषजौ, मरुतः च = मरुद्गणाः, ऊष्मपाः च = पितृगणाः, गन्धर्वयक्षासुरसिद्धसङ्घाः = गन्धर्वयक्षासुरसिद्धसमूहाः, सर्वे = सकलाः, विस्मिताः च एव = आश्चर्यान्विताः च, त्वां वीक्षन्ते = त्वां पश्यन्ति।

**अन्वयः** – रुद्रादित्याः वसवः ये च साध्याः विश्वे अश्विनौ मरुतः च ऊष्मपाः च गन्धर्वयक्षासुरसिद्धसङ्घाः सर्वे विस्मिताः एव त्वां वीक्षन्ते।

**तात्पर्यम्** – रुद्राः आदित्याः वसवः साध्याः विश्वेदेवाः देवभिषजौ मरुद्गणाः पितृगणाः गन्धर्वाणां यक्षाणाम् असुराणां सिद्धानां च समूहाः सर्वेऽपि आश्चर्यान्विताः त्वां पश्यन्ति।

**व्याकरणम्** – रुद्राश्च आदित्याश्च रुद्रादित्याः – द्वन्द्वः। गन्धर्वाश्च यक्षाश्च असुराश्च सिद्धाश्च गन्धर्वयक्षासुरसिद्धाः – द्वन्द्वः। गन्धर्वयक्षासुरसिद्धानां सङ्घाः गन्धर्वयक्षासुरसिद्धसङ्घाः – षष्ठीतत्पुरुषः।

**रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥11.23॥**

**पदार्थः** – महाबाहो = दीर्घबाहो ! बहुवक्त्रनेत्रम् = अनेकाननलोचनम्, बहुबाहूरुपादम् = असङ्ख्याकहस्तोरुचरणम्, बहूदरम् = अनेककुक्षिम्, बहुदंष्ट्राकरालम् = अनेकदन्तभयानकम्, महत् = बृहत्, ते रूपम् = तव स्वरूपम्, दृष्ट्वा = अवलोक्य, लोकाः = जनाः, प्रव्यथिताः = चिन्ताकुलाः, तथा अहम् = तथा अहम् ।

**अन्वयः** – महाबाहो ! बहुवक्त्रनेत्रं बहुबाहूरुपादं बहूदरं बहुदंष्ट्राकरालं महत् ते रूपं दृष्ट्वा लोकाः प्रव्यथिताः तथा अहम् ।

**तात्पर्यम्** – दीर्घबाहो ! तव आकारः अत्यन्तं विचित्रः । तत्र बहूनि मुखानि लोचनानि सन्ति । बहवः हस्ताः ऊरवः पादाश्च सन्ति । बहूनि उदराणि अपि सन्ति । बहुभिः दन्तैः भयानकः दृश्यसे । एतादृशस्य आकारस्य दर्शनादेव सर्वे जनाः किं भवेदिति चिन्ताम् उपगताः तथा अहम् ।

**व्याकरणम्** – वक्त्राणि च नेत्राणि च एतेषां समाहारः, वक्त्रनेत्रम् – द्वन्द्वः । बहु वक्त्रनेत्रं यस्य तत् बहुवक्त्रनेत्रम्, तत् – बहुव्रीहिः । बाहवश्च ऊरवश्च पादाश्च बाहूरुपादम् – द्वन्द्वः । बहु बाहूरुपादं यस्य तत्, तत् – बहुव्रीहिः । बहूनि उदराणि यस्य तत् बहूदरम्, तत् – बहुव्रीहिः । बह्व्यश्च दंष्ट्राश्च बहुदंष्ट्राः – कर्मधारयः । बहुदंष्ट्राभिः करालं बहुदंष्ट्राकरालम्, तत् – बहुव्रीहिः ।

**नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥11.24॥**

**पदार्थः** – विष्णो = सर्वव्यापक ! नभःस्पृशम् = गगनचुम्बिनम्, दीप्तम् = प्रज्वलितम्, अनेकवर्णम् = नानावर्णम्, व्यात्ताननम् = विवृतमुखम्, दीप्तविशालनेत्रम् = ज्वलितविस्तृतलोचनम्, त्वां दृष्ट्वा हि= त्वां विलोक्य, प्रव्यथितान्तरात्मा = खिन्नचित्तः, धृतिम् = धैर्यम्, शमं च = शान्तिं च, न विन्दामि = न लभे ।

**अन्वयः** – विष्णो ! नभःस्पृशं दीप्तम् अनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं त्वां दृष्ट्वा हि प्रव्यथितारन्तात्मा धृतिं शमं च न विन्दामि ।

**तात्पर्यम्** – हे विष्णो ! त्वं गगनचुम्बी, नानावर्णोपेतः, उद्घाटितवदनः, ज्वलितविस्तृतलोचनश्च भासि । मम चित्तं प्रकम्पते । तेन अहं धैर्यं शान्तिं च न प्राप्नोमि ।

**व्याकरणम्** – नभः स्पृशतीति नभःस्पृक्, तम् – कर्तरि क्विप् उपपदसमासश्च । अनेकः वर्णः अनेकवर्णः – कर्मधारयः । दीप्तः अनेकवर्णः यस्य सः दीप्तानेकवर्णः, तम् – बहुव्रीहिः । प्रव्यथितः अन्तरात्मा यस्य सः प्रव्यथितान्तरात्मा – बहुव्रीहिः । व्यात्तम् आननं यस्य सः व्यात्ताननः, तम् – बहुव्रीहिः । दीप्ते च ते विशाले च दीप्तविशाले – कर्मधारयः । दीप्तविशाले नेत्रे यस्य सः दीप्तविशालनेत्रः, तम् – बहुव्रीहिः ।

**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥11.25॥**

**पदार्थः** – जगन्निवास = विश्वनिकेतन ! देवेश = सुराधिप, दंष्ट्राकरालानि = दन्तभयानकानि, कालानल-सन्निभानि च = प्रलयाग्निसदृशानि च, ते मुखानि = वदनानि, दृष्ट्वा एव = ईक्षित्वा एव, दिशः = आशाः, न जाने = न वेद्मि, शर्म च = सुखमपि, न लभे = न प्राप्नोमि, प्रसीद = प्रसन्नो भव ।

**अन्वयः** - जगन्निवास, देवेश ! दंष्ट्राकरालानि कालानलसन्निभानि च ते मुखानि दृष्ट्वा एव दिशः न जाने । शर्म च न लभे । प्रसीद ।

**तात्पर्यम्** - विश्वनिकेतन, सुराधिप ! दन्तभयानकानि प्रलयाग्निसदृशानि च तव वदनानि दृष्ट्वा एव दिशः न जानामि । धैर्यं शान्तिं च कथमपि न प्राप्नोमि । प्रसन्नो भव ।

**व्याकरणम्** - दंष्ट्राभिः करालानि दंष्ट्राकरालानि, तानि - तृतीयातत्पुरुषः । कालस्य अनलः कालानलः - षष्ठी-तत्पुरुषः । कालानलस्य सन्निभानि, कालानलसन्निभानि, तानि - षष्ठीतत्पुरुषः । जगदेव निवासः यस्य सः जगन्निवासः, तत्सम्बुद्धौ, जगन्निवास - बहुव्रीहिः ।

**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥11.26॥**
**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥11.27॥**

**पदार्थः** - अवनिपालसङ्घैः सहैव = राजसमुदायैः साकम् एव, सर्वे च = सकलाः अपि, अमी = इमे, धृतराष्ट्रस्य पुत्राः = दुर्योधनादयः, तथा = एवम्, असौ भीष्मः द्रोणः सूतपुत्रः = अयं भीष्मः द्रोणः कर्णः च । अस्मदीयैः = आस्माकीनैः, योधमुख्यैः सह अपि = प्रधानयोधैः सह अपि, ते दंष्ट्राकरालानि = ते दन्तैः घोराणि, भयानकानि = भयङ्कराणि, वक्त्राणि = मुखानि, त्वरमाणाः = त्वरायुक्ताः, विशन्ति = प्रविशन्ति, केचित् = केचित् योधाः, चूर्णितैः = चूर्णीभूतैः, उत्तमाङ्गैः = शीर्षैः उपलक्षिताः, दशनान्तरेषु = दन्तमध्यभागेषु, विलग्नाः = संसक्ताः, सन्दृश्यन्ते = वीक्ष्यन्ते ।

**अन्वयः** - अवनिपालसङ्घैः सह एव सर्वे च अमी धृतराष्ट्रस्य पुत्राः तथा असौ भीष्मः द्रोणः सूतपुत्रः अस्मदीयैः योधमुख्यैः सह त्वां विशन्ति । ते दंष्ट्राकरालानि भयानकानि वक्त्राणि त्वरमाणाः विशन्ति । केचित् दशनान्तरेषु विलग्नाः चूर्णितैः उत्तमाङ्गैः (उपलक्षिताः) दृश्यन्ते ।

**तात्पर्यम्** - एते सर्वेऽपि कौरवाः अन्येषां नृपाणां समूहैः सह तव मुखानि त्वरया प्रविशन्तः सन्ति । तैः सह भीष्मः द्रोणः कर्णः तथा अस्मत्पक्षीयाः बहवो योधमुख्याः प्रविशन्तः सन्ति । तव मुखानि दंष्ट्राभिः अत्यन्तं घोराणि भयजनकानि च सन्ति । तव मुखानि प्रविष्टवत्सु एतेषु केचन दन्तानां मध्ये विलग्नाः दृश्यन्ते । तेषां च शिरांसि चूर्णितानि दृश्यन्ते ।

**व्याकरणम्** -अवनिपालानां सङ्घाः, अवनिपालसङ्घाः, तैः - षष्ठीतत्पुरुषः । योधेषु मुख्याः योधमुख्याः, तैः - सप्तमीतत्पुरुषः । दशनानाम् अन्तराणि दशनान्तराणि, तेषु - षष्ठीतत्पुरुषः ।

**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥11.28॥**

**पदार्थः** - यथा = येन प्रकारेण, नदीनाम् = स्रोतसाम्, बहवः = असङ्ख्याकाः, अम्बुवेगाः = जलप्रवाहाः, समुद्रम् एव = सागरम् एव, अभिमुखाः = सम्मुखाः सन्तः, द्रवन्ति = प्रवहन्ति, तथा = तेन प्रकारेण, अमी = एते, नरलोकवीराः = मर्त्यलोकशूराः, अभिविज्वलन्ति = प्रकाशमानानि, तव = ते, वक्त्राणि

= मुखानि, विशन्ति = प्रविशन्ति ।

**अन्वयः** – यथा नदीनां बहवः अम्बुवेगाः समुद्रम् एव अभिमुखाः द्रवन्ति तथा अमी नरलोकवीराः अभिविज्वलन्ति तव वक्त्राणि विशन्ति ।

**तात्पर्यम्** – यथा स्रोतसाम् असङ्ख्याकाः जलप्रवाहाः सागरम् एव अभिमुखीभूय प्रविशन्ति तथा एते शूराः प्रकाशमानानि तव मुखानि प्रविशन्ति ।

**व्याकरणम्** – अभि वि इति उपसर्गद्वयपूर्वकात् ज्वलधातोः कर्तरि लट्, तस्य शतृ आदेशः अभिविज्वलत् इति नपुंसके । नराणां लोकः नरलोकः – षष्ठीतत्पुरुषः । नरलोकस्य वीराः नरलोकवीराः – षष्ठीतत्पुरुषः ।

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ।।11.29।।**

**पदार्थः** – यथा = येन प्रकारेण, समृद्धवेगाः = तीव्ररयाः, पतङ्गाः = शलभाः, प्रदीप्तम् = ज्वलितम्, ज्वलनम् = अग्निम्, नाशाय = विनाशाय, विशन्ति = प्रविशन्ति, तथा एव = तेन प्रकारेण एव, समृद्धवेगाः = तीव्ररयाः, लोकाः = प्राणिनः, तव वक्त्राणि अपि = तव मुखानि अपि, नाशाय =विनाशाय, विशन्ति = प्रविशन्ति ।

**अन्वयः** – यथा समृद्धवेगाः पतङ्गाः प्रदीप्तं ज्वलनं नाशाय विशन्ति तथा एव समृद्धवेगाः लोकाः तव वक्त्राणि अपि नाशाय विशन्ति ।

**तात्पर्यम्** – यथा तीव्रगतयः पतङ्गाः ज्वलितम् अग्निम् आत्मविनाशाय प्रविशन्ति तथा एव तीव्रगमनाः प्राणिनः तव मुखानि स्वविनाशाय एव प्रविशन्ति ।

**व्याकरणम्** – समृद्धः वेगः येषां ते समृद्धवेगाः – बहुव्रीहिः ।

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ।।11.30।।**

**पदार्थः** – ज्वलद्भिः = प्रकाशमानैः, वदनैः = आननैः, समग्रान् = सर्वान्, लोकान् = भुवनानि, समन्तात् = सर्वतः, ग्रसमानः = निगिरन्, लेलिह्यसे = आस्वादयसि, विष्णो = व्यापक ! तव उग्राः = तव तीक्ष्णाः, भासः = दीप्तयः, तेजोभिः = किरणैः, आपूर्य = पूर्णं विधाय, समग्रम् = समस्तम्, जगत् = भुवनम्, प्रतपन्ति = नितरां तापयन्ति ।

**अन्वयः** – ज्वलद्भिः वदनैः समग्रान् लोकान् समन्तात् ग्रसमानः लेलिह्यसे । विष्णो ! तव उग्राः भासः तेजोभिः आपूर्य समग्रं जगत् प्रतपन्ति ।

**तात्पर्यम्** – त्वं प्रकाशमानैः आननैः सर्वतः समग्रान् लोकान् ग्रसन् आस्वादयसि । हे विष्णो ! तव तीक्ष्णाः किरणाः कान्तिभिः समस्तं जगत् सम्पूर्य नितरां तापयन्ति ।

**व्याकरणम्** – ग्रस्धातोः कर्तरि लटि तस्य च शानचि ग्रसमान इति शब्दः ।

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ।।11.31।।**

**पदार्थः** – देववर = देवश्रेष्ठ ! उग्ररूपः = भयङ्करस्वरूपः, भवान् कः = त्वं कः, मे आख्याहि = मह्यं कथय, ते नमः = तव प्रणामः, अस्तु = भवतु, प्रसीद = प्रसन्नो भव, आद्यम् = प्रथमम्, भवन्तम् = त्वाम्, विज्ञातुम् = वेदितुम्, इच्छामि = अभिलषामि, तव = ते, प्रवृत्तिम् = चेष्टाम्, न हि प्रजानामि = न वेद्मि ।

**अन्वयः** – देववर ! उग्ररूपः भवान् कः मे आख्याहि । ते नमः अस्तु । प्रसीद । आद्यं भवन्तं विज्ञातुम् इच्छामि । तव प्रवृत्तिं न हि प्रजानामि ।

**तात्पर्यम्** – देवश्रेष्ठ ! भयङ्करस्वरूपः त्वं कः इति मह्यं कथय । तव प्रणामः अस्तु । अनुगृहाण । प्रथमं त्वां वेदितुम् इच्छामि । तव प्रवृत्तिं न जानामि ।

**व्याकरणम्** – देवानां वरः देववरः, तत्सम्बुद्धौ देववर – षष्ठीतत्पुरुषः ।

**श्रीभगवानुवाच– कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥11.32॥**

**पदार्थः** – लोकक्षयकृत् = लोकविनाशकः, प्रवृद्धः = बृंहितः, कालः = समयः, अस्मि = भवामि, लोकान् = भुवनानि, समाहर्तुम् = उपसंहर्तुम्, इह प्रवृत्तः = अत्र व्यापृतः, त्वाम् ऋते = त्वां विना, प्रत्यनीकेषु = परसैन्येषु, अवस्थिताः = उपस्थिताः, ये योधाः = ये योद्धारः, सर्वे अपि = ते सकलाः अपि, न भविष्यन्ति = न स्थास्यन्ति ।

**अन्वयः** – लोकक्षयकृत् प्रवृद्धः कालः अस्मि । लोकान् समाहर्तुम् इह प्रवृत्तः । त्वाम् ऋते प्रत्यनीकेषु ये अवस्थिताः योधाः सर्वे अपि न भविष्यन्ति ।

**तात्पर्यम्** – अहं सर्वान् लोकान् संहर्तुं प्रवृद्धः कालोऽस्मि । प्रतिपक्षसैन्येषु ये योधाः सन्ति भीष्मद्रोणप्रभृतयः तान् त्वं न मारयसि चेदपि अवश्यं मया ते मारिताः भविष्यन्ति ।

**व्याकरणम्** – लोकानां क्षयः लोकक्षयः – षष्ठीतत्पुरुषः । लोकक्षयं करोति इति लोकक्षयकृत् – कर्तरि क्विप् उपपदसमासश्च । विनार्थकस्य ऋतेशब्दस्य योगे प्राचीनव्याकरणानुसारेण त्वाम् इति द्वितीया । प्रतिगतानि अनीकानि प्रत्यनीकानि, तेषु – प्रादिसमासः, शत्रुसैन्येषु इत्यर्थः ।

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥11.33॥**

**पदार्थः** – सव्यसाचिन् = सव्येन हस्तेनापि शरप्रयोगे निपुण ! तस्मात् = ततः हेतोः, उत्तिष्ठ = सज्जस्व, यशः = कीर्तिम्, लभस्व = प्राप्नुहि, शत्रून् = अरीन्, जित्वा = विजित्य, समृद्धम् = निष्कण्टकम्, राज्यम् = आधिपत्यम्, भुङ्क्ष्व = अनुभव, एते = इमे, पूर्वम् एव = प्रथममेव, निहताः = विनाशिताः, निमित्तमात्रम् = हेतुमात्रम्, भव = जायस्व ।

**अन्वयः** – सव्यसाचिन् ! तस्मात् त्वम् उत्तिष्ठ, यशः लभस्व । शत्रून् जित्वा समृद्धं राज्यं भुङ्क्ष्व । एते मया पूर्वं निहताः । निमित्तमात्रं भव ।

**तात्पर्यम्** – तस्मात् हे अर्जुन ! त्वम् उत्तिष्ठ, कीर्तिं प्राप्नुहि । अरीन् विजित्य निष्कण्टकम् आधिपत्यम् अनुभव । एते मया इतः पूर्वमेव विनाशिताः । त्वं निमित्तमात्रं भव ।

**व्याकरणम्** – सव्येन (हस्तेन) साधु सचते (बाणान् प्रयुङ्क्ते) इति सव्यसाची, तत्सम्बुद्धौ – कर्तरि णिनिः । निमित्तमेव निमित्तमात्रम् – तत्पुरुषः ।

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥11.34॥**

**पदार्थः** – अन्यान् अपि = इतरान् अपि, द्रोणं च भीष्मं च = द्रोणं भीष्मं च, जयद्रथं च कर्णं च = जयद्रथं कर्णं च, तथा = तथा, योधवीरान् = शत्रून्, हतान् = निहतान्, जहि = नाशय, मा व्यथिष्ठाः = मा खेदं प्राप्नुहि, युध्यस्व = युद्धं कुरु, रणे = युद्धे, सपत्नान् = शत्रून्, जेतासि = जेष्यसि ।

**अन्वयः** – द्रोणं च भीष्मं च जयद्रथं च कर्णं तथा अन्यान् अपि योधवीरान् मया हतान् त्वं जहि । मा व्यथिष्ठाः । युध्यस्व । रणे सपत्नान् जेतासि ।

**तात्पर्यम्** – द्रोणः भीष्मः जयद्रथः कर्णः तथा अन्ये सर्वे अपि मया पूर्वमेव निहताः । मया निहतानेव त्वं नाशय । व्यथां मा कुरु । युद्धे प्रवर्तस्व । रणे शत्रून् जेष्यसि ।

**सञ्जय उवाच – एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥11.35॥**

**पदार्थः** – किरीटी = अर्जुनः, केशवस्य = श्रीकृष्णस्य, एतत् = इदम्, वचनम् = वाक्यम्, श्रुत्वा = आकर्ण्य, कृताञ्जलिः = मुकुलितकरः, वेपमानः = कम्पमानः, भीतभीतः = भयसहितः, कृष्णम् = श्रीकृष्णम्, नमस्कृत्वा = प्रणम्य, सगद्गदम् = निरुद्धकण्ठम्, भूयः एव = पुनरपि, प्रणम्य = नमस्कृत्वा, आह = उवाच ।

**अन्वयः** – किरीटी केशवस्य एतत् वचनं श्रुत्वा कृताञ्जलिः वेपमानः भीतभीतः कृष्णं नमस्कृत्वा सगद्गदं भूयः एव प्रणम्य आह ।

**तात्पर्यम्** – श्रीकृष्णस्य एतत् वाक्यं श्रुत्वा अर्जुनः मुकुलितकरः कम्पमानः भयसहितश्च सन् कृष्णं नमस्कृत्य गद्गदितकण्ठः पुनरपि प्रणम्य अवोचत् ।

**व्याकरणम्** – वेप्धातोः कर्तरि लटि शानजादेशे वेपमान इति शब्दः । गद्गदेन सहितः यथा भवति तथा सगद्गदम् इति क्रियाविशेषणम् – बहुव्रीहिः । भीतशब्दस्य द्वित्वं पीडायां द्योत्यायाम् भीतभीतः, भयेन पीडितः इत्यर्थः । कृतः अञ्जलिः येन सः कृताञ्जलिः – बहुव्रीहिः ।

**अर्जुन उवाच – स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥11.36॥**

**पदार्थः** – हृषीकेश = इन्द्रियाधिप ! तव प्रकीर्त्या = ते सङ्कीर्तनेन, जगत् = भुवनम्, प्रहृष्यति = सन्तुष्यति, अनुरज्यते च = त्वयि अनुरक्तं च भवति, रक्षांसि = राक्षसाः, भीतानि = सभयाः, दिशः = दिशाः, द्रवन्ति = पलायन्ते, सर्वे = सकलाः, सिद्धसङ्घाः च = सिद्धसमुदायाः अपि, नमस्यन्ति = प्रणमन्ति, इति स्थाने = इत्येतत् समुचितम् ।

**अन्वयः** – हृषीकेश ! तव प्रकीर्त्या जगत् प्रहृष्यति अनुरज्यते च । रक्षांसि भीतानि दिशः द्रवन्ति । सर्वे सिद्धसङ्घाः च नमस्यन्ति इति स्थाने ।

**तात्पर्यम्** – कृष्ण ! तव सङ्कीर्तनेन जगत् सन्तुष्यति त्वयि अनुरक्तं च भवति । राक्षसाः भीताः सन्तः दिशः पलायन्ते । सर्वे सिद्धसमुदायाः अपि प्रणमन्ति इत्येतत् सर्वं युक्तम् ।

**कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥11.37॥**

**पदार्थः** – महात्मन् = हे महात्मन् ! ब्रह्मणः अपि = हिरण्यगर्भादपि, गरीयसे = गुरुतराय, आदिकर्त्रे = तस्यापि जनकाय, ते = तुभ्यम्, कस्मात् च = केन हेतुना, न नमेरन् = न नमस्कुर्युः ? अनन्त = अवधिरहित ! देवेश = सुराधिप, जगन्निवास = लोकावास ! त्वम् = भवान्, सत् = व्यक्तम् असि, असत् = अव्यक्तमसि, तत्परं = ताभ्यामपि श्रेष्ठम्, यद् अक्षरम् = यत् ब्रह्म (तदपि = तदप्यसि) ।

**अन्वयः** – महात्मन् ! गरीयसे ब्रह्मणः अपि आदिकर्त्रे ते कस्मात् च न नमेरन् ? अनन्त देवेश जगन्निवास ! त्वं सत् असत् (च) तत्परं यत् अक्षरम् (तदपि) ।

**तात्पर्यम्** – हे महात्मन् ! त्वं ब्रह्मणोऽपि जनकः । तादृशं त्वां जनाः किं कारणं न नमस्कुर्वन्ति ? अवश्यं ते नमस्कुर्वन्ति । हे जगन्निकेतन ! त्वं यदिदं व्यक्तं तदसि । यच्च अव्यक्तं तदसि । ताभ्यां परं यदक्षरं ब्रह्म तदप्यसि ।

**माध्वमतम्** – हे महात्मन् ! आदिकारणस्य चतुर्मुखब्रह्मणोऽपि भवान् कारणम् । तस्मात् त्वां सर्वे नमेयुरेव । हे अनन्त ! देवोत्तम ! जगदाश्रय ! भवान् भावाभावात्मकप्रपञ्चात् उत्तमम् अक्षरम् ।

**व्याकरणम्** – आदिः कर्ता, आदिकर्ता, तस्मै – आदिकर्त्रे ।

**त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।**
**वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥11.38॥**

**पदार्थः** – अनन्तरूप = अगण्यरूप ! त्वम् आदिदेवः = त्वं प्रथमदेवः, पुराणः पुरुषः = प्राचीनः पुरुषः, अस्य = एतस्य, विश्वस्य = जगतः, परं निधानम् = प्रकृष्टम् अधिकरणम्, वेत्ता = ज्ञाता, असि = भवसि, वेद्यं च = ज्ञेयम् , परम् = प्रकृष्टम्, धाम च = पदं च, विश्वम् = जगत्, त्वया = भवता, ततम् = व्याप्तम् ।

**अन्वयः** – अनन्तरूप ! त्वम् आदिदेवः पुराणः पुरुषः । त्वम् अस्य विश्वस्य परं निधानं वेत्ता असि । वेद्यं च परं धाम च । विश्वं त्वया ततम् ।

**तात्पर्यम्** – अगण्यस्वरूप ! भवान् प्रथमदेवः, प्राचीनः पुरुषः । त्वम् एतस्य जगतः परमः आश्रयः । त्वं ज्ञाता असि । ज्ञेयं च असि । प्रकृष्टं पदम् अपि असि । जगत् भवता व्याप्तम् ।

**व्याकरणम्** – आदिः देवः आदिदेवः – कर्मधारयः । अनन्तं रूपं यस्य सः अनन्तरूपः, तत्सम्बुद्धौ अनन्तरूप – बहुव्रीहिः ।

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥11.39॥**

**पदार्थः** – त्वम् = भवान्, वायुः = वायुः, यमः = अन्तकः, अग्निः = हुताशनः, वरुणः = प्रचेताः, शशाङ्कः = चन्द्रः, प्रजापतिः = हिरण्यगर्भः, प्रपितामहः च = हिरण्यगर्भस्य अपि पिता, ते = तुभ्यम्,

सहस्रकृत्वः = सहस्रवारम्, नमः नमः = नमोस्तु, पुनः च भूयः अपि = पुनः पुनः, ते नमः नमः = तव नमस्कारः।

**अन्वयः** - त्वं वायुः यमः अग्निः वरुणः शशाङ्कः प्रजापतिः प्रपितामहः च। ते सहस्रकृत्वः नमः नमः अस्तु। पुनः च भूयः अपि ते नमः नमः।

**तात्पर्यम्** - त्वं वायुः यमः अग्निः वरुणः शशाङ्कः प्रजापतिः प्रपितामहः च। तुभ्यं सहस्रवारं प्रणामं करोमि। पुनः पुनः प्रणामं करोमि। नमो नमः अस्तु। पुनः च भूयः अपि तुभ्यं नमो नमः।

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥11.40॥**

**पदार्थः** - पुरस्तात् = पुरतः, अथ पृष्ठतः = पश्चात् च, ते नमः = तुभ्यं नमः, सर्व = सर्वात्मन्, सर्वतः एव = परितः एव, नमः अस्तु = नमोऽस्तु, अनन्तवीर्य = अपरिमितविक्रम ! त्वम् अमितविक्रमः = त्वम् अगणितपराक्रमः, सर्वम् = समस्तम्, समाप्नोषि = व्याप्नोषि, ततः = तस्मात्, सर्वः असि = सकलः असि।

**अन्वयः** - पुरस्तात् अथ पृष्ठतः ते नमः। सर्व ते सर्वतः एव नमः अस्तु। अनन्तवीर्य ! त्वम् अमितविक्रमः सर्वं समाप्नोषि। ततः सर्वः असि।

**तात्पर्यम्** - पुरतः पश्चात् च तुभ्यं नमोऽस्तु । सर्वात्मक ! तुभ्यं परितः नमः अस्तु। अपरिमितविक्रम ! त्वम् अगणितपराक्रमः समस्तं व्याप्नोषि। तस्मात् सकलः असि।

**व्याकरणम्** - अनन्तं वीर्यं यस्य सः अनन्तवीर्यः, तत्सम्बुद्धौ अनन्तवीर्य - बहुव्रीहिः। न मितः अमितः - नञ्तत्पुरुषः। अमितः विक्रमः यस्य सः अमितविक्रमः, तत्सम्बुद्धौ अमितविक्रम - बहुव्रीहिः।

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति।**
**अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥11.41॥**
**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।**
**एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥11.42॥**

**पदार्थः** - सखा इति = वयस्यः इति, मत्वा = विचिन्त्य, प्रसभम् = प्रसह्य, तव महिमानम् इदम् = तव माहात्म्यमिदं विश्वरूपम्, अजानता = अनवगच्छता, प्रमादात् = मनोविक्षेपेण, प्रणयेन वा अपि = प्रेम्णा वा अपि, यत् उक्तम् = यत् आलपितम्।

विहारशय्यासनभोजनेषु = सञ्चारे,शयने, उपवेशने, भक्षणे च, अवहासार्थम् = परिहासाय, एकः = मित्रैः रहितः, अथवा = यद्वा, तत्समक्षम् = मित्राणां पुरतः, असत्कृतः = परिभूतः, असि इति यत् = भवसि इति यत्, अच्युत = विष्णो ! तत् = तत् सर्वम्, अप्रमेयम् = प्रमाणागोचरम्, त्वां क्षामये = यथा त्वं क्षाम्यसि तथा करोमि।

**अन्वयः** - तव महिमानम् इदम् अजानता मया प्रमादात् प्रणयेन वा अपि यत् सखा इति मत्वा प्रसभं हे कृष्ण हे यादव हे सखे इति उक्तम्, विहारशय्यासनभोजनेषु अपहासार्थम् एकः अथवा तत्समक्षं वा यत् असत्कृतः असि अच्युत ! तत् सर्वम् अहम् अप्रमेयं त्वां क्षामये।

**तात्पर्यम्** - हे कृष्ण ! तवेदं माहात्म्यम् अनवगच्छन् अहं पूर्वम् अनवधानेन प्रणयेन वा साधारणपुरुषधिया हे

कृष्ण ! हे यादव ! हे सखे ! इत्यादिना शब्देन त्वां सम्बोधितवान् तथा विहारे शयने उपवेशने भोजने च मित्राणां पुरतः पृष्ठतो वा त्वाम् अपहासार्थम् तिरस्कृतवान् तत्सर्वं यथा त्वं मां क्षाम्यसि तथा करोमि। अर्थात् तदपराधप्रायश्चित्तार्थं शुश्रूषानमस्कारादिकं सर्वमपि इदानीं करोमि इत्यर्थः।

**व्याकरणम्** – न जानन् अजानन्, तेन, अजानता – नञ्तत्पुरुषः। विहारश्च शय्या च आसनं च भोजनं च – विहारशय्यासनभोजनानि, तेषु – द्वन्द्वः।

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥11.43॥**

**पदार्थः** – त्वम् = भवान्, चराचरस्य = स्थावरजङ्गमस्य, अस्य = एतस्य जगतः, पिता असि= जनकः असि, पूज्यः = अर्च्यः, गुरुः च = गुरुः शास्त्रोपदेष्टा, गरीयान् = गुरुतरः, अप्रतिमप्रभाव = अप्रमेयमहिमन्! लोकत्रये अपि = भुवनत्रये अपि, त्वत्समः = भवत्सदृशः, न अस्ति = न विद्यते, अभ्यधिकः = अतिशयानस्तु, अन्यः = परः, कुतः = कथम् ?

**अन्वयः** – त्वं चराचरस्य अस्य लोकस्य पिता असि पूज्यः गुरुः गरीयान् च। अप्रतिमप्रभाव ! लोकत्रये अपि त्वत्समः न अस्ति अभ्यधिकः अन्यः कुतः।

**तात्पर्यम्** – भवान् स्थावरजङ्गमस्य एतस्य लोकस्य जनकः असि। अर्च्यः आचार्यः गुरुतरः च असि। अप्रमेयमहिमन् ! भुवनत्रये अपि भवत्सदृशः न विद्यते। कथं पुनः भवतोऽत्यधिकः ?

**व्याकरणम्** – अतिशयेन गुरुः गरीयान् – अतिशये ईयसुन्। लोकानां त्रयम् लोकत्रयम्, तस्मिन् – षष्ठीतत्पुरुषः। अप्रतिमः प्रभावः यस्य सः अप्रतिमप्रभावः, तत्सम्बुद्धौ, अप्रतिमप्रभाव – बहुव्रीहिः।

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥11.44॥**

**पदार्थः** – देव = प्रभो ! तस्मात् = हेतोः, प्रणम्य = नमस्कृत्य, कायम् = शरीरम्, प्रणिधाय = नम्रं कृत्वा, ईड्यम् = स्तुत्यम्, ईशम् = प्रभुम्, त्वां प्रसादये = त्वां प्रसन्नं करोमि, पुत्रस्य = तनयस्य, पिता इव = जनकः इव, सख्युः = सुहृदः, सखा इव = सुहृत् इव, प्रियायाः = प्रेयस्याः, प्रियः = प्रियकरः इव, सोढुम् = क्षन्तुम्, अर्हसि = योग्यः असि।

**अन्वयः** – देव तस्मात् प्रणम्य कायं प्रणिधाय ईड्यम् ईशं त्वाम् अहं प्रसादये। पुत्रस्य पिता इव, सख्युः सखा इव, प्रियायाः प्रियः इव सोढुम् अर्हसि।

**तात्पर्यम्** – प्रभो ! तस्मात् नमस्कृत्य शरीरं नम्रं कृत्वा स्तुत्यं प्रभुं त्वाम् अहं प्रसादयामि। पुत्रस्य अपराधम् पिता इव, सुहृदः अपराधं सुहृत् इव, प्रेयस्याः अपराधं प्रियः इव, मम अपराधं क्षन्तुम् अर्हसि।

**व्याकरणम्** – प्र इत्युपसर्गपूर्वकात् नम्धातोः ल्यपि प्रणम्य इति शब्दः अव्ययम्। प्र नि इत्युपसर्गद्वयपूर्वकात् धाञ् धातोः ल्यपि प्रणिधाय इति शब्दः अव्ययम्। ईड्धातोः कर्मणि ण्यति ईड्य इति शब्दः – स्तुत्यः इत्यर्थः। सहधातोः तुमुन् प्रत्यये सोढुम् इति शब्दः अव्ययम्।

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥11.45॥**

**पदार्थः** – देवेश = सुराधिप ! जगन्निवास = लोकनिकेतन ! प्रसीद = प्रसन्नो भव, अदृष्टपूर्वम् =पूर्वम् अनवलोकितं रूपम्, दृष्ट्वा = विलोक्य, हृषितः = सन्तुष्टः, अस्मि = भवामि, देव = प्रभो, मे मनः = मम चित्तम्, भयेन = भीत्या, प्रव्यथितं च = व्याकुलं च, तत् = पूर्वं दृष्टं रूपम् एव, मे दर्शय = मां प्रदर्शय ।

**अन्वयः** – देवेश, जगन्निवास ! प्रसीद । अदृष्टपूर्वं दृष्ट्वा हृषितः अस्मि । देव ! मे मनः भयेन प्रव्यथितं च । तत् रूपम् एव मे दर्शय ।

**तात्पर्यम्** – हे भगवन् ! अद्य यावत् अदृष्टपूर्वं त्वदीयं रूपं दृष्ट्वा अतीव हर्षं प्राप्नोमि । देव ! भीत्या व्यथामपि अहम् अनुभवन् अस्मि । हे देवेश, लोकाधार ! तदेव रूपं मे दर्शय यत् पूर्वं किरीटादिमत्त्वेन सौम्यं रूपं प्रदर्शितम् ।

**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥11.46॥**

**पदार्थः** – विश्वमूर्ते = विश्वाकार ! अहं किरीटिनम् = अहं मुकुटधारिणम्, गदिनम् = गदाधरम्, चक्रहस्तम् = चक्रपाणिम्, त्वाम् = त्वाम्, तथा एव = तेन एव प्रकारेण, द्रष्टुम् = विलोकितुम्, इच्छामि = अभिलषामि, सहस्रबाहो = सहस्रहस्त ! चतुर्भुजेन = चतुर्हस्तेन, रूपेण एव (उपलक्षितः) = आकारेण एव विशिष्टः, भव = वर्तस्व ।

**अन्वयः** – विश्वमूर्ते अहं किरीटिनं गदिनं चक्रहस्तं त्वां तथा एव द्रष्टुम् इच्छामि । सहस्रबाहो ! चतुर्भुजेन तेन रूपेण एव (उपलक्षितः) भव ।

**तात्पर्यम्** – विश्वाकार ! किरीटधारित्वेन गदाधारित्वेन चक्रपाणित्वेन च यत् सौम्यं रूपं पूर्वं मां प्रदर्शितवान् असि तदेव रूपं सम्प्रति द्रष्टुमिच्छामि । हे सहस्रबाहो ! तेनैव रूपेण आविर्भव ।

**रामानुजीयमतम्** – चतुर्भुजेन – अस्य भाष्यं पञ्चाशत्तमश्लोकभाष्ये अस्ति । यदा कृष्णः वसुदेवस्य पुत्रः सम्पन्नः तदा तस्मिन् चतुर्भुजत्वम् एव रूपम्, यदा तु कंसात् भीतेन वसुदेवेन प्रार्थना कृता तदा आकंसवधं स्वकीयं भुजद्वयम् उपसंहृतं पश्चात् च आविष्कृतम् ।

**श्रीभगवानुवाच – मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥11.47॥**

**पदार्थः** – अर्जुन = हे अर्जुन ! प्रसन्नेन = प्रशान्तेन, आत्मयोगात् = स्वसामर्थ्यात्, तेजोमयम् =कान्तिमयम्, विश्वम् = समस्तम्, अनन्तम् = अन्तशून्यम्, आद्यम् = प्रथमम्, यत् मे रूपम् = यत् मम रूपम्, त्वदन्येन = भवदितरेण, न दृष्टपूर्वम् = पूर्वम् अनवलोकितम्, इदम् = तादृशम् एतत्, परम् = उत्कृष्टम्, रूपम् = स्वरूपम्, तव = ते, दर्शितम् = प्रदर्शितम् ।

**अन्वयः** – अर्जुन ! प्रसन्नेन मया आत्मयोगात् तेजोमयं विश्वम् अनन्तम् आद्यं यत् मे त्वदन्येन न दृष्टपूर्वम् इदं परं रूपं तव दर्शितम् ।

**तात्पर्यम्** – हे अर्जुन ! अनुग्रहबुद्धिना मया स्वसामर्थ्यात् कान्तिमयं समस्तम् अन्तशून्यं प्रथमम् एतत् उत्कृष्टं स्वरूपं ते प्रदर्शितम्। मम एतत् रूपं भवदितरेण न कदापि पूर्वं दृष्टम्।

**व्याकरणम्** – आत्मनो योगः आत्मयोगः, तस्मात् – षष्ठीतत्पुरुषः। तेजःशब्दात् प्रचुरार्थे मयट्, तेजोमयम् – तेजोबहुलमित्यर्थः।

**न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः।**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥11.48॥**

**पदार्थः** – कुरुप्रवीर = कुरुश्रेष्ठ ! नृलोके = मनुष्यलोके, वेदयज्ञाध्ययनैः = निगमयागस्वाध्यायैः, एवंरूपः अहम् = ईदृशरूपविशिष्टः अहम्, त्वदन्येन = भवदितरेण, द्रष्टुम् = वीक्षितुम्, न शक्यः = न अर्हः, दानैः न = वितरणैः न द्रष्टुं शक्यः, क्रियाभिः च न = कर्माचरणैः अपि न, उग्रैः = तीव्रैः, तपोभिः = नियमैः न।

**अन्वयः** – कुरुप्रवीर ! नृलोके वेदयज्ञाध्ययनैः एवंरूपः अहं द्रष्टुं न शक्यः दानैः न, क्रियाभिः च न, उग्रैः तपोभिः न।

**तात्पर्यम्** – कुरुश्रेष्ठ ! मृत्युलोके माम् एतादृशरूपं जनाः वेदानां कल्पसूत्रादीनां वा अध्ययनेन द्रष्टुं न शक्नुवन्ति। न दानेन, न कर्मणा नापि तीव्रेण तपसा। केवलं भवान् माम् ईदृशं दृष्टवान्।

**व्याकरणम्** – वेदाश्च यज्ञाश्च वेदयज्ञाः – द्वन्द्वः। वेदयज्ञानाम् अध्ययनानि, वेदयज्ञाध्ययनानि, तैः – षष्ठीतत्पुरुषः। एवं रूपं यस्य सः एवंरूपः – बहुव्रीहिः। नृणां लोकः नृलोकः, तस्मिन् – षष्ठीतत्पुरुषः।

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम्।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥11.49॥**

**पदार्थः** – घोरम् = भयङ्करम्, ईदृक् = ईदृशम्, मम इदम् रूपम् = मम एतद्रूपम्, दृष्ट्वा = अवलोक्य, ते = तव, व्यथा मा = भयं मास्तु, विमूढभावः च मा = मूढचित्तत्वं च मास्तु, व्यपेतभीः = अपगतभयः, प्रीतमनाः = सन्तुष्टचित्तः, मे तदेव इदम् = मम स्थितपूर्वमेव तत्, रूपम् = स्वरूपम्, पुनः प्रपश्य = भूयः ईक्षस्व।

**अन्वयः** – घोरम् ईदृक् मम रूपं दृष्ट्वा ते व्यथा मा, विमूढभावः च मा। त्वं व्यपेतभीः प्रीतमनाः मे तत् एव इदं रूपं पुनः प्रपश्य।

**तात्पर्यम्** – भयङ्करम् ईदृशं मम इदं स्वरूपम् अवलोक्य तव भयं मास्तु। त्वम् अपगतभयः सन्तुष्टचित्तः मम स्थितपूर्वं तदेव स्वरूपं पुनः पश्य।

**व्याकरणम्** – विमूढस्य भावः विमूढभावः – षष्ठीतत्पुरुषः। व्यपेता भीः यस्मात् सः व्यपेतभीः – बहुव्रीहिः। प्रीतं मनः यस्य सः प्रीतमनाः – बहुव्रीहिः।

**सञ्जय उवाच – इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥11.50॥**

**पदार्थः** – वासुदेवः = श्रीकृष्णः, इति = एवम्, अर्जुनम् = पार्थम्, तथा उक्त्वा = तेन प्रकारेण कथयित्वा, स्वकं रूपम् = स्वीयं रूपम्, भूयः दर्शयामास = पुनः दर्शितवान्, महात्मा पुनः = भगवान् तु, सौम्यवपुः भूत्वा = सौम्यशरीरः भूत्वा, भीतम् = भयग्रस्तम्, एनम् = अमुम्, आश्वासयामास च = सान्त्वयामास च।

**अन्वयः** – वासुदेवः इति अर्जुनं तथा उक्त्वा स्वकं रूपं भूयः दर्शयामास। महात्मा सौम्यवपुः पुनः भूत्वा भीतम् एनम् आश्वासयामास च।

**तात्पर्यम्** – श्रीकृष्णः एवम् अर्जुनं पूर्वोक्तप्रकारेण कथयित्वा स्वीयम् रूपं पुनः दर्शयामास। ततश्च महानुभावः सः सौम्यशरीरः सन् भयग्रस्तम् एनम् अर्जुनं सान्त्वयामास।

**व्याकरणम्** – सौम्यं वपुः यस्य सः, सौम्यवपुः – बहुव्रीहिः।

**अर्जुन उवाच** – **दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥11.51॥**

**पदार्थः** – जनार्दन = श्रीकृष्ण ! सौम्यम् = प्रसन्नम्, मानुषम् = मानवीयम्, इदम् = एतत्, तव रूपम् = ते रूपम्, दृष्ट्वा = अवलोक्य, इदानीम् = अधुना, प्रकृतिम् = पूर्वावस्थाम्, गतः = प्राप्तः, सचेताः = प्रसन्नमनाः, संवृत्तः = सञ्जातः, अस्मि = भवामि।

**अन्वयः** – जनार्दन ! सौम्यं मानुषम् इदं तव रूपं दृष्ट्वा इदानीं प्रकृतिं गतः सचेताः संवृत्तः अस्मि।

**तात्पर्यम्** – श्रीकृष्ण ! प्रसन्नं मानवीयम् एतत् तव रूपं दृष्ट्वा अधुना प्रसन्नमनाः प्रकृतिस्थः च सञ्जातः अस्मि।

**माध्वमतम्**– हे जनार्दन ! किञ्चित् मनुष्यवत् दृश्यमानं रूपं वीक्ष्य मम चेतः प्रसन्नम् अभवत्।

**श्रीभगवानुवाच** – **सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥11.52॥**

**पदार्थः** – सुदुर्दर्शम् = दुरवलोकम्, मम यत् इदम् = मे यत् एतत्, रूपम् = स्वरूपम्, दृष्टवान् असि = अवलोकितवान् असि, अस्य = एतस्य, रूपस्य = आकारस्य, देवाः अपि = सुराः अपि, नित्यम् = सततम्, दर्शनकाङ्क्षिणः = ईक्षणासक्ताः।

**अन्वयः** – सुदुर्दर्शं यत् इदं रूपं दृष्टवान् असि अस्य रूपस्य देवाः अपि नित्यं दर्शनकाङ्क्षिणः।

**तात्पर्यम्** – मम यद् रूपम् अधुना त्वं दृष्टवान् अस्ति एतत् अतीव दुरवलोकम्। मदीयम् एतत् रूपं द्रष्टुं देवाः अपि सर्वदा आकाङ्क्षिणः भवन्ति।

**व्याकरणम्** – सु दुर् इत्येतयोः उपपदयोः दृश्धातोः कर्मणि खल्। कृच्छ्रेण द्रष्टुं शक्यम् इत्यर्थः। दर्शनं काङ्क्षन्ति इति दर्शनकाङ्क्षिणः – ताच्छीलिके कर्तरि णिनिः उपपदसमासश्च।

**नाहं वेदैर्न तपसा न दानेन न चेज्यया।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥11.53॥**

**पदार्थः** – वेदैः = निगमैः, एवंविधः = एवंप्रकारः अहम्, द्रष्टुम् = विलोकितुम्, न शक्यः = न अर्हः, तपसा न = तपश्चर्यया न शक्यः, दानेन = वितरणेन न, इज्यया च = यज्ञेन अपि न, यथा = येन प्रकारेण, माम् = मा, दृष्टवान् असि = विलोकितवान् असि।

**अन्वयः** – अहम् एवंविधः वेदैः न, तपसा न, दानेन न, इज्यया च न द्रष्टुं शक्यः यथा मां दृष्टवान् असि।

**तात्पर्यम्** - अहम् एवंप्रकारः निगमैः तपसा वितरणेन यज्ञेन च द्रष्टुं न शक्यः येन प्रकारेण मां दृष्टवान् असि।
**व्याकरणम्** - एवं विधा यस्य सः एवंविधः - बहुव्रीहिः।

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥11.54॥**

**पदार्थः** - परन्तप = शत्रुतापन! अनन्यया = अनितरया, भक्त्या तु = प्रेम्णा तु, एवंविधः अहम् = एवंप्रकारः अहम्, तत्त्वेन = परमार्थतः, ज्ञातुम् = वेदितुम्, द्रष्टुं च = अवलोकितुं च, प्रवेष्टुं च = प्राप्तुं च, शक्यः = अर्हः।
**अन्वयः** - परन्तप! अर्जुन! अहम् अनन्यया भक्त्या तु एवंविधः तत्त्वेन ज्ञातुं द्रष्टुं च प्रवेष्टुं च शक्यः।
**तात्पर्यम्** - शत्रुतापन! अर्जुन! अहम् अनिरतेण प्रेम्णा तु एवंप्रकारः तत्त्वतः वेदितुं द्रष्टुं च प्राप्तुं च शक्यः नान्येन उपायेन।
**माध्वमतम्**- हे अर्जुन! अनन्यभक्त्यैव मां ज्ञातुम्, साक्षात्कर्तुं च शक्यते मम सायुज्यं प्राप्तुम्।

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥11.55॥**

**पदार्थः** - पाण्डव = अर्जुन! यः मत्कर्मकृत् = यः मदर्थकर्मकारी, मत्परमः = मन्निष्ठः, मद्भक्तः = मत्सेवकः, सङ्गवर्जितः = विषयसङ्गरहितः, सर्वभूतेषु = सर्वप्राणिषु, निर्वैरः = द्वेषरहितः, सः = सः मानवः, माम् एति = माम् उपगच्छति।
**अन्वयः** - पाण्डव! यः मत्कर्मकृत् मत्परमः मद्भक्तः सङ्गवर्जितः सर्वभूतेषु निर्वैरः सः माम् एति।
**तात्पर्यम्** - अर्जुन! यः पुरुषः मदर्थकर्मकारी मन्निष्ठः मत्सेवकः विषयसङ्गरहितः सर्वप्राणिषु द्वेषरहितः च भवति सः माम् उपगच्छति।
**व्याकरणम्** - मम कर्म मत्कर्म - षष्ठीतत्पुरुषः। मत्कर्म करोति इति मत्कर्मकृत् - कर्तरि क्विप् उपपदसमासश्च। अहमेव परमः यस्य सः मत्परमः - बहुव्रीहिः। निर्गतं वैरं यस्मात् सः निर्वैरः - बहुव्रीहिः। सङ्गेन वर्जितः सङ्गवर्जितः - तृतीयातत्पुरुषः।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः॥

श्रीमद्भगवद्गीता

अथ द्वादशोऽध्यायः

## भक्तियोगः

**अर्जुन उवाच** - **एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥12.1॥**

**पदार्थः** - ये भक्ताः = ये आराधकाः, एवम् = सर्वकर्मार्पणादिना, सततयुक्ताः = नित्यसमाहिताः, त्वां पर्युपासते = त्वां सेवन्ते, ये च अपि = ये अपि पुनः, अक्षरम् = अविनाशि, अव्यक्तम् = अतीन्द्रियम्, तेषाम् = तेषु उभयेषु, के = के, योगवित्तमाः = अतिशयेन योगविदः ।

**अन्वयः** - ये भक्ताः एवं सततयुक्ताः त्वां पर्युपासते, ये च अपि अक्षरम् अव्यक्तं तेषां के योगवित्तमाः ?

**तात्पर्यम्** - ये भक्ताः सर्वाणि कार्याणि समर्प्य नित्यसमाहिताः विश्वरूपं सर्वज्ञं त्वां सेवन्ते, ये पुनः अविनाशि अतीन्द्रियं निर्विशेषं तत्त्वं पर्युपासते तेषु उभयेषु के भक्ताः अतिशयेन योगविदः ?

**माध्वमतम्** - सततं ध्यानकर्मयोगवन्तः केचित् भक्ताः परमात्मानं सेवन्ते । केचिच्च अक्षरनामिकां चित्प्रकृतिं (श्रीतत्त्वम्) भक्त्या सेवन्ते । तेषु मोक्षोपाययज्ञेषु श्रेष्ठाः के ?

**रामानुजीयमतम्** - योगवित्तमाः - सप्तमश्लोके योगवित्तमत्वं शीघ्रत्वविषयम् इति व्यञ्जयिष्यते ।

**व्याकरणम्** - सततं युक्ताः सततयुक्ताः - सुप्समासः । न व्यक्तम् अव्यक्तम् - नञ्तत्पुरुषः । अतिशयेन योगविदः योगवित्तमाः - अतिशयार्थे तमप्प्रत्ययः ।

**श्रीभगवानुवाच** - **मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥12.2॥**

**पदार्थः** - ये = ये जनाः, मनः = चित्तम्, मयि = परमात्मनि, आवेश्य = प्रवेश्य, नित्ययुक्ताः = सततसमाहिताः, परया = प्रकृष्टया, श्रद्धया = आसक्त्या, उपेताः = समन्विताः, माम् उपासते = मां भजन्ते, ते = ते जनाः, मे = मम, युक्ततमाः = योगिश्रेष्ठाः, मताः = सम्मताः ।

**अन्वयः** - ये मनः मयि आवेश्य नित्ययुक्ताः परया श्रद्धया उपेताः माम् उपासते ते मे युक्ततमाः मताः ।

**तात्पर्यम्** - ये जनाः चित्तं मयि निवेश्य सततसमाहिताः प्रकृष्टया श्रद्धया समन्विताः मां भजन्ते ते जनाः मम योगिश्रेष्ठाः मताः ।

**व्याकरणम्** - नित्यं युक्ताः नित्ययुक्ताः - सुप्समासः । अतिशयेन युक्ताः युक्ततमाः - अतिशये तमप्प्रत्ययः ।

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥12.3॥**
**सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥12.4॥**

**पदार्थः** – ये तु = ये मानवाः तु, इन्द्रियग्रामम् = करणसमुदायम्, सन्नियम्य = उपसंहृत्य, सर्वत्र = सर्वस्मिन् काले, समबुद्धयः = समानचित्ताः, अनिर्देश्यम् = अवर्णनीयम्, अव्यक्तम् = इन्द्रियागोचरम्, सर्वत्रगम् = सर्वव्यापिनम्, अचिन्त्यम् = अप्रमेयम्, कूटस्थम् = निर्विकारम्, अचलम् = अकम्प्यम्, ध्रुवं च = नित्यं च, अक्षरम् = ब्रह्म, पर्युपासते = सेवन्ते, सर्वभूतहिते = सकलप्राणिहिते, रताः = आसक्ताः ते = ते जनाः , मामेव प्राप्नुवन्ति = मामेव लभन्ते ।

**अन्वयः** – ये तु इन्द्रियग्रामं सन्नियम्य सर्वत्र समबुद्धयः अनिर्देश्यम् अव्यक्तं सर्वत्रगम् अचिन्त्यं कूटस्थम् अचलं ध्रुवं च अक्षरम् पर्युपासते सर्वभूतहिते रताः ते माम् एव प्राप्नुवन्ति ।

**तात्पर्यम्** – ये पुरुषाः करणसमुदायं सन्नियम्य सर्वस्मिन् काले समानचित्ताः अनिर्वचनीयम् इन्द्रियाणाम् अगोचरं सर्वव्यापिनम् अप्रमेयं मायाध्यक्षम् अकम्प्यं स्थिरं च परमात्मानं सेवन्ते, सकलप्राणिहिते आसक्ताः ते जनाः माम् एव लभन्ते ।

**माध्वमतम्**– अक्षरम् (श्रीतत्त्वम्) नाशरहितम्, कदापि स्वपदात् अभ्रष्टं सत् अव्याकृताकाशे अभिमानितया वर्तते । एतादृशं श्रीतत्त्वं भगवद्रूपेषु समबुद्ध्या जितेन्द्रियाः ये उपासते ते परमात्मानम् उपयान्ति ।

**रामानुजीयमतम्** – अक्षरम् – प्रत्यगात्मस्वरूपम् । अव्यक्तम् – चक्षुरादिकरणैः अनभिव्यक्तम् । कूटस्थो अक्षर उच्यते, उत्तमः पुरुषस्तु अन्यः इति अक्षरशब्दनिर्दिष्टात् कूटस्थात् अन्यत्वं परस्य ब्रह्मणः वक्ष्यते । अतःपरं तु यया तदक्षरः अधिगम्यते इति अक्षरविद्यायां तु अक्षरशब्दनिर्दिष्टं परम् एव ब्रह्म भूतयोनित्वाद् एव ।

**व्याकरणम्** – न निर्देश्यम्, अनिर्देश्यम् – नञ्तत्पुरुषः । सर्वत्र गच्छतीति सर्वत्रगम् – सर्वत्रशब्दे उपपदे गम्धातोः कर्तरि डः । न चिन्त्यम् अचिन्त्यम् – नञ्तत्पुरुषः । न चलम् अचलम् – नञ्तत्पुरुषः । इन्द्रियाणां ग्रामः इन्द्रियग्रामः, तम् – षष्ठीतत्पुरुषः । समा बुद्धिः येषां ते समबुद्धयः – बहुव्रीहिः । सर्वाणि भूतानि, सर्वभूतानि – कर्मधारयः । सर्वभूतानां हितं सर्वभूतहितम्, तस्मिन् – षष्ठीतत्पुरुषः ।

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥12.5॥**

**पदार्थः** – अव्यक्तासक्तचेतसाम् = अव्यक्तनिविष्टचित्तानाम्, क्लेशः = दुःखम्, अधिकतरः = नितराम् अधिकम्, हि = यस्मात्, देहवद्भिः = शरीरधारिभिः, अव्यक्ता = निर्विशेषम्, गतिः = स्थानम्, दुःखम् = क्लेशेन, अवाप्यते = लभ्यते ।

**अन्वयः** – अव्यक्तासक्तचेतसां तेषां क्लेशः अधिकतरः । देहवद्भिः हि अव्यक्ता गतिः दुःखम् अवाप्यते ।

**तात्पर्यम्** – निर्विशेषे ब्रह्मणि येषां मनः प्रवृत्तम् तेषाम् अत्यन्तं क्लेशः सम्भवति । येषां देहे ममता वर्तते तेषाम् इदं निर्विशेषं ब्रह्म सर्वथा न प्राप्यते ।

**माध्वमतम्**– विष्णुविनाकृतश्रीतत्त्वे (अव्यक्ते) आसक्तानां क्लेशः अधिकतरः । तदुपासनाफलं हि दुर्लभम् ।

**व्याकरणम्** – अतिशयेन अधिकः अधिकतरः – द्वयोः अन्यस्मिन् अतिशये तरप् । अव्यक्ते आसक्तम् अव्यक्तासक्तम् – सप्तमीतत्पुरुषः । अव्यक्तासक्तं चेतः येषां ते अव्यक्तासक्तचेतसः, तेषाम् – बहुव्रीहिः । देहः एषाम् एषु वा अस्तीति देहवन्तः, तैः – मतुप् ।

**ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥12.6॥**
**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥12.7॥**

**पदार्थः** - ये तु = ये जनाः तु, सर्वाणि = सकलानि, कर्माणि = कर्माणि, मयि = वासुदेवे, संन्यस्य = समर्प्य, मत्पराः = मन्मनसः, अनन्येन = अनितरेण, योगेन = समाधिना, मामेव ध्यायन्तः = मां चिन्तयन्तः, उपासते = भजन्ते, पार्थ = अर्जुन ! अहं नचिरात् = अहं शीघ्रम्, मयि = वासुदेवे, आवेशितचेतसाम् = प्रवेशितचित्तानाम्, तेषाम् = जनानाम्, मृत्युसंसारसागरात् = मरणसंसारसमुद्रात्, समुद्धर्ता = उद्धारकः, भवामि = अस्मि ।

**अन्वयः** - ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः अनन्येन योगेन माम् एव ध्यायन्तः उपासते पार्थ ! अहं नचिरात् मयि आवेशितचेतसां तेषां मृत्युसंसारसागरात् समुद्धर्ता भवामि ।

**तात्पर्यम्** - पार्थ ! ये जनाः तु सर्वाणि आचरणानि मयि वासुदेवे समर्प्य मन्मनसः अनन्येन समाधिना एव मां चिन्तयन्तः भजन्ते, मयि प्रवेशितचित्तानां तेषां जनानां मरणादियुक्तात् संसारसमुद्रात् अहं शीघ्रम् उद्धारकः भवामि ।

**व्याकरणम्** - न विद्यते अन्यः यस्मिन् सः अनन्यः, तेन - नञ्तत्पुरुषः । संसार एव सागरः संसारसागरः - कर्मधारयः । मृत्युयुक्तः संसारसागरः मृत्युसंसारसागरः, तस्मात् - मध्यमपदलोपी तत्पुरुषः । आवेशितं चेतः यैः ते आवेशितचेतसः, तेषाम् - बहुव्रीहिः । न चिरात् नचिरात् - नञ्तत्पुरुषः । अत्र नञर्थे न इति शब्दः इति विशेषः ।

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥12.8॥**

**पदार्थः** - मयि एव = परमात्मनि मयि एव, मनः = चित्तम्, आधस्त्व = आनय, मयि बुद्धिम् = मयि मतिम्, निवेशय = योजय, अतः = ततः, ऊर्ध्वम् = परम्, मय्येव निवसिष्यसि = मय्येव वसिष्यसि, संशयः न = सन्देहः न विद्यते ।

**अन्वयः** - मयि एव मनः आधत्स्व । मयि बुद्धिं निवेशय । अतः ऊर्ध्वं मयि एव निवसिष्यसि, न संशयः ।

**तात्पर्यम्** - परमात्मनि मयि एव चित्तं स्थापय । मयि एव मतिं योजय । ततः परं मयि एव वसिष्यसि । अत्र सन्देहः न वर्तते ।

**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥12.9॥**

**पदार्थः** - धनञ्जय = अर्जुन ! अथ = यदि, चित्तम् = चेतः, स्थिरम् = निश्चलम्, समाधातुम् = स्थापयितुम्, न शक्नोषि = न प्रभवसि, ततः = तर्हि, माम् = माम्, अभ्यासयोगेन = चित्तस्य पुनः पुनः स्थापनेन, आप्तुम् = लब्धुम्, इच्छ = अभिलष ।

**अन्वयः** - धनञ्जय ! अथ मयि चित्तं स्थिरं समाधातुं न शक्नोषि ततः अभ्यासयोगेन माम् आप्तुम् इच्छ ।

**तात्पर्यम्** - धनञ्जय ! यदि मयि चेतः निश्चलं स्थापयितुं न शक्नोषि तर्हि चित्तस्य पुनः पुनः स्थापनेन मां प्राप्तुं यतस्व ।

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥12.10॥**

**पदार्थः** – अभ्यासे अपि = अभ्यासयोगे अपि, असमर्थः असि = अशक्तः भवसि, मत्कर्मपरमः = मदर्थकर्माचरणप्रधानः, भव = तिष्ठ, मदर्थम् = मामुद्दिश्य, कर्माणि = क्रियाः, कुर्वन् अपि = आचरन् अपि, सिद्धिम् अवाप्स्यसि = सिद्धिं प्राप्नोषि ।

**अन्वयः** – अभ्यासे अपि असमर्थः असि मत्कर्मपरमः भव । मदर्थं कर्माणि कुर्वन् अपि सिद्धिम् अवाप्स्यसि ।

**तात्पर्यम्** – अभ्यासयोगे अपि अशक्तः भवसि चेत् सर्वदा मामुद्दिश्य कर्माणि आचर । मदर्थं कर्माणि आचरन् अपि चित्तशुद्धिं लप्स्यसे ।

**व्याकरणम्** – मम कर्माणि मत्कर्माणि – षष्ठीतत्पुरुषः । मत्कर्माणि एव परमाणि यस्य सः मत्कर्मपरमः – बहुव्रीहिः । न समर्थः असमर्थः – नञ्तत्पुरुषः । मह्यमिदं मदर्थम् – नित्यसमासोऽयम्, चतुर्थीतत्पुरुषः ।

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥12.11॥**

**पदार्थः** – अथ = यदि, एतत् अपि = इदम् अपि, कर्तुम् = आचरितुम्, अशक्तः असि = असमर्थः भवसि, ततः = तर्हि, मद्योगम् = सर्वकर्मसमर्पणम्, आश्रितः = अवलम्बितः, यतात्मवान् = नियतचित्तः, सर्वकर्मफलत्यागम् = सकलकर्मप्रयोजनपरित्यागम्, कुरु = विधेहि ।

**अन्वयः** – अथ एतत् अपि कर्तुम् अशक्तः असि ततः मद्योगम् आश्रितः यतात्मवान् सर्वकर्मफलत्यागं कुरु ।

**तात्पर्यम्** – यदि विषयाकृष्टचित्तः उपवासव्रतानुष्ठानादीनि कर्माणि अपि आचरितुम् असमर्थः असि तर्हि नियतचित्तः सर्वेषां कर्मणां फलम् अविचारयन् मह्यं समर्पय ।

**व्याकरणम्** – सर्वाणि कर्माणि सर्वकर्माणि – कर्मधारयः । सर्वकर्मणां फलं सर्वकर्मफलम् – षष्ठीतत्पुरुषः । सर्वकर्मफलस्य त्यागः, सर्वकर्मफलत्यागः, तम् – षष्ठीतत्पुरुषः ।

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद् ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥12.12॥**

**पदार्थः** – अभ्यासात् हि = अभ्यासयोगात्, ज्ञानम् = विवेकः, श्रेयः = प्रशस्ततरः, ज्ञानात् =विवेकात्, ध्यानम् = चिन्तनम्, विशिष्यते = अतिशेते, ध्यानात् = चिन्तनात् अपि, कर्मफलत्यागः = कर्मप्रयोजन-परित्यागः, त्यागात् अनन्तरम् = अनुपदम्, शान्तिः = संसारस्य उपशमः ।

**अन्वयः**– अभ्यासात् हि ज्ञानं श्रेयः, ज्ञानात् ध्यानं विशिष्यते । ध्यानात् कर्मफलत्यागः, त्यागात् अनन्तरं शान्तिः ।

**तात्पर्यम्** – अभ्यासयोगात् विवेकः प्रशस्ततरः । विवेकात् चिन्तनं विशिष्यते । चिन्तनात् अपि कर्मप्रयोजन-परित्यागः विशिष्यते । त्यागात् बन्धनस्य संसारस्य नाशः भवति ।

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥12.13॥**
**सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥12.14॥**

**पदार्थः** - यः सर्वभूतानाम् = यः सर्वजन्तूनाम्, अद्वेष्टा = अवैरी, मैत्रः = स्निग्धः, करुणः एव च = दयालुः च, निर्ममः = ममताशून्यः, निरहङ्कारः = अहङ्कारवर्जितः, समदुःखसुखः = क्लेशसन्तोषयोः समानः, क्षमी = क्षमावान्, सततम् = सदा, सन्तुष्टः = सन्तृप्तः, योगी = समाहितचित्तः, यतात्मा = नियतमनस्कः, दृढनिश्चयः = निश्चलबुद्धिः, मयि अर्पितमनोबुद्धिः = मयि निवेशितचित्तः, मद्भक्तः = भगवद्भक्तः च, यः = यः मानवः, सः = सः पुरुषः, मे प्रियः = मम इष्टः ।

**अन्वयः** - यः सर्वभूतानाम् अद्वेष्टा मैत्रः करुणः एव च निर्ममः निरहङ्कारः समदुःखसुखः क्षमी सततं सन्तुष्टः योगी दृढनिश्चयः मयि अर्पितमनोबुद्धिः मद्भक्तः सः मे प्रियः ।

**तात्पर्यम्** - यः सर्वजन्तुषु अवैरी, स्निग्धः, दयालुः, ममताशून्यः, अहङ्कारवर्जितः, क्लेशसन्तोषयोः समानः, तितिक्षुः, सदा सन्तृप्तः, समाहितचित्तः, नियतमनस्कः, निश्चलबुद्धिः, मयि निवेशितचित्तवृत्तिः, भक्तः सः पुरुषः मम इष्टः । (सङ्कल्पात्मकं मनः, अध्यवसायात्मिका बुद्धिः)

**व्याकरणम्** - निर्गतः अहङ्कारः यस्मात् सः निरहङ्कारः - पञ्चमीतत्पुरुषः । निर्गतः ममः यस्मात् सः निर्ममः - पञ्चमीतत्पुरुषः । दुःखं च सुखं च, दुःखसुखे - द्वन्द्वः । समे दुःखसुखे यस्य सः, समदुःखसुखः - बहुव्रीहिः । दृढः निश्चयः यस्य सः दृढनिश्चयः - बहुव्रीहिः । मनः च बुद्धिश्च मनोबुद्धी - द्वन्द्वः । अर्पिते मनोबुद्धी येन सः अर्पितमनोबुद्धिः - बहुव्रीहिः । मम भक्तः मद्भक्तः - षष्ठीतत्पुरुषः ।

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥12.15॥**

**पदार्थः** - यस्मात् = यस्मात् पुरुषात्, लोकः = जनः, न उद्विजते = उद्वेगं न गच्छति, यः च =यः पुरुषः अपि, लोकात् = भुवनात्, न उद्विजते = उद्वेगं न प्राप्नोति, हर्षामर्षभयोद्वेगैः = सन्तोषासूयात्रासक्षोभैः, मुक्तः = रहितः, सः च = सः पुरुषः, मे प्रियः = मम अभिमतः ।

**अन्वयः** - यस्मात् लोकः न उद्विजते, यः च लोकात् न उद्विजते, यः हर्षामर्षभयोद्वेगैः मुक्तः सः च मे प्रियः ।

**तात्पर्यम्** - यस्मात् पुरुषात् लोकः उद्वेगं न गच्छति, यः च पुरुषः लोकात् न उद्वेगं प्राप्नोति, यश्च सन्तोषासूया-त्रासक्षोभैः रहितः सः पुरुषः मम प्रियः ।

**व्याकरणम्** - हर्षश्च अमर्षश्च भयं च उद्वेगश्च हर्षामर्षभयोद्वेगाः, तैः - द्वन्द्वः ।

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥12.16॥**

**पदार्थः** - यः = यः पुरुषः, अनपेक्षः = निःस्पृहः, शुचिः = शुद्धः, दक्षः = चतुरः, उदासीनः = तटस्थः, गतव्यथः = अपगतभयः, सर्वारम्भपरित्यागी = सकामकर्मानुष्ठानत्यागी, मद्भक्तः = भगवद्भक्तः, (सः) मे प्रियः = सः मम अभीष्टः ।

**अन्वयः** - यः अनपेक्षः शुचिः दक्षः उदासीनः गतव्यथः सर्वारम्भपरित्यागी मद्भक्तः सः मे प्रियः ।

**तात्पर्यम्** - यः पुरुषः निःस्पृहः शुद्धः चतुरः तटस्थः अपगतभयः सर्वेषां कर्मणां फलं त्यजन् भगवद्भक्तः च वर्तते सः मम अभीष्टः ।

**माध्वमतम्** – अनपेक्षः = भगवत्प्रीतेः अन्यत्र क्वाप्यपेक्षाहीनः, शुचिः = बाह्यान्तरशुद्धिमान्, दक्षः = भगवत्कर्मकरणे पटुः, उदासीनः = कर्तव्योपकारयोः उपेक्षकः, गतव्यथः = परकृतापकारैः अप्राप्तमनःक्लेशः, सर्वारम्भपरित्यागी = सर्वारम्भफलत्यागी । ईदृशः भक्तः मम प्रियः ।

**व्याकरणम्** – न विद्यते अपेक्षा यस्य सः अनपेक्षः – बहुव्रीहिः । गता व्यथा यस्मात् सः गतव्यथः – बहुव्रीहिः । सर्वे आरम्भाः सर्वारम्भाः – कर्मधारयः । सर्वारम्भाणां परित्यागी सर्वारम्भपरित्यागी– षष्ठीतत्पुरुषः ।

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥12.17॥**

**पदार्थः** – यः न हृष्यति = यः इष्टप्राप्तौ न मोदते, न द्वेष्टि = अनिष्टप्राप्तौ द्वेषं न करोति, न शोचति = प्रियवियोगे दुःखं न अनुभवति, न काङ्क्षति = अप्राप्तं न अभिलषति, शुभाशुभपरित्यागी = इष्टानिष्टकर्मत्यागी, भक्तिमान् = भक्तियुक्तः, सः मे प्रियः = सः मम अभिलषितः ।

**अन्वयः** – यः न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति शुभाशुभपरित्यागी भक्तिमान् सः च मे प्रियः ।

**तात्पर्यम्** – यः इष्टप्राप्तौ न मोदते, अनिष्टप्राप्तौ द्वेषं न करोति, प्रियवियोगे दुःखं न अनुभवति, अप्राप्तं न अभिलषति, इष्टानिष्टकर्मत्यागी, भक्तियुक्तः सः मम प्रियः ।

**व्याकरणम्** – शुभं च अशुभं च शुभाशुभे – द्वन्द्वः । शुभाशुभयोः परित्यागी, शुभाशुभपरित्यागी – षष्ठीतत्पुरुषः । भक्तिः अस्य अस्मिन् वा अस्ति इति भक्तिमान् – मतुप् ।

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥12.18॥**
**तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥12.19॥**

**पदार्थः** – शत्रौ च = अरौ च, मित्रे च = वयस्ये च, समः = समानः, तथा = एवम्, मानापमानयोः = पूजातिरस्कारयोः, शीतोष्णसुखदुःखेषु = द्वन्द्वेषु, समः = समानः, सङ्गविवर्जितः = विषयसङ्गरहितः, तुल्यनिन्दास्तुतिः = दूषणश्लाघनयोः समानः, मौनी = नियतवाक्, येन केनचित् = येन केनापि लाभेन, सन्तुष्टः = सन्तृप्तः, अनिकेतः = अनिवासः, स्थिरमतिः = निश्चलमनस्कः, भक्तिमान् नरः = भक्तः पुरुषः, मे प्रियः = मम इष्टः ।

**अन्वयः** – शत्रौ च मित्रे च समः तथा मानापमानयोः शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः तुल्यनिन्दास्तुतिः मौनी येन केनचित् सन्तुष्टः अनिकेतः स्थिरमतिः भक्तिमान् नरः मे प्रियः ।

**तात्पर्यम्** – अरौ च मित्रे च समानः तथा पूजातिरस्कारयोः शीतोष्णयोः सुखदुःखयोश्च समानः, विषयासक्तिरहितः, दूषणश्लाघनयोः समानः, नियतवाक्, येन केनापि फलेन सन्तृप्तः, अनिवासः, निश्चलमनस्कः भक्तः मम इष्टः ।

**व्याकरणम्** – मानश्च अपमानश्च मानापमानौ, तयोः – द्वन्द्वः । निन्दा च स्तुतिश्च निन्दास्तुती – द्वन्द्वः । तुल्ये निन्दास्तुती यस्य सः तुल्यनिन्दास्तुतिः – बहुव्रीहिः । सङ्गेन विवर्जितः सङ्गविवर्गितः – तृतीयातत्पुरुषः ।

न विद्यते निकेतः यस्य सः अनिकेतः – बहुव्रीहिः। स्थिरा मतिः यस्य सः स्थिरमतिः – बहुव्रीहिः।

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥12.20॥**

**पदार्थः** – ये तु = ये पुनः, भक्ताः = भक्तिमन्तः, श्रद्दधानाः = विश्वासयुक्ताः, मत्परमाः = मन्निष्ठाः, यथोक्तम् = यथाप्रतिपादितम्, इदम् = एतत्, धर्म्यामृतम् = सुधासदृशं धर्मयुक्तम्, पर्युपासते = सेवन्ते, ते = ते पुरुषाः, मे = मम, अतीव = अत्यन्तम्, प्रियाः = अभीष्टाः।

**अन्वयः** – ये तु भक्ताः श्रद्दधानाः मत्परमाः यथोक्तम् इदं धर्म्यामृतं पर्युपासते ते मे अतीव प्रियाः।

**तात्पर्यम्** – ये तु भक्तिमन्तः, विश्वासयुक्ताः, मन्निष्ठाः, यथाप्रतिपादितं धर्मयुक्तं सुधासमानम् इदं च आचरन्ति ते पुरुषाः मम अत्यन्तम् अभीष्टाः।

**माध्वमतम्**– आस्तिक्यबुद्धयः ये भक्ताः प्रपञ्चधारकस्य भगवतः उपासनासाधनानि मोक्षसाधनानि च पूर्वोक्तगुणान् उपासते ते तस्य अत्यन्तं प्रीतिपात्राणि भवन्ति।

**रामानुजीयमतम्** – भक्ताः इत्यनेन आत्मनिष्ठात् पुंसः भक्तिनिष्ठस्यैव श्रैष्ठ्यं प्रतिपादयन् यथोपक्रमं प्रतिपादयति। धर्म्यामृतम् – धर्म्यं च अमृतं च। प्रापकोऽयं भक्तियोगः प्राप्यसमः इति यावत्।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः॥

श्रीमद्भगवद्गीता

अथ त्रयोदशोऽध्यायः

## क्षेत्रक्षेत्रज्ञविभागयोगः

**श्रीभगवानुवाच – इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥13.1॥**

**पदार्थः** – अभिधीयते = कथ्यते, वेत्ति = जानाति, क्षेत्रज्ञः = क्षेत्रवित्, तद्विदः = क्षेत्रक्षेत्रज्ञवेत्तारः, प्राहुः = वदन्ति।

**अन्वयः** – कौन्तेय ! इदं शरीरं क्षेत्रम् इति अभिधीयते । यः एतत् वेत्ति तं क्षेत्रज्ञः इति तद्विदः आहुः ।

**तात्पर्यम्** – अर्जुन ! एतत् वपुः कर्मफलनिष्पत्तेः आधारत्वात् क्षेत्रम् इति कथ्यते । यः पुरुषः इदं वेत्ति तं पुरुषं क्षेत्रवित् इति क्षेत्रक्षेत्रज्ञयोः वेत्तारः वदन्ति ।

**माध्वमतम्**– महदहङ्कारादिकम् इन्द्रियरूपेण परिणम्य देहवियोगादिना दुःखं जनयति । तस्मात् तत् शरीरमित्युच्यते । तादृशशरीरे प्रेरकत्वेन भगवतः विद्यमानत्वात् तत् क्षेत्रमित्यभिधीयते इति क्षेत्रविदो विदुः।

**व्याकरणम्** – क्षेत्रं जानाति इति क्षेत्रज्ञः – कर्तरि कः उपपदसमासश्च । तत् विदन्ति इति तद्विदः – कर्तरि क्विप् उपपदसमासश्च ।

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥13.2॥**

**पदार्थः** – सर्वक्षेत्रेषु = सकलशरीरेषु, क्षेत्रज्ञम् = क्षेत्रविदम्, विद्धि = जानीहि, क्षेत्रक्षेत्रज्ञयोः = शरीरतद्विदोः, ज्ञानम् = बोधः, ज्ञानम् = साधुः बोधः इति, मम मतम् = मम अभिमतम् ।

**अन्वयः** – भारत ! सर्वक्षेत्रेषु क्षेत्रज्ञं च अपि मां विद्धि यत् क्षेत्रक्षेत्रज्ञयोः ज्ञानं तत् ज्ञानम् (इति) मम मतम् ।

**तात्पर्यम्** – भारत ! सकलशरीरेषु क्षेत्रविदम् अपि मां जानीहि । शरीरतद्विदोः बोधः एव बोधः इति मम अभिमतम् ।

**माध्वमतम्**– क्षेत्रवाच्यानां महत्तत्त्वादीनां सम्यग्ज्ञानसद्भावात् भगवानेव क्षेत्रज्ञः इत्युच्यते । क्षेत्र–क्षेत्रज्ञयोः यथार्थज्ञानमेव मोक्षसाधनमिति मम आशयः ।

**रामानुजीयमतम्** – क्षेत्रज्ञञ्चापि मां विद्धि – मां मदात्मकम्, अपि शब्दात् क्षेत्रमपि मां विद्धि इत्यर्थः ।

**व्याकरणम्** – सर्वाणि क्षेत्राणि, सर्वक्षेत्राणि, तेषु – कर्मधारयः । क्षेत्रं च क्षेत्रज्ञश्च क्षेत्रक्षेत्रज्ञौ, तयोः – द्वन्द्वः ।

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥13.3॥**

**पदार्थः** – तत् क्षेत्रम् = तत् शरीरम्, यत् = यत्स्वरूपम्, यादृक् च = यद्धर्मविशिष्टं च, यद्विकारि = यैः विकारैः

---

**वि.सू.** – अस्मिन् अध्याये इतः अग्रिमेषु अध्यायेषु च अप्रसिद्धपदानामेव अर्थः दर्शितः अस्ति । (प्रत्येकं पदस्य अर्थः न दर्शितः, पूर्ववत् । अन्येषां तु पदानाम् अर्थः स्वयमेव अवगन्तुं योग्यः अस्ति ।

युक्तम्, यतश्च = यादृशात् हेतोः जायते, सः च = सः क्षेत्रज्ञः, यः = यत्स्वरूपः, यत्प्रभावः = यादृश-प्रभावविशिष्टः ।

**अन्वयः** – तत् क्षेत्रं यत् च यादृक् च यद्विकारि यतः च । सः च यः यत्प्रभावः च तत् समासेन मे शृणु ।

**तात्पर्यम्** – क्षेत्रस्य किं स्वरूपम् ? कीदृशाश्च धर्माः तत्र सन्ति ? विकारकारणीभूताः अंशाः के ? कस्मात् इदं जायते तथा अस्य क्षेत्रज्ञस्य किं स्वरूपम् ? कीदृशाश्च धर्माः तस्मिन् सन्ति ? तदिदं सर्वमपि संक्षेपेण कथयामि, शृणु ।

**व्याकरणम्** – यैः विकारि यद्विकारि – तृतीयातत्पुरुषः । यः प्रभावः यस्य सः यत्प्रभावः – बहुव्रीहिः ।

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ।।13.4।।**

**पदार्थः** – (तदिदं) विविधैः = नानाविधैः, छन्दोभिः = वेदैः, ऋषिभिः = वसिष्ठादिभिः मुनिभिः, हेतुमद्भिः = युक्तियुक्तैः, ब्रह्मसूत्रपदैश्च = उपनिषद्वाक्यैश्च, बहुधा = ध्यानधारणादिविषयत्वेन, पृथक् = पार्थक्येन, गीतम् = प्रतिपादितम् ।

**अन्वयः** – (तदिदम्) विविधैः छन्दोभिः ऋषिभिः हेतुमद्भिः विनिश्चितैः ब्रह्मसूत्रपदैश्च बहुधा पृथक् गीतम् ।

**तात्पर्यम्** – सोऽयं क्षेत्रसम्बन्धी क्षेत्रज्ञसम्बन्धी च विषयः यद्यपि वसिष्ठादिभिः ऋषिभिः, नित्यनैमित्तिककाम्यकर्म-प्रतिपादकैः वेदैः, युक्त्युपेतैः उपक्रमोपसंहारपर्यालोचनेन एकार्थकत्वेन निर्णीतैः ब्रह्मसूत्रैः, उपनिषद्वाक्यैः च ध्यानधारणादिविषयत्वेन पृथक् पृथक् एव निरूपितः, तथापि संक्षेपेण कथयामि ।

**रामानुजीयमतम्** – ब्रह्मसूत्रपदैः – ब्रह्मप्रतिपादकसूत्राख्यैः पदैः शारीरकसूत्रैः ।

**व्याकरणम्** – पद्यते (ज्ञायते ब्रह्म) एभिः इति पदानि उपनिषद्वाक्यानि – कर्मणि अच् । सूत्राणि च पदानि च सूत्रपदानि – द्वन्द्वः । ब्रह्मणः सूत्रपदानि ब्रह्मसूत्रपदानि, तैः – षष्ठीतत्पुरुषः, ब्रह्मप्रतिपादकैः सूत्रैः उपनिषद्वाक्यैश्च इत्यर्थः । हेतुः एषामस्ति इति हेतुमन्ति, तैः हेतुमद्भिः – मतुप् ।

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ।।13.5।।**
**इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ।।13.6।।**

**पदार्थः** – महाभूतानि = पृथिव्यादीनि पञ्च, अहङ्कारः = अहंभावः/अभिमानः, बुद्धिः = महत्तत्वम्, अव्यक्तम् = मूलप्रकृतिः, इन्द्रियाणि = नेत्रादीनि, इन्द्रियगोचराः = इन्द्रियविषयाः शब्दादयः, सङ्घातः = शरीरम्, चेतना = ज्ञानम्, सविकारम् = विकारसहितम्, उदाहृतम् = उक्तम् ।

**अन्वयः** – महाभूतानि अहङ्कारः बुद्धिः अव्यक्तम् एव च दश एकं च इन्द्रियाणि पञ्च इन्द्रियगोचराः च इच्छा द्वेषः सुखं दुःखं सङ्घातः चेतना धृतिः च एतत् सविकारं समासेन क्षेत्रम् उदाहृतम् ।

**तात्पर्यम्** – पृथिवी, जलम्, तेजः, वायुः आकाशः चेति पञ्चभूतानि अहङ्कारः, महन्नामिका बुद्धिः, प्रकृतिः, श्रोत्रं त्वक् चक्षुः रसना घ्राणं चेति पञ्च ज्ञानेन्द्रियाणि, वाक् पाणिः पादः पायुः उपस्थश्चेति पञ्च

कर्मेन्द्रियाणि, शब्दः स्पर्शः रूपं रसः गन्धश्चेति पञ्च तन्मात्राः, इच्छादयः च सप्त – एतेषां समूहः विकारविशिष्टो भवति । तत् क्षेत्रमिति कथ्यते ।

**माध्वमतम्**– पञ्च महाभूतानि, महदहङ्कारतत्त्वम्, बुद्धिरूपः अन्तःकरणविशेषः, त्रिगुणात्मकं प्रधानम्, एकादशेन्द्रियाणि, तद्विषयाश्च संक्षेपतः क्षेत्रपदवाच्याः । इच्छा, द्वेषः, सुखं, दुःखं, शरीरं, चित्तव्याप्तिः, धैर्यञ्चेति पूर्वोक्तक्षेत्रविकाराः समासेन उच्यन्ते ।

**व्याकरणम्** – इन्द्रियाणां गोचराः इन्द्रियगोचराः – षष्ठीतत्पुरुषः । विकारेण सहितं सविकारम् – बहुव्रीहिः ।

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥13.7॥**
**इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥13.8॥**
**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥13.9॥**
**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥13.10॥**
**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥13.11॥**

**पदार्थः** – अमानित्वम् = आत्मश्लाघाराहित्यम्, अदम्भित्वम् = दम्भाभावः, अहिंसा = अपीडनम्, क्षान्तिः = सहनम्, आर्जवम् = अवक्रत्वम्, आचार्योपासनम् = गुरुसेवा ।

इन्द्रियार्थेषु = इन्द्रियविषयेषु, वैराग्यम् = अप्रीतिः, अनहङ्कारः = अभिमानशून्यत्वम्, असक्तिः = अनासक्तिः, जन्ममृत्युजराव्याधिदोषानुदर्शनम् = जननमरणवृद्धत्वरोगदुःखेषु दोषावलोकनम् । पुत्रदारगृहादिषु = तनयभार्यानिवासादिषु, अनभिष्वङ्गः = अनभिनिवेशः, इष्टानिष्टोपपत्तिषु = अभीष्ट-द्विष्टवस्तुप्राप्तिषु, नित्यम् = सदा, समचित्तत्वम् = समानमनस्कत्वम् ।
मयि = परमात्मनि, अनन्ययोगेन = एकाग्रचित्तेन, अव्यभिचारिणी = अनपायिनी, जनसंसदि = जनसमवाये, विविक्तदेशसेवित्वम् = एकान्तदेशसेवनम्, अरतिः = अप्रीतिः ।
अध्यात्मज्ञाननित्यत्वम् = सर्वदा आत्मविषयकं चिन्तनम्, ज्ञानम् = ज्ञानसाधनम्, तत्त्वज्ञानार्थदर्शनम् = सत्यज्ञानफलविचारणम्, प्रोक्तम् = कथितम्, अन्यथा = विपर्ययेण ।

**अन्वयः**– अमानित्वम्, अदम्भित्वम् , अहिंसा, क्षान्तिः, आर्जवम् , आचार्योपासनम्, शौचम्, स्थैर्यम्, आत्मविनिग्रहः, इन्द्रियार्थेषु वैराग्यम्, अनहङ्कार एव च,जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्, असक्तिः, पुत्रदारगृहादिषु अनभिष्वङ्गः, इष्टानिष्टोपपत्तिषु नित्यं समचित्तत्वं च, मयि च अनन्ययोगेन अव्यभिचारिणी भक्तिः च, विविक्तदेशसेवित्वम्, जनसंसदि अरतिः, अध्यात्मज्ञाननित्यत्वम्, तत्त्वज्ञानार्थदर्शनम् एतत् ज्ञानम् इति प्रोक्तम् । अतः अन्यथा यत् तत् अज्ञानम् ।

**तात्पर्यम्** – आत्मश्लाघाराहित्यम्, दम्भाभावः, अपीडनम्, क्षमा, अवक्रत्वम्, गुरुशुश्रूषा, शुद्धिः, धृतिः, शरीरेन्द्रियनिग्रहः, इन्द्रियविषयेषु अप्रीतिः, अहङ्कारशून्यत्वम्, जननमरणजरारोगदुःखेषु दोषावलोकनम्, अनासक्तिः, तनयभार्यानिवासादिषु अनभिनिवेशः, अभीष्टानिष्टवस्तुप्राप्तिषु सदा समानमनस्कत्वम्, परमात्मनि एकाग्रचित्तेन अनपायिनी भक्तिः, एकान्तप्रदेशसेवा, जनसमवाये अप्रीतिः, सर्वदा आत्मविषयस्य अनुसन्धानम्, तत्त्वज्ञानफलस्य मोक्षस्य प्राप्यत्वेन विचारणम् – एतत् ज्ञानसाधनम् इति कथितम् । अस्मात् अन्यत् यदस्ति तद् ज्ञानसाधनं न इति प्रोक्तम् ।

**माध्वमतम्**– आत्मनो श्लाघनरहितत्वम्, आत्माल्पत्वज्ञानेन महत्त्वप्रदर्शनाभावः, सहिष्णुत्वम्, सन्मार्गे मनो-वाक्कायकर्मणाम् अवैपरीत्यम्, ज्ञानिनां सेवा, बाह्यान्तरशुद्धिः, भयादिना स्वधर्मादचलनम्, विशेषतः मनसः नियमनञ्च ज्ञानसाधनानि इति कथ्यन्ते । विषयपदार्थेषु रागाभावः, आत्मनि अविद्यमानेषु गुणेषु अभिमानमोहाभावः, जन्मादिषु दुःखदोषयोः अनुक्षणम् अनुसन्धानं ज्ञानसाधनमित्युच्यते । परमात्मनः तत्त्वज्ञानसम्पादने नित्यप्रवृत्तिः, तदर्थं शास्त्राद्यर्थपर्यालोचनञ्चेति ज्ञानोपायः इत्युच्यते । एतद्विरुद्धाः अर्थाः अज्ञानसाधनानि भवन्ति ।

**रामानुजीयमतम्** – अध्यात्मज्ञानम् = आत्मनि ज्ञानम् ।

**व्याकरणम्** – मानः अस्य अस्मिन् वा अस्तीति मानी – मतुबर्थे इनिः । न मानी अमानी – नञ्तत्पुरुषः – तस्य भावः अमानित्वम् – भावार्थे त्वप्रत्ययः । दम्भः अस्य अस्मिन् वा अस्तीति दम्भी – मतुबर्थे इनिः । न दम्भी अदम्भी – नञ्तत्पुरुषः – तस्य भावः अदम्भित्वम् – भावार्थे त्वप्रत्ययः । न हिंसा अहिंसा – नञ्तत्पुरुषः । आचार्यस्य उपासनम् आचार्योपासनाम् – षष्ठीतत्पुरुषः । आत्मनः विनिग्रहः आत्मविनिग्रहः – षष्ठीतत्पुरुषः।

इन्द्रियाणाम् अर्थाः इन्द्रियार्थाः, तेषु, इन्द्रियार्थेषु – षष्ठीतत्पुरुषः । न अहङ्कारः अनहङ्कारः – नञ्तत्पुरुषः । जन्म च मृत्युश्च जरा च व्याधिश्च दुःखञ्च जन्ममृत्युजराव्याधिदुःखानि – द्वन्द्वः । जन्ममृत्युजराव्याधिदुःखेषु दोषः जन्ममृत्युजराव्याधिदुःखदोषः – सप्तमीतत्पुरुषः । जन्ममृत्युजराव्याधिदुःखदोषस्य अनुदर्शनम् जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् – षष्ठीतत्पुरुषः ।

न सक्तिः असक्तिः – नञ्तत्पुरुषः । न अभिष्वङ्गः अनभिष्वङ्गः – नञ्तत्पुरुषः । पुत्राश्च दाराश्च गृहं च पुत्रदारगृहाणि – द्वन्द्वः । पुत्रदारगृहाणि आदिः येषां ते पुत्रदारगृहादयः, तेषु – बहुव्रीहिः । समं चित्तं येषां ते समचित्ताः – बहुव्रीहिः । तेषां भावः समचित्तत्वम् – भावार्थे त्वप्रत्ययः । इष्टं च अनिष्टं च इष्टानिष्टे – द्वन्द्वः । इष्टानिष्टयोः उपपत्तयः इष्टानिष्टोपपत्तयः, तेषु – षष्ठीतत्पुरुषः ।

अन्यस्मिन् योगः अन्ययोगः – सप्तमीतत्पुरुषः । न अन्ययोगः अनन्ययोगः, तेन – नञ्तत्पुरुषः । व्यभिचारः अस्याः अस्यां वा अस्तीति व्यभिचारिणी – मतुबर्थे इनिः । न व्यभिचारिणी अव्यभिचारिणी – नञ्तत्पुरुषः। विविक्तः देशः, विविक्तदेशः – कर्मधारयः । विविक्तदेशं सेवते तच्छीलः इति विविक्तदेशसेवी – तच्छील-कर्तरि णिनिः उपपदसमासश्च । तस्य भावः विविक्तदेशसेवित्वम् – भावार्थे त्वप्रत्ययः । न रतिः अरतिः – नञ्तत्पुरुषः । जनानां संसत् जनसंसत्, तस्याम् – षष्ठीतत्पुरुषः ।

आत्मनि इति अध्यात्मम् - अव्ययीभावः । अध्यात्मं ज्ञानम् अध्यात्मज्ञानम् - सप्तमीतत्पुरुषः । अध्यात्मज्ञाने नित्यत्वम्, अध्यात्मज्ञाननित्यत्वम् - सप्तमीतत्पुरुषः ।

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥13.12॥**

**पदार्थः** - ज्ञेयम् = ज्ञातव्यम्, प्रवक्ष्यामि = विस्तरशः कथयामि, ज्ञात्वा = अवबुध्य, अमृतम् = मोक्षम्, अश्नुते = अनुभवति, अनादिमत् = आदिरहितम्, परम् = उत्तमम्, न सत् = न सत् भवति, तत् = ब्रह्म, न असत् = असत् अपि न भवति ।

**अन्वयः** - यत् ज्ञेयं तत् प्रवक्ष्यामि यत् ज्ञात्वा अमृतम् अश्नुते । अनादिमत् परं ब्रह्म न सत् । तत् न असत् उच्यते ।

**तात्पर्यम्** - यत् ज्ञातव्यं तत् विस्तरशः कथयामि यत् ज्ञात्वा मोक्षम् अनुभवति । परं ब्रह्म आदिरहितम् । तदिदं ब्रह्म विधिमुखेन प्रमाणविषयो न भवति, निषेधमुखेनापि न प्रमाणविषयो भवति ।

**माध्वमतम्**- यत् ज्ञात्वा मोहं न लभसे तत् ज्ञेयं प्रवक्ष्यामि । व्यक्ताव्यक्तविलक्षणम्, प्राकृतदेहेन्द्रियरहितं ब्रह्म ज्ञेयम् । तच्च अहमेव ।

**रामानुजीयमतम्** - ब्रह्म = आत्मन्यपि ब्रह्मशब्दः प्रयुज्यते, ब्रह्मणो हि प्रतिष्ठाहम् इत्यादि वक्ष्यते ।

**व्याकरणम्** - न आदिः अनादिः - नञ्तत्पुरुषः । अनादिः अस्य अस्मिन् वा अस्तीति अनादिमत् - मतुप् ।

**सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥13.13॥**

**पदार्थः** - सर्वतः पाणिपादम् = सर्वतोहस्तचरणम्, सर्वतः श्रुतिमत् = सर्वत्र श्रोत्रेण युक्तम्, सर्वतोऽक्षि-शिरोमुखम् = सर्वत्र नेत्रशीर्षवदनैः युक्तम्, तत् = ब्रह्म, आवृत्य = व्याप्य, तिष्ठति = वसति ।

**अन्वयः** - सर्वतः पाणिपादं सर्वतः अक्षिशिरोमुखम्, सर्वतः श्रुतिमत् तत् लोके सर्वम् आवृत्य तिष्ठति ।

**तात्पर्यम्** - तस्य ब्रह्मणः सर्वत्र हस्ताः पादाः नेत्राणि शिरांसि मुखानि श्रोत्राणि च सन्ति । तत् सकलं जगत् व्याप्य वर्तते ।

**माध्वमतम्**- तच्च ज्ञेयं लोके सर्वत्र व्याप्तम् । अपि च पाणिपादादिशक्तिमन्तः सर्वेऽपि अवयवाः स्वेतरावयव-शक्तिमन्तः वर्तन्ते । तस्मात् चक्षुषा श्रावणकार्यम्, श्रवणेन च चाक्षुषकार्यमुत्पद्यते । अतः तत् व्यक्ताव्यक्तविलक्षणमिति ज्ञेयम् ।

**व्याकरणम्** - पाणयश्च पादाश्च एतेषां समाहारः पाणिपादम् - द्वन्द्वः । सर्वतः पाणिपादं यस्य तत् सर्वतःपाणिपादम् - बहुव्रीहिः । अक्षीणि च शिरांसि च मुखानि च एतेषां समाहारः अक्षिशिरोमुखम् - द्वन्द्वः । सर्वतः अक्षिशिरोमुखं यस्य तत् सर्वतोऽक्षिशिरोमुखम् - बहुव्रीहिः । श्रुतयः अस्य अस्मिन् वा सन्तीति श्रुतिमत् - मतुप् ।

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥13.14॥**
**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥13.15॥**

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥13.16॥
ज्योतिषामपि तज्ज्योतिरतमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥13.17॥

**पदार्थः** - सर्वेन्द्रियगुणाभासम् = इन्द्रियविषयप्रकाशकम्, असक्तम् = सङ्गरहितम्, सर्वेन्द्रियविवर्जितम् = सकलेन्द्रियरहितम्, सर्वभृत् = सकलभृत्, निर्गुणम् = गुणरहितम्, गुणभोक्तृ = गुणानां पालकम् ।

भूतानाम् = जन्तूनाम्, बहिः = बहिर्भूतम्, अन्तः = अन्तर्भागे स्थितम्, अचरम् = अचलम्, चरम् = चलम्, सूक्ष्मत्वात् = सूक्ष्मरूपत्वात्, अविज्ञेयम् = अबोध्यम्, तत् = ज्ञेयं ब्रह्म, दूरस्थम् = सुदूरस्थम्, अन्तिके = समीपे स्थितम् ।

अविभक्तम् = एकीभूतम्, विभक्तम् इव = विभागयुक्तम् इव, स्थितम् = विद्यमानम्, भूतभृत् = भूतधारकम्, तत् ज्ञेयम् = तत् बोद्धव्यम्, ग्रसिष्णु = ग्रसनशीलम्, प्रभविष्णु = प्रभवशीलम् ।

तत् = तद्वस्तु, ज्योतिषाम् = अर्चिषाम्, ज्योतिः = अर्चिः, तमसः = अन्धकारात्, परम् = अन्यत्, ज्ञानम् = बोधरूपम्, ज्ञेयम् = बोद्धव्यम्, ज्ञानगम्यम् = ज्ञानफलम्, हृदि = हृदये, विष्ठितम् = स्थितम् ।

**अन्वयः** - तत् सर्वेन्द्रियगुणाभासम्, सर्वेन्द्रियविवर्जितम्, असक्तम्, सर्वभृत् च एव, निर्गुणम्, गुणभोक्तृ च, भूतानाम् बहिः अन्तः च, अचरम्, चरम् एव च, सूक्ष्मत्वात् तत् अविज्ञेयम्, दूरस्थं च, अन्तिके च, भूतेषु अविभक्तं च, विभक्तम् इव स्थितम् च, भूतभर्तृ च, ग्रसिष्णु प्रभविष्णु च, ज्ञेयम्, ज्योतिषाम् अपि ज्योतिः तमसः परम् उच्यते । ज्ञानम्, ज्ञेयम्, ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ।

**तात्पर्यम्** - तत् ब्रह्म इन्द्रियविषयाणां शब्दादीनां प्रकाशकम्, इन्द्रियशून्यम्, विषयेषु असम्बद्धम्, सर्वेषां पदार्थानां धारकम्, गुणशून्यम्, गुणरक्षकं च वर्तते ।

तत् ब्रह्म भूतानां बहिः अन्तश्च वर्तमानम् अर्थात् भूतव्यापकम्, अचलम् चलमिव भासमानम्, गूढत्वात् आयासेन बोध्यम्, दूरे वर्तमानम्, अन्तिके च वर्तमानमिव अस्ति ।

तत् ब्रह्म भूतेषु अविभक्तमपि विभक्तमिव स्थितम्, पृथिव्यादीनां भूतानां धारकम् पदार्थग्रसनशीलम्, सर्वथा समर्थम् ।

तत् ब्रह्म प्रकाशकानां ज्योतिषामपि प्रकाशकम्, अन्धकारम् अतीत्य वर्तमानम्, अमानित्वादिभिः ज्ञानसाधनैः अवगम्यम्, सर्वेषां हृदये वर्तमानं च ।

**माध्वमतम्** - तत् ब्रह्म सर्वाणि इद्रियाणि, तद्विषयांश्च प्रत्येति । स्वरूपभिन्नेन्द्रियाणि प्राकृतानि वा ब्रह्मणि न सन्ति । प्राकृतगुणरहितं ब्रह्म अप्राकृतगुणान् अनुभुङ्क्ते ।

तत् ब्रह्म भूतानां बहिरन्तश्च वर्तते । अन्यथाभावरहितत्वात् तत् अचरम् । सर्वदेशेषु गमनात् चरम् । अप्रतिघत्वात् इन्द्रियाविषयः । सर्वगतत्वात् ब्रह्म दूरस्थं समीपस्थं च भवति ।

तत् ब्रह्म सूर्यादिज्योतिषामपि प्रकाशं ददाति । अज्ञानात् अतिक्रान्तं ब्रह्म प्रकाशस्वरूपम् । अपि च

आत्मनि इति अध्यात्मम् - अव्ययीभावः । अध्यात्मं ज्ञानम् अध्यात्मज्ञानम् - सप्तमीतत्पुरुषः । अध्यात्मज्ञाने नित्यत्वम्, अध्यात्मज्ञाननित्यत्वम् - सप्तमीतत्पुरुषः ।

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥13.12॥**

**पदार्थः** - ज्ञेयम् = ज्ञातव्यम्, प्रवक्ष्यामि = विस्तरशः कथयामि, ज्ञात्वा = अवबुध्य, अमृतम् = मोक्षम्, अश्नुते = अनुभवति, अनादिमत् = आदिरहितम्, परम् = उत्तमम्, न सत् = न सत् भवति, तत् = ब्रह्म, न असत् = असत् अपि न भवति ।

**अन्वयः** - यत् ज्ञेयं तत् प्रवक्ष्यामि यत् ज्ञात्वा अमृतम् अश्नुते । अनादिमत् परं ब्रह्म न सत् । तत् न असत् उच्यते ।

**तात्पर्यम्** - यत् ज्ञातव्यं तत् विस्तरशः कथयामि यत् ज्ञात्वा मोक्षम् अनुभवति । परं ब्रह्म आदिरहितम् । तदिदं ब्रह्म विधिमुखेन प्रमाणविषयो न भवति, निषेधमुखेनापि न प्रमाणविषयो भवति ।

**माध्वमतम्**- यत् ज्ञात्वा मोहं न लभसे तत् ज्ञेयं प्रवक्ष्यामि । व्यक्ताव्यक्तविलक्षणम्, प्राकृतदेहेन्द्रियरहितं ब्रह्म ज्ञेयम् । तच्च अहमेव ।

**रामानुजीयमतम्** - ब्रह्म = आत्मन्यपि ब्रह्मशब्दः प्रयुज्यते, ब्रह्मणो हि प्रतिष्ठाहम् इत्यादि वक्ष्यते ।

**व्याकरणम्** - न आदिः अनादिः - नञ्तत्पुरुषः । अनादिः अस्य अस्मिन् वा अस्तीति अनादिमत् - मतुप् ।

**सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥13.13॥**

**पदार्थः** - सर्वतः पाणिपादम् = सर्वतोहस्तचरणम्, सर्वतः श्रुतिमत् = सर्वत्र श्रोत्रेण युक्तम्, सर्वतोऽक्षि-शिरोमुखम् = सर्वत्र नेत्रशीर्षवदनैः युक्तम्, तत् = ब्रह्म, आवृत्य = व्याप्य, तिष्ठति = वसति ।

**अन्वयः** - सर्वतः पाणिपादं सर्वतः अक्षिशिरोमुखम्, सर्वतः श्रुतिमत् तत् लोके सर्वम् आवृत्य तिष्ठति ।

**तात्पर्यम्** - तस्य ब्रह्मणः सर्वत्र हस्ताः पादाः नेत्राणि शिरांसि मुखानि श्रोत्राणि च सन्ति । तत् सकलं जगत् व्याप्य वर्तते ।

**माध्वमतम्**- तच्च ज्ञेयं लोके सर्वत्र व्याप्तम् । अपि च पाणिपादादिशक्तिमन्तः सर्वेऽपि अवयवाः स्वेतरावयव-शक्तिमन्तः वर्तन्ते । तस्मात् चक्षुषा श्रावणकार्यम्, श्रवणेन च चाक्षुषकार्यमुत्पद्यते । अतः तत् व्यक्ताव्यक्तविलक्षणमिति ज्ञेयम् ।

**व्याकरणम्** - पाणयश्च पादाश्च एतेषां समाहारः पाणिपादम् - द्वन्द्वः । सर्वतः पाणिपादं यस्य तत् सर्वतःपाणिपादम् - बहुव्रीहिः । अक्षीणि च शिरांसि च मुखानि च एतेषां समाहारः अक्षिशिरोमुखम् - द्वन्द्वः । सर्वतः अक्षिशिरोमुखं यस्य तत् सर्वतोऽक्षिशिरोमुखम् - बहुव्रीहिः । श्रुतयः अस्य अस्मिन् वा सन्तीति श्रुतिमत् - मतुप् ।

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥13.14॥**
**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥13.15॥**

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥13.16॥**
**ज्योतिषामपि तज्ज्योतिरतमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥13.17॥**

**पदार्थः** – सर्वेन्द्रियगुणाभासम् = इन्द्रियविषयप्रकाशकम्, असक्तम् = सङ्गरहितम्, सर्वेन्द्रियविवर्जितम् = सकलेन्द्रियरहितम्, सर्वभृत् = सकलभृत्, निर्गुणम् = गुणरहितम्, गुणभोक्तृ = गुणानां पालकम् ।

भूतानाम् = जन्तूनाम्, बहिः = बहिर्भूतम्, अन्तः = अन्तर्भागे स्थितम्, अचरम् = अचलम्, चरम् = चलम्, सूक्ष्मत्वात् = सूक्ष्मरूपत्वात्, अविज्ञेयम् = अबोध्यम्, तत् = ज्ञेयं ब्रह्म, दूरस्थम् = सुदूरस्थम्, अन्तिके = समीपे स्थितम् ।

अविभक्तम् = एकीभूतम्, विभक्तम् इव = विभागयुक्तम् इव, स्थितम् = विद्यमानम्, भूतभृत् = भूतधारकम्, तत् ज्ञेयम् = तत् बोद्धव्यम्, ग्रसिष्णु = ग्रसनशीलम्, प्रभविष्णु = प्रभवशीलम् ।

तत् = तद्वस्तु, ज्योतिषाम् = अर्चिषाम्, ज्योतिः = अर्चिः, तमसः = अन्धकारात्, परम् = अन्यत्, ज्ञानम् = बोधरूपम्, ज्ञेयम् = बोद्धव्यम्, ज्ञानगम्यम् = ज्ञानफलम्, हृदि = हृदये, विष्ठितम् = स्थितम् ।

**अन्वयः** – तत् सर्वेन्द्रियगुणाभासम्, सर्वेन्द्रियविवर्जितम्, असक्तम्, सर्वभृत् च एव, निर्गुणम्, गुणभोक्तृ च, भूतानाम् बहिः अन्तः च, अचरम्, चरम् एव च, सूक्ष्मत्वात् तत् अविज्ञेयम्, दूरस्थं च, अन्तिके च, भूतेषु अविभक्तं च, विभक्तम् इव स्थितम् च, भूतभर्तृ च, ग्रसिष्णु प्रभविष्णु च, ज्ञेयम्, ज्योतिषाम् अपि ज्योतिः तमसः परम् उच्यते । ज्ञानम्, ज्ञेयम्, ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ।

**तात्पर्यम्** – तत् ब्रह्म इन्द्रियविषयाणां शब्दादीनां प्रकाशकम्, इन्द्रियशून्यम्, विषयेषु असम्बद्धम्, सर्वेषां पदार्थानां धारकम्, गुणशून्यम्, गुणरक्षकं च वर्तते ।

तत् ब्रह्म भूतानां बहिः अन्तश्च वर्तमानम् अर्थात् भूतव्यापकम्, अचलम् चलमिव भासमानम्, गूढत्वात् आयासेन बोध्यम्, दूरे वर्तमानम्, अन्तिके च वर्तमानमिव अस्ति ।

तत् ब्रह्म भूतेषु अविभक्तमपि विभक्तमिव स्थितम्, पृथिव्यादीनां भूतानां धारकम् पदार्थग्रसनशीलम्, सर्वथा समर्थम् ।

तत् ब्रह्म प्रकाशकानां ज्योतिषामपि प्रकाशकम्, अन्धकारम् अतीत्य वर्तमानम्, अमानित्वादिभिः ज्ञानसाधनैः अवगम्यम्, सर्वेषां हृदये वर्तमानं च ।

**माध्वमतम्** – तत् ब्रह्म सर्वाणि इद्रियाणि, तद्विषयांश्च प्रत्येति । स्वरूपभिन्नेन्द्रियाणि प्राकृतानि वा ब्रह्मणि न सन्ति । प्राकृतगुणरहितं ब्रह्म अप्राकृतगुणान् अनुभुङ्क्ते ।

तत् ब्रह्म भूतानां बहिरन्तश्च वर्तते । अन्यथाभावरहितत्वात् तत् अचरम् । सर्वदेशेषु गमनात् चरम् । अप्रतिघत्वात् इन्द्रियाविषयः । सर्वगतत्वात् ब्रह्म दूरस्थं समीपस्थं च भवति ।

तत् ब्रह्म सूर्यादिज्योतिषामपि प्रकाशं ददाति । अज्ञानात् अतिक्रान्तं ब्रह्म प्रकाशस्वरूपम् । अपि च

स्वेन ज्ञातव्यत्वरूपं ज्ञेयत्वमपि तस्मिन् विद्यते। अपरोक्षज्ञानेन प्राप्यं ब्रह्म सर्वस्य हृदि वर्तते।

**व्याकरणम्** – सर्वाणि इन्द्रियाणि – सर्वेन्द्रियाणि – कर्मधारयः। सर्वेन्द्रियाणां गुणाः सर्वेन्द्रियगुणाः – सप्तमीतत्पुरुषः। सर्वेन्द्रियगुणानाम् आभासम् सर्वेन्द्रियगुणाभासम् – षष्ठीतत्पुरुषः। सर्वेन्द्रियैः विवर्जितं सर्वेन्द्रियविवर्जितम् – तृतीयातत्पुरुषः। न सक्तम् असक्तम् – नञ्तत्पुरुषः। सर्वाणि बिभर्ति इति सर्वभृत् – कर्तरि क्विप्, उपपदसमासश्च। निर्गताः गुणाः यस्मात् तत् निर्गुणम् – बहुव्रीहिः। गुणानां भोक्तृ गुणभोक्तृ – षष्ठीतत्पुरुषः। न चरम् अचरम् – नञ्तत्पुरुषः। न विज्ञेयम् अविज्ञेयम् – नञ्तत्पुरुषः। दूरे तिष्ठतीति दूरस्थम् – कर्तरि कप्रत्ययः उपपदसमासश्च। न विभक्तम् अविभक्तम् – नञ्तत्पुरुषः। भूतानां भर्तृ भूतभर्तृ – षष्ठीतत्पुरुषः। ज्ञानेन गम्यं ज्ञानगम्यम् – तृतीयातत्पुरुषः।

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥13.18॥**

**पदार्थः** – ज्ञेयम् = ज्ञातव्यम्, समासतः = सङ्ग्रहेण, मद्भक्तः = मम भक्तः, विज्ञाय = ज्ञात्वा, मद्भावाय = मत्स्वरूपाय, उपपद्यते = कल्पते।

**अन्वयः** – इति क्षेत्रं तथा ज्ञानं ज्ञेयं च समासतः उक्तम्। मद्भक्तः एतत् विज्ञाय मद्भावाय उपपद्यते।

**तात्पर्यम्** – एवं क्षेत्रं ज्ञानं ज्ञेयं चेति त्रयमपि सङ्ग्रहेण प्रतिपादितम्। परमात्मभक्तः इदं ज्ञात्वा मद्रूपत्वं प्राप्नोति।

**व्याकरणम्** – मम भावः मद्भावः, तस्मै – षष्ठीतत्पुरुषः।

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥13.19॥**

**पदार्थः** – प्रकृतिम् = अव्यक्तम्, पुरुषं = जीवम्, अनादी = आदिरहितौ, विद्धि = जानीहि, विकारान् = देहेन्द्रियादीन्, गुणान् = सुखदुःखादीन्, प्रकृतिसम्भवान् = प्रकृतिजनितान्।

**अन्वयः** – प्रकृतिं पुरुषं च एव उभौ अपि अनादी विद्धि। विकारान् गुणान् च एव प्रकृतिसम्भवान् विद्धि।

**तात्पर्यम्** – देहेन्द्रियादयः प्रकृतेः जन्याः विकाराः, सुखदुःखादयश्च सत्त्वादिगुणानां परिणामाः इति जानीहि।

**माध्वमतम्**– प्रकृतिः चिदचिद्भेदेन भिन्ना। पुरुषश्च जीवपरमात्मभेदेन भिन्नः। उभावपि अनादी इति विद्धि। इच्छादिकार्याणि सत्त्वादिगुणाश्च प्रकृतिकार्यमिति विद्धि।

**व्याकरणम्** – न विद्यते आदिः ययोः तौ अनादी–बहुव्रीहिः। प्रकृतेः सम्भवाः प्रकृतिसम्भवाः, तान्– पञ्चमीतत्पुरुषः।

**कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥13.20॥**

**पदार्थः** – कार्यकारणकर्तृत्वे = देहेन्द्रियकर्तृत्वे, प्रकृतिः = प्रधानम्, हेतुः = कारणम्, पुरुषः = जीवः, सुखदुःखानाम् = सुखादिगुणानाम्, भोक्तृत्वे = अनुभवे।

**अन्वयः** – कार्यकरणकर्तृत्वे प्रकृतिः हेतुः उच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः उच्यते।

**तात्पर्यम्** – इयं प्रकृतिः कार्यरूपस्य शरीरस्य कारणभूतस्य च इन्द्रियस्य तदाकारेण परिणामे हेतुः भवति। यद्यपि

प्रकृतिः जडा इति हेतोः तस्यां हेतुत्वं न सम्भवति जडस्य क्रियाजनकत्वाभावात् तथापि पुरुषस्य सन्निधानात् जडेऽपि पदार्थे क्रियाजनकत्वं सम्भवतीति नास्ति असङ्गतिः । पुरुषः प्रकृतिजन्यानां सुखदुःखादीनां गुणानां भोक्तृत्वे हेतुः । यद्यपि अयम् असङ्गः निर्लेपश्च तथापि प्रकृतिसन्निधानात् इदं भोक्तृत्वं सम्भवतीति बोद्धव्यम् ।

**व्याकरणम्** – कार्यं च करणं च कार्यकरणे – द्वन्द्वः । कार्यकरणयोः कर्ता कार्यकरणकर्ता – षष्ठीतत्पुरुषः । कार्यकरणकर्तुः भावः कार्यकरणकर्तृत्वम्, तस्मिन् – भावार्थे त्वप्रत्ययः । सुखानि च दुःखानि च सुखदुःखानि, तेषाम् – द्वन्द्वः । भोक्तुः भावः भोक्तृत्वम्, तस्मिन् भोक्तृत्वे – भावार्थे त्वप्रत्ययः ।

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥13.21॥**

**पदार्थः** – पुरुषः = जीवः, प्रकृतिस्थः = प्रकृतिपरिणामे देहे स्थितः, प्रकृतिजान् = प्रकृतिसम्भवान्, गुणान् = सुखदुःखादीन्, भुङ्क्ते = अनुभवति, सदसद्योनिजन्मसु = साध्वसाधुयोनिजननेषु, गुणसङ्गः = शब्दादिषु विषयेषु तज्ज्ञानसाधनेषु इन्द्रियेषु वा आसक्तिः ।

**अन्वयः** – पुरुषः हि प्रकृतिस्थः प्रकृतिजान्गुणान् भुङ्क्ते अस्य सदसद्योनिजन्मसु गुणसङ्गः कारणम् ।

**तात्पर्यम्** – शरीरं प्रकृतेः परिणामः । तदभिन्नतया स्थितः पुरुषः प्रकृतिस्थसत्त्वादिगुणानां कार्यभूतान् सुखदुःखादीन् अनुभवति । सः कदाचित् देवादिषु साधुयोनिषु जातः सत्त्वगुणस्य फलं सुखम् अनुभवति। कदाचित् पश्वादिषु असाधुयोनिषु जातः तमोगुणस्य फलं दुःखम् अनुभवति । कदाचित् साध्वसाधु-योनिषु मनुष्येषु जातः रजोगुणफलं सुखदुःखमिश्रम् अनुभवति । एवं सत्त्वादिगुणस्य सुखदुःखमोहानाम् अनुभवे कारणं तस्य पुरुषस्य शब्दादिषु विषयेषु तज्ज्ञानसाधनेषु वा इन्द्रियेषु आसक्तिः । सा आसक्तिः अत्र गुणसङ्गशब्देन उच्यते ।

**माध्वमतम्** – जीवात्मा प्रकृतिजं शरीरमधिष्ठाय तन्निर्मितान् सुखदुःखादीन् अनुभवति । तस्मात् सुखादिभोगः यथार्थः इति अङ्गीकार्यम् । उत्तमनीचशरीरसम्बन्धे सत्त्वादिगुणसम्बन्धः निमित्तं भवति ।

**व्याकरणम्** – प्रकृतौ तिष्ठतीति प्रकृतिस्थः – कर्तरि कप्रत्ययः, उपपदसमासश्च । प्रकृतेः जाताः इति प्रकृतिजाः, तान् प्रकृतिजान् – कर्तरि डप्रत्ययः, उपपदसमासश्च । गुणेषु सङ्गः – सप्तमीतत्पुरुषः । सती च असती च सदसती – द्वन्द्वः । सदसती योनी सदसद्योनी – कर्मधारयः । सदसद्योन्योः जन्मानि सदसद्योनिजन्मानि, तेषु – सप्तमीतत्पुरुषः ।

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥13.22॥**

**पदार्थः** – उपद्रष्टा = समीपे स्थित्वा समीक्षिता, अनुमन्ता च = अनुमोदकः, भर्ता = धारकः, भोक्ता = अनुभविता, महेश्वरः = महाप्रभुः, अस्मिन् = एतस्मिन्, परमात्मा इति च अपि = परब्रह्म इति अपि, परः = उत्तमः, पुरुषः = अक्षरः ।

**अन्वयः** – उपद्रष्टा अनुमन्ता भर्ता भोक्ता महेश्वरः च परमात्मा इति च अपि उक्तः अस्मिन् देहे परः पुरुषः ।

**तात्पर्यम्** – शरीरे स्थितः यः समीपे स्थित्वा सर्वं पश्यन्निव अस्ति, यः सन्निधिमात्रेण अनुग्राहक इव वर्तते, यः शरीरादिकं धारयन् इव भासते, यः सुखदुःखादीन् अनुभवति, यः स्वतन्त्रत्वात् महान् ईश्वरः सः परमात्मा इति शब्देन श्रुतौ प्रतिपादितः। सः प्रकृतिभिन्नोऽपि प्रकृतिपरिणामे शरीरे वसन् पुरुषः इत्युच्यते।

**माध्वमतम्**– उत्तमनीचशरीरसम्बन्धे सत्त्वादिगुणसम्बन्धः निमित्तकारणम्, किन्तु परमात्मा स्वतन्त्रकारणम्। स एव साक्षी, स्वामी, कर्मफलयोक्ता भगवान् इत्युच्यते।

**रामानुजीयमतम्** – महेश्वरः परमात्मा = अयं पुरुषः जीवात्मा एतद्देहमात्रमहेश्वरः देहमात्रपरमात्मा च भवति।

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥13.23॥**

**पदार्थः** – गुणैः सह = गुणैः साकम्, पुरुषम् = जीवम्, प्रकृतिं च = प्रधानम् अपि, वेत्ति = जानाति, सर्वथा = सर्वप्रकारेण, वर्तमानः अपि = विद्यमानः अपि, भूयः = पुनः, न अभिजायते = न उत्पद्यते।

**अन्वयः** – य एवं गुणैः सह पुरुषं प्रकृतिं च वेत्ति सः सर्वथा वर्तमानः अपि भूयः न अभिजायते।

**तात्पर्यम्** – यः पुरुषः पूर्वोक्तप्रकारेण क्रमेण गुणान्, जीवम्, प्रकृतिं च जानाति सः देहे सम्प्रति विद्यमानोऽपि पुनः जन्म न प्राप्नोति।

**माध्वमतम्**– तदेवं जीवपरमात्मभेदं प्रकृतिभेदं च यो वेत्ति सः प्रमादात् अधर्ममार्गस्थोऽपि पुनः संसारे न जायते।

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।**
**अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥13.24॥**

**पदार्थः** – केचित् = केचित् जनाः, ध्यानेन = आत्माकारप्रत्ययावर्तनेन, आत्मनि = देहे, आत्मना = अन्तःकरणेन, आत्मानम् = सर्वात्मानम्, साङ्ख्येन योगेन = प्रकृतिपुरुषविवेकरूपेण ज्ञानयोगेन, कर्मयोगेन = फलनिरपेक्षकर्मणा।

**अन्वयः** – केचित् ध्यानेन आत्मनि आत्मना आत्मानं पश्यन्ति। अन्ये साङ्ख्येन योगेन, अपरे कर्मयोगेन।

**तात्पर्यम्** – केचन आत्माकारप्रत्ययावर्तनरूपेण ध्यानेन देहे वर्तमानम् आत्मानं मनसा पश्यन्ति। अपरे प्रकृति–पुरुषविवेकरूपेण ज्ञानयोगेन अन्ये पुनः निष्कामकर्माचरणरूपेण कर्मयोगेन।

**रामानुजीयमतम्** – देहे मनसि च आत्मशब्दः अनन्तरम् एव प्रयुज्यते। सांख्येन योगेन = ज्ञानयोगेन, कर्मयोगेन = अन्तर्गतज्ञानेन।

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥13.25॥**

**पदार्थः** – अजानन्तः = अविदन्तः, अन्येभ्यः = आचार्येभ्यः, उपासते = ध्यायन्ति, श्रुतिपरायणाः = श्रवणासक्ताः, अतितरन्ति = लङ्घयन्ति।

**अन्वयः** – अन्ये तु एवम् अजानन्तः अन्येभ्यः श्रुत्वा उपासते। श्रुतिपरायणाः ते अपि च मृत्युम् अतितरन्ति एव।

**तात्पर्यम्** – अन्ये तु गुणान् जीवं प्रकृतिं च पूर्वोक्तरीत्या ज्ञातुम् अशक्नुवन्तः अपि आचार्येभ्यः तत् विज्ञाय तदुपदेशस्य च श्रवणे नितरामासक्ताः मृत्युरूपमिमं संसारं शनैः शनैः तरन्ति, न शीघ्रम्।

**व्याकरणम्** – न जानन्तः अजानन्तः – नञ्तत्पुरुषः। श्रुतौ परायणाः श्रुतिपरायणाः – सप्तमीतत्पुरुषः।

**यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥13.26॥**

**पदार्थः** – भरतर्षभ = भरतश्रेष्ठ ! स्थावरजङ्गमम् = चरम् अचरं च, सत्त्वम् = वस्तु, क्षेत्रक्षेत्रज्ञसंयोगात् = जीवशरीरसम्बन्धात्, विद्धि = जानीहि ।

**अन्वयः** – भरतर्षभ ! स्थावरजङ्गमं किञ्चित् सत्त्वं यावत् सञ्जायते तत् क्षेत्रक्षेत्रज्ञसंयोगात् विद्धि ।

**तात्पर्यम्** – भरतश्रेष्ठ ! स्थावरं जङ्गमं वा यत्किञ्चित् वस्तु अत्र यत् सम्भवति तत् शरीरपुरुषसम्बन्धात् सम्भवतीति जानीहि ।

**माध्वमतम्**– एतत् जीवजातं चित्प्रकृतिपरमात्मनोः संयोगात् प्रादुर्भवतीति विद्धि ।

**व्याकरणम्** – स्थावरं च जङ्गमं च अनयोः समाहरः स्थावरजङ्गमम् – द्वन्द्वः । क्षेत्रं च क्षेत्रज्ञश्च क्षेत्रक्षेत्रज्ञौ – द्वन्द्वः । क्षेत्रक्षेत्रज्ञयोः संयोगः क्षेत्रक्षेत्रज्ञसंयोगः, तस्मात् – षष्ठीतत्पुरुषः ।

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥13.27॥**

**पदार्थः** – भूतेषु = प्राणिषु, समम् = समानम्, तिष्ठन्तम् = विद्यमानम्, सः पश्यति = स एव सम्यक् जानाति । विनश्यत्सु अविनश्यन्तम् = म्रियमाणेषु अपि अम्रियमाणम् ।

**अन्वयः** – सर्वेषु भूतेषु समं तिष्ठन्तं विनश्यत्सु अविनश्यन्तं परमेश्वरं यः पश्यति सः पश्यति ।

**तात्पर्यम्** – निखिलेषु प्राणिषु अविशेषेण विद्यमानम्, प्राणिषु म्रियमाणेष्वपि अम्रियमाणम्, परमात्मानं यः मानवः पश्यति सः एव सम्यक् पश्यति । स एव ज्ञानी, नान्यः ।

**व्याकरणम्** – न विनश्यन् अविनश्यन्, तम् – नञ्तत्पुरुषः ।

**समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥13.28॥**

**पदार्थः** – समवस्थितम् = विद्यमानम्, ईश्वरम् = परमात्मानम्, आत्मना = स्वेन, आत्मानम् = स्वम्, न हिनस्ति = न पीडयति, पराम् = प्रकृष्टाम्, गतिम् = स्थितिम् (मोक्षम्), याति = गच्छति ।

**अन्वयः** – सर्वत्र समवस्थितम् ईश्वरं समं पश्यन् हि आत्मना आत्मानं न हिनस्ति ततः परां गतिं याति ।

**तात्पर्यम्** – सर्वेषु प्राणिषु वर्तमानम् इमं परमात्मानं यः समभावेन पश्यति सः नहि आत्मना आत्मानं हिंसितुं प्रभवति, भेदाभावात् । तादृशः भेदज्ञानरहितः मुक्तिं प्राप्नोति ।

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥13.29॥**

**पदार्थः** – प्रकृत्या एव च = मायया एव च, सर्वशः = सर्वप्रकारेण, क्रियमाणानि = निर्वर्त्यमानानि ।

**अन्वयः** – यः सर्वशः कर्माणि प्रकृत्या एव च क्रियमाणानि पश्यति तथा आत्मानम् अकर्तारं (पश्यति) सः पश्यति ।

**तात्पर्यम्** – शरीरेन्द्रियसङ्घातरूपा इयं प्रकृतिरेव कर्माणि करोति न तु आत्मा । तस्य तु प्रकृतिसम्बन्धात् केवलं कर्तृत्वाभिमानः न तु पारमार्थिकं कर्तृत्वम् इति यः जानाति स एव सम्यक् जानाति, नान्यः ।

**माध्वमतम्**– परमात्मैव प्रकृतिनियामकत्वेन मया कर्माणि कारयति, अहमस्वतन्त्रः इति यो वेत्ति सः यथार्थज्ञानी ।
**व्याकरणम्** – न कर्ता अकर्ता, तम् अकर्तारम् – नञ्तत्पुरुषः ।

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥13.30॥**

**पदार्थः** – भूतपृथग्भावम् = भूतभेदम्, एकस्थम् = एकत्र वर्तमानम्, अनुपश्यति = सम्यक् पश्यति, विस्तारम् = विकासम्, ब्रह्म = परमात्मा, सम्पद्यते = सम्भवति ।
**अन्वयः** – यदा भूतपृथग्भावम् एकस्थम् अनुपश्यति ततः एव च तदा विस्तारं ब्रह्म सम्पद्यते ।
**तात्पर्यम्** – यदा पुरुषः भिन्नत्वेन दृश्यमानान् स्थावरजङ्गमान् सर्वान् प्रलयकाले एकस्यामेव प्रकृतौ तिष्ठन्तीति पर्यालोचयति, यदा च सृष्टिकाले पुनः तस्या एव प्रकृतेः एते भिन्नाः स्थावरजङ्गमाः सम्भवन्ति इत्यपि पर्यालोचयति तदा स अहं प्रकृतितोऽतिरिक्तः इति जानन् ब्रह्मत्वं प्राप्नोति ।
**व्याकरणम्** – भूतानां पृथग्भावः भूतपृथग्भावः, तम् – षष्ठीतत्पुरुषः । एकस्मिन् तिष्ठतीति एकस्थः, तम् – कर्तरि कप्रत्ययः उपपदसमासश्च ।

**अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥13.31॥**

**पदार्थः** – अव्ययः = नाशरहितः, अनादित्वात् = अमूलत्वात्, निर्गुणत्वात् = गुणराहित्यात्, शरीरस्थः = क्षेत्रस्थः, न करोति = न आचरति, न लिप्यते = लिप्तो न भवति ।
**अन्वयः** – कौन्तेय ! अयम् अव्ययः परमात्मा शरीरस्थः अपि अनादित्वात् निर्गुणत्वात् न करोति न लिप्यते ।
**तात्पर्यम्** – अर्जुन ! एषः अविनाशी परमात्मा शरीरे वर्तमानः प्रकृतिसम्बन्धात् कर्म कुर्वन्निव भाति, कर्मफलानि च अनुभवन्निव । किन्तु अयम् अनादिः निर्गणश्च इति हेतोः न तस्मिन् कर्मकर्तृत्वं सम्भवति, नापि कर्मफलभोक्तृत्वम् । तत् केवलम् अस्य सन्निधानात् प्रकृतौ एव ।
**व्याकरणम्** – न विद्यते आदिः यस्य सः अनादिः – नञ्बहुव्रीहिः । अनादेः भावः अनादित्वम्, तस्मात् – भावार्थे त्वप्रत्ययः । शरीरे तिष्ठतीति शरीरस्थः – कर्तरि कः उपपदसमासश्च ।

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥13.32॥**

**पदार्थः** – सर्वगतम् = सर्वव्यापि, सौक्ष्म्यात् = असम्बद्धत्वात्, सर्वत्र = सर्वतः, अवस्थितः = विद्यमानः ।
**अन्वयः** – यथा सर्वगतम् आकाशं सौक्ष्म्यात् न उपलिप्यते तथा सर्वत्र देहे अवस्थितः आत्मा न उपलिप्यते ।
**तात्पर्यम्** – यथा आकाशः पङ्कादिषु पुष्पादिषु च वर्तमानः असङ्गत्वात् न तद्गतेन दोषेण गुणेन वा सम्बध्यते तथा आत्मा अपि प्रकृष्टे निकृष्टे वा शरीरे वर्तमानः न तद्गतेन दोषेण गुणेन वा सम्बध्यते ।

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥13.33॥**

**पदार्थः** - कृत्स्नम् = समस्तम्, लोकम् = भुवनम्, क्षेत्री = परमात्मा, क्षेत्रम् = शरीरम्, प्रकाशयति = दीपयति ।

**अन्वयः** - भारत ! एकः रविः कृत्स्नम् इमं लोकं यथा प्रकाशयति तथा क्षेत्री कृत्स्नं क्षेत्रं प्रकाशयति ।

**तात्पर्यम्** - अर्जुन ! यथा एकः रविः जगद्गतानि नानाविधानि वस्तूनि प्रकाशयति प्रकाशयन् च न तद्भेदेन भेदं गच्छति तथा अयम् आत्मा अपि नानाविधानि शरीराणि प्रकाशयति प्रकाशयन् च न तद्भेदेन भेदं गच्छति ।

**माध्वमतम्** - यथा सूर्यः लोकं प्रकाशयति तथा सर्वक्षेत्रस्थः परमात्मा चेतनाचेतनरूपक्षेत्रं स्वज्ञानविषये करोति ।

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥13.34॥**

**पदार्थः** - ज्ञानचक्षुषा = ज्ञाननेत्रेण, क्षेत्रक्षेत्रज्ञयोः = शरीरात्मनोः, अन्तरम् = वैलक्षण्यम्, भूतप्रकृतिमोक्षम् = अविद्यानाशम्, विदुः = विदन्ति, परम् = परं ब्रह्म ।

**अन्वयः** - एवं ज्ञानचक्षुषा क्षेत्रक्षेत्रज्ञयोः अन्तरं भूतप्रकृतिमोक्षं च ये विदुः ते परं यान्ति ।

**तात्पर्यम्** - एवम् आत्मशरीरयोः भेदं ज्ञाननेत्रेण ये विदन्ति, या इयं भूतानां प्रकृतिः ततः मोक्षं च ये विदन्ति ते परं ब्रह्म उपयान्ति ।

**माध्वमतम्** - तदेवं क्षेत्रक्षेत्रज्ञयोः भेदं भूतेभ्यः प्रकृतेश्च जीवानां मोक्षोपयोगिगुणांश्च यो वेत्ति सः मुक्तो भवति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥

### श्रीमद्भगवद्गीता

अथ चतुर्दशोऽध्यायः

## गुणत्रयविभागयोगः

**श्रीभगवानुवाच – परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥14.1॥**

**पदार्थः** – परम् = अन्यत्, ज्ञानानाम् = ज्ञानेषु, उत्तमम् = प्रकृष्टम्, प्रवक्ष्यामि = कथयामि, इतः = अस्मात् संसारात्, परां सिद्धिम् = मोक्षम्, गताः = प्राप्तवन्तः ।

**अन्वयः** – भूयः परं ज्ञानानाम् उत्तमं ज्ञानं प्रवक्ष्यामि । सर्वे मुनयः यत् ज्ञात्वा इतः परां सिद्धिं गताः ।

**तात्पर्यम्** – अन्यदपि पुनः ज्ञानेषु उत्तमं ज्ञानं ते कथयामि, यत् ज्ञात्वा मुनयः अस्मात् संसारात् मोक्षं प्राप्तवन्तः ।

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥14.2॥**

**पदार्थः** – ज्ञानम् = ब्रह्मज्ञानम्, उपाश्रित्य = अवलम्ब्य, साधर्म्यम् = स्वरूपम्, आगताः = प्राप्ताः, सर्गे = सृष्टिकाले, उपजायन्ते = उत्पद्यन्ते, प्रलये = सर्गप्रलये, व्यथन्ति = बाधां प्राप्नुवन्ति ।

**अन्वयः** – इदं ज्ञानम् उपाश्रित्य मम साधर्म्यम् आगताः सर्गे अपि न उपजायन्ते प्रलये च न व्यथन्ति ।

**तात्पर्यम्** – एतत् ब्रह्मज्ञानम् अवलम्ब्य मम स्वरूपं प्राप्ताः सृष्टिकाले अपि न उत्पद्यन्ते प्रलयकाले अपि बाधां न प्राप्नुवन्ति ।

**माध्वमतम्** – उत्तमज्ञानं प्राप्य भगवतः सारूप्यं प्राप्ताः संसारे नोपजायन्ते । प्रलयकाले च मरणशीलाः न भवन्ति ।

**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ॥14.3॥**

**पदार्थः** – योनिः = गर्भाधानस्थानम्, महत् = विस्तृतम्, ब्रह्म = प्रकृतिः, गर्भम् = सङ्कल्परूपं बीजम्, दधामि = निक्षिपामि, ततः = तस्मात्, सर्वभूतानाम् = सकलजन्तूनाम्, सम्भवः = प्रभवः ।

**अन्वयः** – भारत ! मम योनिः महत् ब्रह्म । तस्मिन् अहं गर्भं दधामि । ततः सर्वभूतानां सम्भवः भवति ।

**तात्पर्यम्** – भारत ! या इयम् अत्यन्तं महती प्रकृतिः वर्तते सा वृद्धिहेतुत्वात् ब्रह्म इत्युच्यते । सा प्रकृतिः मम गर्भाधानस्थानम् । तत्र 'अहं बहु स्याम्' इत्येवंरूपं सङ्कल्पं निक्षिपामि । तेन सर्वेषामपि भूतानाम् उत्पत्तिः भवति ।

**व्याकरणम्** – सर्वाणि भूतानि सर्वभूतानि, तेषाम्, सर्वभूतानाम् – कर्मधारयः ।

**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥14.4॥**

**पदार्थः** – सर्वयोनिषु = सकलयोनिषु, मूर्तयः = शरीराणि, सम्भवन्ति = जायन्ते, महत् ब्रह्म = प्रकृतिः, योनिः = कारणम्, बीजप्रदः = गर्भाधायकः ।

**अन्वयः** – कौन्तेय ! सर्वयोनिषु याः मूर्तयः सम्भवन्ति तासां योनिः महत् ब्रह्म अहं बीजप्रदः पिता ।

**तात्पर्यम्** – अर्जुन ! नाना योनिषु यानि शरीराणि सम्भवन्ति तेषां माता प्रकृतिः । अहं तु परमात्मा गर्भाधायकः इति पिता ।

**व्याकरणम्** – सर्वाः योनयः सर्वयोनयः, तासु – कर्मधारयः । प्रददाति इति प्रदः – कर्तरि कः । बीजस्य प्रदः बीजप्रदः – षष्ठीतत्पुरुषः ।

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥14.5॥**

**पदार्थः** – प्रकृतिसम्भवाः = मायास्वरूपभूताः अपि जन्याः इव स्थिताः, अव्ययम् = अक्षयम्, देहिनम् = आत्मानम्, निबध्नन्ति = बध्नन्ति ।

**अन्वयः** – महाबाहो ! सत्त्वं रजः तमः इति प्रकृतिसम्भवाः गुणाः । देहे अव्ययं देहिनं निबध्नन्ति ।

**तात्पर्यम्** – अर्जुन ! सत्त्वं रजः तमः इति प्रकृतेः स्वरूपभूताः गुणाः । ते च प्रकृतितः जाताः इव भासमानाः शरीरे आत्मानं बध्नन्ति ।

**व्याकरणम्** – प्रकृतेः सम्भवाः प्रकृतिसम्भवाः – पञ्चमीतत्पुरुषः । देहः अस्य अस्मिन् वा अस्ति इति देही, तम्, देहिनम् – मतुबर्थे इनिः ।

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥14.6॥**

**पदार्थः** – अनघ = पापरहित, निर्मलत्वात् = स्वच्छत्वात्, प्रकाशकम् = भासकम्, अनामयम् = निरुपद्रवम्, सुखसङ्गेन = सुखयोगेन, ज्ञानसङ्गेन = ज्ञानयोगेन ।

**अन्वयः** – अनघ ! तत्र निर्मलत्वात् प्रकाशकम् अनामयं सत्त्वं सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति ।

**तात्पर्यम्** – हे पापरहित (अर्जुन) ! तेषु त्रिषु गुणेषु स्वच्छत्वात् भासकं निरुपद्रवं सत्त्वं सुखं जनयति ज्ञानं च ।

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥14.7॥**

**पदार्थः** – रागात्मकम् = कामस्वरूपम्, तृष्णासङ्गसमुद्भवम् = अभिलाषासक्तिसमुत्पन्नम्, कर्मसङ्गेन = कर्मसम्बन्धेन, देहिनम् = आत्मानम् ।

**अन्वयः** – कौन्तेय ! तृष्णासङ्गसमुद्भवं रजः रागात्मकं विद्धि । तत् कर्मसङ्गेन देहिनम् निबध्नाति ।

**तात्पर्यम्** – अर्जुन ! अप्राप्ते वस्तुनि अभिलाषः तृष्णा, प्राप्ते वस्तुनि अभिलाषः सङ्गः । आभ्यां यो रागः सम्भवति तदात्मकः अयं रजोगुणः । अयं च आत्मानं कर्मसु प्रवर्तयति । प्रवृत्तश्च सः तत्र बद्धो भवति ।

**माध्वमतम्** – रागात्मकम् = सृष्ट्यादिरञ्जनस्वरूपं रजः, तृष्णा = इदं भूयात् इति आशा, सङ्गः = वस्तुषु आसक्तिः ।

**व्याकरणम्** – रागः आत्मा यस्य तत् रागात्मकम् – बहुव्रीहिः । तृष्णा च सङ्गश्च तृष्णासङ्गौ – द्वन्द्वः । तृष्णा-सङ्गाभ्यां समुद्भवम्, तृष्णासङ्गसमुद्भवम् – तृतीयातत्पुरुषः । कर्मसु सङ्गः कर्मसङ्गः – सप्तमीतत्पुरुषः ।

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥14.8॥**

**पदार्थः** – सर्वदेहिनाम् = सकलशरीरभृताम्, मोहनम् = अविवेककरम्, तमः = तमोगुणः, अज्ञानजम् = अविवेकजनितम्, प्रमादात् = अनवधानात् ।

**अन्वयः** – भारत ! सर्वदेहिनां मोहनं तमः तु अज्ञानजं विद्धि । तत् प्रमादालस्यनिद्राभिः निबध्नाति ।

**तात्पर्यम्** – अर्जुन ! गुणेषु यत् तृतीयं तमः अज्ञानात् सम्भवति । इदं च तमः सर्वेषां प्राणिनां भ्रान्तिं जनयति । अनेन गुणेन सर्वेषाम् अनवधानं जाड्यं निद्रा च सम्भवति । एवमिदं तमः पुरुषं संसारे बध्नाति ।

**माध्वमतम्**– अज्ञानजम् = मिथ्याज्ञानजम् ।

**व्याकरणम्** – अज्ञानात् जातम् – अज्ञानजम्, कर्तरि डप्रत्ययः उपपदसमासश्च । सर्वे देहिनः सर्वदेहिनः तेषाम्, सर्वदेहिनाम् – कर्मधारयः । प्रमादः च आलस्यं च निद्रा च प्रमादालस्यनिद्राः, ताभिः – द्वन्द्वः ।

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥14.9॥**

**पदार्थः** – सञ्जयति = संयोजयति, कर्मणि = व्यापारे, ज्ञानम् = बोधम्, आवृत्य = आच्छाद्य, प्रमादे उत = अनवधाने अपि, सञ्जयति = संयोजयति ।

**अन्वयः** – भारत ! सत्त्वं सुखे सञ्जयति । रजः कर्मणि । तमः तु ज्ञानम् आवृत्य प्रमादे सञ्जयति उत ।

**तात्पर्यम्** – भारत ! एतेषु त्रिषु गुणेषु सत्त्वं दुःखकारणे सत्यपि आत्मनः सुखं जनयति । रजः सुखकारणे सत्यपि दुःखं जनयति । तमः तु ज्ञानम् आच्छाद्य अनवधानालस्यनिद्रादिकं जनयति ।

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥14.10॥**

**पदार्थः** – अभिभूय = अतिक्रम्य ।

**अन्वयः** – भारत ! रजः तमः च अभिभूय सत्त्वं भवति । रजः सत्त्वं च अभिभूय तमः एव (भवति) तथा तमः सत्त्वम् अभिभूय रजः (भवति) ।

**तात्पर्यम्** – अर्जुन ! यद्यपि एतेषां त्रयाणां गुणानां बुद्धौ समानत्वं तथापि क्वचित् सत्त्वम् अन्यत् गुणद्वयम् अधःकृत्य स्वकार्यं सुखं जनयति । क्वचित् रजः अन्यत् गुणद्वयम् अधःकृत्य स्वकार्यम् दुःखम् । क्वचित् च तमः अन्यत् गुणद्वयम् अधःकृत्य स्वकार्यम् अविवेकम् । अत एवेदं प्राणिषु तारतम्यम् ।

**माध्वमतम्**– परमात्मनः इच्छावशात् सत्त्वगुणस्य औत्कट्ये गुणद्वयं (तमः रजश्च) कार्यं न करोति । एवमेव रजोगुणस्य तमोगुणस्य च औत्कट्ये गुणद्वयं कार्यं न करोति ।

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥14.11॥**

**पदार्थः** – सर्वद्वारेषु = सकलेन्द्रियेषु, ज्ञानम् = ज्ञानरूपम्, प्रकाशः = ज्योतिः, उपजायते = उद्भवति, विवृद्धम् = प्रवृद्धम्, विद्यात् = जानीयात् ।

**अन्वयः** – अस्मिन् देहे सर्वद्वारेषु यदा ज्ञानं प्रकाशः उपजायते तदा सत्त्वं विवृद्धम् उत इति जानीयात् ।

**तात्पर्यम्** – पुरुषस्य यदा श्रोत्रचक्षुःप्रभृतिभिः इन्द्रियैः पदार्थस्य यथावत् ज्ञानं भवति तदा तस्मिन् सत्त्वगुणः वृद्धिं गतः इति ज्ञातव्यम् ।

**व्याकरणम्** – सर्वाणि द्वाराणि, सर्वद्वाराणि, तेषु – कर्मधारयः ।

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥14.12॥**

**पदार्थः** – लोभः = परद्रव्यप्राप्तीच्छा, प्रवृत्तिः = प्रवर्तनम्, कर्मणाम् = कार्याणाम्, आरम्भः = प्रारम्भः, अशमः = अशान्तिः, स्पृहा = तृष्णा, रजसि = रजोगुणे, विवृद्धे = बृंहिते ।

**अन्वयः** – भरतर्षभ ! लोभः प्रवृत्तिः कर्मणाम् आरम्भः अशमः स्पृहा एतानि रजसि विवृद्धे जायन्ते ।

**तात्पर्यम्** – अर्जुन ! पुरुषस्य यदा लोलुपत्वम्, निरन्तरप्रयत्नः, काम्येषुं निषिद्धेषु च कर्मसु प्रवृत्तिः, अविश्रान्तिः, दृष्टमात्रेषु अपि वस्तुषु परमा आसक्तिः च भवति तदा तस्मिन् रजोगुणः वृद्धिं गतः इति ज्ञातव्यम् ।

**माध्वमतम्** – लोभः = धनादेः अत्यागेच्छा, प्रवृत्तिः = व्यर्थोद्योगः, आरम्भः = काम्यकर्मणाम् आरम्भः, अशमः = चित्तस्य अनुपरतिः, स्पृहा = अप्राप्ताभिलाषः ।

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥14.13॥**

**पदार्थः** – कुरुनन्दन = अर्जुन ! अप्रकाशः = अविवेकः, अप्रवृत्तिः = प्रवृत्त्यभावः, प्रमादः = अनवधानम्, मोहः = मन्दत्वम्, तमसि = तमोगुणे, विवृद्धे = प्रवृद्धे, जायन्ते = भवन्ति ।

**अन्वयः** – कुरुनन्दन ! अप्रकाशः अप्रवृत्तिः च प्रमादः मोह एव च एतानि तमसि विवृद्धे जायन्ते ।

**तात्पर्यम्** – अर्जुन ! पुरुषस्य यदा विवेकभ्रंशः शास्त्रविहितकर्मसु अप्रवृत्तिः, कार्ये अनवधानम्, भ्रान्तिः निद्रा इत्यादयः भवन्ति तदा तमोगुणः वृद्धिं गतः इति ज्ञातव्यम् ।

**माध्वमतम्** – प्रमादः = अनवधानम् ।

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥14.14॥**

**पदार्थः** – देहभृत् = शरीरधारी, सत्त्वे = सत्त्वगुणे, प्रवृद्धे = विवृद्धे, प्रलयम् = मरणम्, याति = प्राप्नोति, उत्तमविदाम् = तत्त्वज्ञानिनाम्, अमलान् = शुद्धान्, लोकान् = प्रदेशान्, प्रतिपद्यते = अधिगच्छति ।

**अन्वयः** – सत्त्वे प्रवृद्धे तु यदा देहभृत् प्रलयं याति तदा उत्तमविदाम् अमलान् लोकान् प्रतिपद्यते ।

**तात्पर्यम्** – सत्त्वगुणे प्रवृद्धे म्रियमाणः पुरुषः निर्मलान् तत्त्वज्ञानिनां लोकान् प्राप्नोति ।

**माध्वमतम्** – उत्तमविदाम् = विष्णुज्ञानिनाम् ।

**व्याकरणम्** – देहं बिभर्ति इति देहभृत् – कर्तरि क्विप् उपपदसमासश्च । उत्तमान् (हिरण्यगर्भादीन्) विदन्ति इति उत्तमविदः, तेषाम्, उत्तमविदाम् – कर्तरि क्विप् उपपदसमासश्च ।

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥14.15॥**

**पदार्थः** – रजसि = रजोगुणे, प्रलयम् = मृत्युम्, कर्मसङ्गिषु = कर्मासक्तेषु, जायते = उद्भवति, तमसि = तमोगुणे, प्रलीनः = मृतः, मूढयोनिषु = निकृष्टयोनिषु ।

**अन्वयः** – रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते तथा तमसि प्रलीनः मूढयोनिषु जायते ।

**तात्पर्यम्** – रजोगुणे प्रवृद्धे म्रियमाणः पुरुषः कर्मासक्तेषु मनुष्येषु जायते । तमोगुणे प्रवृद्धे म्रियमाणः तु विवेकरहितेषु पशुप्रभृतिषु जन्म प्राप्नोति ।

**व्याकरणम्** – कर्मसु सज्जन्ते तच्छीलाः कर्मसङ्गिनः, तेषु – ताच्छीलिके कर्तरि णिनिः उपपदसमासश्च । मूढा योनिः येषां ते मूढयोनयः, तेषु – बहुव्रीहिः । योनौ मूढत्वं तद्युक्तानां मूढत्वेन इति बोध्यम् ।

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥14.16॥**

**पदार्थः** – सुकृतस्य कर्मणः = साधु विहितस्य कर्मणः, निर्मलम् = स्वच्छम्, सात्त्विकम् = सत्त्वसम्पन्नम्, फलम् = सुखरूपफलम्, आहुः = ब्रुवन्ति ।

**अन्वयः** – सुकृतस्य कर्मणः निर्मलं सात्त्विकं फलम् आहुः । रजसः फलं तु दुःखम् । तमसः फलम् अज्ञानम् ।

**तात्पर्यम्** – साधु विहितस्य कर्मणः सत्त्वप्रधानं स्वच्छं सुखं फलं कथयन्ति । रजोगुणस्य दुःखं तमसस्तु अज्ञानम्।

**सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥14.17॥**

**पदार्थः** – सत्त्वात् = सत्त्वगुणात्, ज्ञानम् = विवेकः, रजसः = रजोगुणात्, तमसः = तमोगुणात्, प्रमोदमोहौ = प्रमोदः मोहश्च, भवतः = सम्भवतः ।

**अन्वयः** – सत्त्वात् ज्ञानं सञ्जायते रजसः लोभः एव च । तमसः प्रमादमोहौ भवतः अज्ञानम् एव च ।

**तात्पर्यम्** – सत्त्वगुणात् विवेकः सम्भवति । रजोगुणात् तृष्णा । तमोगुणात् अज्ञानप्रयुक्तौ मोहप्रमादौ सम्भवतः ।

**व्याकरणम्** – प्रमादश्च मोहश्च प्रमादमोहौ – द्वन्द्वः । न ज्ञानम् अज्ञानम् – नञ्तत्पुरुषः ।

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥14.18॥**

**पदार्थः** – सत्त्वस्थाः = सात्त्विकाः, ऊर्ध्वम् = ऊर्ध्वलोकम्, राजसाः = रजोगुणप्रधानाः, मध्ये = मनुष्यलोके, जघन्यगुणवृत्तिस्थाः = नीचगुणप्रवृत्तिसंस्थिताः, तामसाः = तमोगुणप्रधानाः, अधः = नीचलोकम् ।

**अन्वयः** – सत्त्वस्थाः ऊर्ध्वं गच्छन्ति । राजसाः मध्ये तिष्ठन्ति । जघन्यगुणवृत्तिस्थाः तामसाः अधः गच्छन्ति ।

**तात्पर्यम्** – सात्त्विकाः ऊर्ध्वलोकं प्राप्नुवन्ति । राजसाः मध्ये मनुष्यलोके तिष्ठन्ति । नीचगुणप्रवृत्तौ वर्तमानाः तु तमोगुणप्रधानाः नीचलोकं यान्ति ।

**माध्वमतम्**–ऊर्ध्वलोकम् = जनलोकादिम् ऊर्ध्वलोकम्, मध्ये = स्वर्लोकः इत्यादिं मर्त्यलोकम्, अधः = नरकलोकम् ।

**व्याकरणम्** – सत्त्वे तिष्ठन्ति इति सत्त्वस्थाः – कर्तरि कः उपपदसमासश्च । रजः एषाम् एषु वा अस्तीति राजसाः – मतुबर्थिकः अच् । जघन्यः गुणः जघन्यगुणः – कर्मधारयः । जघन्यगुणस्य वृत्तिः जघन्यगुणवृत्तिः – षष्ठीतत्पुरुषः । जघन्यगुणवृत्तौ तिष्ठन्तीति जघन्यगुणवृत्तिस्थाः – कर्तरि कः उपपदसमासश्च । तमः एषाम् एषु वा अस्तीति तामसाः – मतुबर्थिकः अच् ।

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥14.19॥**

**पदार्थः** – द्रष्टा = समीक्षकः विद्वान्, गुणेभ्यः = सत्त्वादिभ्यः, अन्यम् = इतरम्, अनुपश्यति = अवलोकते, परम् = व्यतिरिक्तम्, वेत्ति = जानाति, मद्भावम् = मत्स्वरूपम्, अधिगच्छति = लभते ।

**अन्वयः**– द्रष्टा यदा गुणेभ्यः अन्यं कर्तारं न अनुपश्यति (आत्मानम्) गुणेभ्यः च परं वेत्ति सः मद्भावम् अधिगच्छति ।

**तात्पर्यम्** – अत्र यावन्ति कर्माणि भवन्ति तानि सर्वाणि गुणाः एव कुर्वन्ति, न तु आत्मा । स च गुणेभ्यो व्यतिरिक्तः केवलं कर्मणां साक्षिभूतः इति पुरुषः यदा जानाति तदा मोक्षं प्राप्नोति ।

**माध्वमतम्**– यः गुणेभ्यः परिणामिकर्तारम् अन्यं न पश्यति परमात्मा गुणेभ्यः उत्तमः इति च पश्यति सः मुक्तः भवति ।

**गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥14.20॥**

**पदार्थः** – देही = आत्मा, देहसमुद्भवान् = शरीरकारणभूतान्, अतीत्य = अतिक्रम्य, जन्ममृत्युजरादुःखैः = जननमरणजराक्लेशैः, विमुक्तः = त्यक्तः, अमृतम् = मोक्षम्, अश्नुते = अनुभवति ।

**अन्वयः** – देही देहसमुद्भवान् एतान् त्रीन् गुणान् अतीत्य जन्ममृत्युजरादुःखैः विमुक्तः अमृतम् अश्नुते ।

**तात्पर्यम्** – सत्त्वादयः त्रयो गुणाः बुद्धौ वर्तमानाः देहस्य प्राप्तौ कारणीभूताः । तादृशान् एतान् गुणान् यः अतिवर्तते सः जन्ममृत्युजरायुक्तात् संसारात् मुक्तिं प्राप्नोति ।

**व्याकरणम्** – समुद्भवति एभ्यः इति समुद्भवाः – अपादाने अप्, समुत्पत्तिहेतवः इत्यर्थः । देहस्य समुद्भवाः देहसमुद्भवाः, तान् – षष्ठीतत्पुरुषः । जन्म च मृत्युः च जरा च जन्ममृत्युजराः – द्वन्द्वः । जन्ममृत्युजराः एव दुःखानि जन्ममृत्युजरादुःखानि, तैः – कर्मधारयः ।

**अर्जुन उवाच** – **कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥14.21॥**

**पदार्थः** – लिङ्गैः = चिह्नैः, अतीतः = अतिक्रान्तः, किमाचारः = कीदृशाचारः, अतिवर्तते = अतिक्राम्यति।

**अन्वयः** – प्रभो ! कैः लिङ्गैः एतान् त्रीन् गुणान् अतीतः भवति । किमाचारः कथं च एतान् त्रीन् गुणान् अतिवर्तते ।

**तात्पर्यम्** – कृष्ण ! पुरुषः कश्चित् एतान् त्रीन् गुणान् अतीतः इति कथं ज्ञायते ? यदि चिह्नैः इत्युच्यते तर्हि तानि चिह्नानि कानि ? तस्य पुरुषस्य आचारोऽपि कीदृशः वर्तेत ? सर्वमिदम् उच्यताम् ।

**व्याकरणम्** – कः आचारः यस्य सः किमाचारः – बहुव्रीहिः ।

**श्रीभगवान् उवाच – प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥14.22॥**
**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥14.23॥**
**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥14.24॥**
**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥14.25॥**

**पदार्थः** – प्रकाशम् = सत्त्वकार्यम्, प्रवृत्तिम् = रजःकार्यम्, मोहम् = तमःकार्यम्, सम्प्रवृत्तानि = सम्प्राप्तानि, निवृत्तानि = अतीतानि, उदासीनवत् = तटस्थवत्, आसीनः = तिष्ठन्, विचाल्यते = प्रच्याव्यते, अवतिष्ठति = तिष्ठति, इङ्गते = चरति, समदुःखसुखः = क्लेशानन्दयोः समानः, स्वस्थः = प्रसन्नः, समलोष्टाश्मकाञ्चनः = मृत्पाषाणसुवर्णेषु समानः, तुल्यनिन्दात्मसंस्तुतिः = दूषणप्रशंसयोः समानः, मानापमानयोः = मानपराभवयोः, मित्रारिपक्षयोः = सुहृत्शत्रुपक्षयोः, सर्वारम्भपरित्यागी = सर्वकर्मसन्यासी ।

**अन्वयः** – पाण्डव ! प्रकाशं च प्रवृत्तिं च मोहम् एव च सम्प्रवृत्तानि न द्वेष्टि, निवृत्तानि न काङ्क्षति । यः उदासीनवत् आसीनः गुणैः न विचाल्यते, यः गुणाः वर्तन्ते इति एव अवतिष्ठति न इङ्गते । समदुःखसुखः, स्वस्थः, समलोष्टाश्मकाञ्चनः, तुल्यप्रियाप्रियः, धीरः, तुल्यनिन्दात्मसंस्तुतिः, मानापमानयोः तुल्यः, मित्रारिपक्षयोः तुल्यः, सर्वारम्भपरित्यागी सः गुणातीतः उच्यते ।

**तात्पर्यम्** – अर्जुन ! सत्त्वादीनां त्रयाणां यानि कार्याणि सुखप्रवृत्तिमोहादीनि तेषु प्राप्तेषु सत्सु यः प्रातिकूल्य-बुद्ध्या न द्वेषं याति, निवृत्तेषु आनुकूल्यबुद्ध्या पुनः न आकाङ्क्षां करोति, यः उदासीनवत् तिष्ठन् गुणकार्यैः सुखदुःखमोहैः विचालयितुं न शक्यते, यः गुणाः स्वकार्येषु एव वर्तन्ते न तैः मम कोऽपि सम्बन्धः इति न प्रतिकर्तुम् इच्छति, यः सुखदुःखयोः मृत्पिण्डपाषणसुवर्णेषु हिताहितयोः श्लाघनप्रशंसयोः मानापमानयोः मित्रशत्रुपक्षयोश्च समानः वर्तते, यश्च निष्कामबुद्ध्या कर्म करोति सः गुणत्रयम् अतीतः इति जानीहि ।

**माध्वमतम्**–स्वस्थः = प्रायेण निर्विकारः, धीरः = विष्णुमाहात्म्यरूपज्ञानवान् ।

**व्याकरणम्** – उदासीनेन तुल्यः उदासीनवत् – तुल्यार्थे वतिप्रत्ययः । दुःखं च सुखं च दुःखसुखे – द्वन्द्वः । समे दुःखसुखे यस्य सः समदुःखसुखः – बहुव्रीहिः । लोष्टश्च अश्मा च काञ्चनं च लोष्टाश्मकाञ्चनानि – द्वन्द्वः । समानि लोष्टाश्मकाञ्चनानि यस्य सः समलोष्टाश्मकाञ्चनः – बहुव्रीहिः । प्रियश्च अप्रियश्च प्रियाप्रियौ – द्वन्द्वः । तुल्यौ प्रियाप्रियौ यस्य सः तुल्यप्रियाप्रियः – बहुव्रीहिः । निन्दा च आत्मसंस्तुतिश्च निन्दात्मसंस्तुती – द्वन्द्वः । तुल्ये निन्दात्मसंस्तुती यस्य सः तुल्यनिन्दात्मसंस्तुतिः – बहुव्रीहिः ।

मानश्च अपमानश्च मानापमानौ, तयोः – द्वन्द्वः । मित्रं च अरिश्च मित्रारी – द्वन्द्वः । मित्रर्योः पक्षौ मित्रारिपक्षौ, तयोः – षष्ठीतत्पुरुषः । सर्वे आरम्भाः सर्वारम्भाः – कर्मधारयः । सर्वारम्भाणां परित्यागी सर्वारम्भपरित्यागी – षष्ठीतत्पुरुषः।

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ।।14.26।।**

**पदार्थः** – अव्यभिचारेण = व्यभिचाररहितेन, भक्तियोगेन = भक्तिसाधनेन, समतीत्य = समतिक्रम्य, ब्रह्मभूयाय = मोक्षाय, कल्पते = अर्हति ।

**अन्वयः** – यः च अव्यभिचारेण भक्तियोगेन मां सेवते सः एतान् गुणान् समतीत्य ब्रह्मभूयाय कल्पते ।

**तात्पर्यम्** – यः मानवः व्यभिचाररहितेन भक्तिसाधनेन च मां भजते सः मानवः एतान् गुणान् समतिक्रम्य मोक्षे समर्थो भवति ।

**माध्वमतम्**– नित्यभक्त्याख्येन उपायेन यः परमात्मानं सेवते सः चित्प्रकृतिवत् विष्णुप्रियः (ब्रह्मभूयः) भवति ।

**व्याकरणम्** – न विद्यते व्यभिचारः यस्य सः अव्यभिचारः, तेन – नञ्तत्पुरुषः । भक्तेः योगः भक्तियोगः, तेन – षष्ठीतत्पुरुषः । ब्रह्मणो भावः ब्रह्मभूयम् । ब्रह्मत्वम् इत्यर्थः ।

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ।।14.27।।**

**पदार्थः** – ब्रह्मणः = परमात्मनः, प्रतिष्ठा = स्थानम्, अमृतस्य = मृत्युरहितस्य, अव्ययस्य = अक्षरस्य, शाश्वतस्य = नित्यस्य, ऐकान्तिकस्य = अव्यभिचारिणः ।

**अन्वयः** – अहं हि ब्रह्मणः प्रतिष्ठा अमृतस्य अव्ययस्य च शाश्वतस्य धर्मस्य च ऐकान्तिकस्य सुखस्य च ।

**तात्पर्यम्** – अहं ब्रह्मणः, नाशरहितस्य मोक्षस्य, शाश्वतस्य च धर्मस्य, दुःखरहितस्य सुखस्य च प्रतिष्ठा अस्मि तस्मात् हेतोः तादृशः पुरुषः ब्रह्मभूयाय कल्पते इति यन्मया पूर्वमुक्तम् तत् युक्तमेव । नाहं कदापि असत्यं ब्रवीमि इति विज्ञेयम् ।

**माध्वमतम्**– परमात्मा महालक्ष्म्याः मुक्तवर्गस्य मोक्षस्य चाधारः । तस्मात् भगवदवियोगिनीं महालक्ष्मीं प्राप्तः मुक्तः तमेव प्राप्नोति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।।

### श्रीमद्भगवद्गीता

अथ पञ्चदशोऽध्यायः

## पुरुषोत्तमयोगः

**श्रीभगवानुवाच – ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥15.1॥**

**पदार्थः** – ऊर्ध्वमूलम् = ऊर्ध्वस्थितपरमात्ममूलम्, अधःशाखम् = नीचस्थितकार्योपाधिशाखम्, अश्वत्थम् = संसारवृक्षम्, अव्ययम् = अनाद्यन्तम्, प्राहुः = वर्णयन्ति, छन्दांसि = वेदाः, पर्णानि = पत्राणि, वेद = विजानाति, वेदवित् = वेदज्ञः ।

**अन्वयः** – यस्य छन्दांसि पर्णानि (तादृशम्) अश्वत्थम् ऊर्ध्वमूलम् अधःशाखम् अव्ययं प्राहुः । यः तं वेद सः वेदवित् ।

**तात्पर्यम्** – अयं संसारः कश्चित् अश्वत्थवृक्षः । तस्य मूलं पुरुषोत्तमः । सः ऊर्ध्वं वर्तते । कार्योपाधयः हिरण्यगर्भादयः तस्य शाखाः अधः वर्तन्ते । तस्य पर्णानि वेदाः । तादृशः अश्वत्थवृक्षः नश्वरोऽपि प्रवाहवत् अनश्वरः । ईदृशं वृक्षं यः सम्यक् वेत्ति सः वेदज्ञः इति कथ्यते ।

**माध्वमतम्** – संसारः अश्वत्थवृक्षः इव वर्तते । विष्णुः चिदचित्प्रकृतिश्च अस्य मूलम् । महदहङ्कारबुद्धितत्त्वानि, पञ्च भूतानि तदभिमानिदेवताश्च शाखाः । छन्दांसि तदभिमानिदेवताश्च पर्णानि । तदेवं यो वेत्ति सः वेदार्थज्ञानी ।

**व्याकरणम्** – ऊर्ध्वं मूलं यस्य सः ऊर्ध्वमूलः, तम् – बहुव्रीहिः । अधः शाखाः यस्य सः अधःशाखः, तम् – बहुव्रीहिः । न विद्यते व्ययः सः अव्ययः, तम् – बहुव्रीहिः । वेदं वेत्ति इति वेदवित् – कर्तरि क्विप् उपपदसमासश्च ।

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥15.2॥**

**पदार्थः** – गुणप्रवृद्धाः = गुणप्ररूढाः, विषयप्रवालाः = शब्दादिविषयपल्लवाः, ऊर्ध्वम् = उपरि, प्रसृताः = व्याप्ताः, मनुष्यलोके = मानवलोके, अनुसन्ततानि = विरूढानि, कर्मानुबन्धीनि = कर्मानुसारीणि ।

**अन्वयः** – तस्य गुणप्रवृद्धाः विषयप्रवालाः शाखाः अधः ऊर्ध्वं च प्रसृताः । मनुष्यलोके अनुसन्ततानि कर्मानुबन्धीनि मूलानि अधः च ।

**तात्पर्यम्** – तस्य अश्वत्थवृक्षस्य हिरण्यगर्भादयः शाखाः याः ऊर्ध्वम् अधश्च प्रसृताः सन्ति । अधश्च कर्मानुसारिणः जीवाः । अवान्तरमूलानि यानि वृक्षस्य अधः ऊर्ध्वं च विमुखं प्ररूढानि ।

**व्याकरणम्** – गुणैः प्रवृद्धाः गुणप्रवृद्धाः – तृतीयातत्पुरुषः । विषयाः एव प्रवालाः विषयप्रवालाः – कर्मधारयः। कर्माणि अनुबध्यन्ते तच्छीलानि कर्मानुबन्धीनि – ताच्छीलिके कर्तरि णिनिप्रत्ययः उपपदसमासश्च । मनुष्याणां लोकः मनुष्यलोकः, तस्मिन् – षष्ठीतत्पुरुषः ।

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥15.3॥**

**ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥15.4॥**

**पदार्थः** - सम्प्रतिष्ठा = स्थितिः (मध्यः), सुविरूढमूलम् = सुदृढमूलम्, असङ्गशस्त्रेण = वैराग्यायुधेन, छित्त्वा = द्विधा कृत्वा, पदम् = स्थानम्, परिमार्गितव्यम् = अन्वेष्टव्यम्, पुराणी = प्राचीना, प्रवृत्तिः = संसारप्रवृत्तिः, प्रसृता = प्रवृत्ता, आद्यम् = प्रथमम्, पुरुषम् = परमपुरुषम्, प्रपद्ये = प्राप्नोमि ।

**अन्वयः** - अस्य रूपम् इह न उपलभ्यते तथा न अन्तः न च आदिः न च सम्प्रतिष्ठा । सुविरूढमूलम् एनम् अश्वत्थं दृढेन असङ्गशस्त्रेण छित्त्वा, ततः यतः पुराणी प्रवृत्तिः प्रसृता तम् एव च आद्यं पुरुषं प्रपद्ये इति मत्वा यस्मिन् गताः भूयः न निवर्तन्ति तत् पदं परिमार्गितव्यम् ।

**तात्पर्यम्** - अस्य अश्वत्थवृक्षस्य ऊर्ध्वमूलत्वादिकं यत्स्वरूपं पूर्वमुक्तं तत् केनापि ज्ञातुं न शक्यते तथा अस्य आदिः मध्यः अन्तश्च ज्ञातुं न शक्यते । तादृशम् एनम् अनिष्टफलजनकम् अश्वत्थवृक्षं वैराग्यशस्त्रेण विनाश्य सर्वेऽपि पुरुषाः तं महापुरुषं ध्यायन्तः तादृशं स्थानं शोधयेयुः यत् स्थानं प्राप्ताः पुनः न संसारं प्राप्नुवन्ति, यस्मादेव च अयमनादिः संसारः सम्पन्नो वर्तते ।

**माध्वमतम्**-विकारित्वात् जगत् एकरूपत्वं नोपलभ्यते । जगद्वृक्षम् अनुप्रविष्टः परमात्मापि न दृश्यते । तदेतं वृक्षं वैराग्यसहितेन ज्ञानासिना छित्त्वा ततः पुरुषोत्तमः अन्वेष्टव्यः ।

**रामानुजीयमतम्** - पुरुषं प्रपद्ये यतः प्रवृत्तिः इत्यत्र - प्रपद्येत्, प्रपद्य इयतः प्रवृत्तिः इति वा पाठः । आद्यपक्षे प्रपद्येद्यतः इति पाठः बोध्यम् ।

**व्याकरणम्** - सुविरूढं मूलं यस्य सः सुविरूढमूलः, तम् - बहुव्रीहिः । न सङ्गः असङ्गः - नञ्तत्पुरुषः । असङ्गः एव शस्त्रम् असङ्गशस्त्रम्, तेन - कर्मधारयः । परि इत्युपसर्गपूर्वकात् मार्ग इति धातोः कर्मणि तव्यत्प्रत्यये परिमार्गितव्यम् इति रूपम्, अन्वेषणीयम् इत्यर्थः ।

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥15.5॥**

**पदार्थः** - निर्मानमोहाः = मोहाभिमानविवर्जिताः, जितसङ्गदोषाः = विगतासक्तिकल्मषाः, अध्यात्मनित्याः = आत्मध्यानपरायणाः, विनिवृत्तकामाः = अपगतवाञ्छाः, सुखदुःखसञ्ज्ञैः = सुखदुःखनामकैः, अमूढाः = विवेकिनः, अव्ययम् = अविनाशि ।

**अन्वयः** - निर्मानमोहाः जितसङ्गदोषाः अध्यात्मनित्याः विनिवृत्तकामाः सुखदुःखसञ्ज्ञैः द्वन्द्वैः विमुक्ताः अमूढाः तत् अव्ययं पदं गच्छन्ति ।

**तात्पर्यम्** - येषाम् अभिमानः नास्ति मोहश्च, येषु विषयासक्तिरूपं कश्मलं नास्ति, ये सर्वदा आत्मध्याने रताः सन्ति, येषां विषयेषु तृष्णा नास्ति, ये शीतोष्णयोः सुखदुःखयोश्च निर्विकाराः ते एव धीराः इमम् अश्वत्थवृक्षं विनाश्य तदव्ययं पदं प्राप्तुम् अर्हन्ति ।

**व्याकरणम्** - मानश्च मोहश्च मानमोहौ - द्वन्द्वः । निर्गतौ मानमोहौ येभ्यः ते निर्मानमोहाः - बहुव्रीहिः । सङ्गः इति दोषः सङ्गदोषः - कर्मधारयः । जितः सङ्गदोषः यैः ते जितसङ्गदोषाः - बहुव्रीहिः । आत्मनि इति

अध्यात्मम् – अव्ययीभावः । अध्यात्मं नित्याः अध्यात्मनित्याः – सुप्समासः । विनिवृत्तः कामः येभ्यः ते विनिवृत्तकामाः – बहुव्रीहिः । सुखदुःखे संज्ञे येषां तानि सुखदुःखसंज्ञानि, तैः – बहुव्रीहिः । न मूढाः अमूढाः – नञ्तत्पुरुषः । न विद्यते व्ययः यस्य तत् अव्ययम् – बहुव्रीहिः ।

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥15.6॥**

**पदार्थः** – भासयते = प्रकाशयति, शशाङ्कः = चन्द्रः, पावकः = अग्निः, धाम = स्थानम् ।

**अन्वयः** – सूर्यः तत् न भासयते, न शशाङ्कः, न पावकः यत् गत्वा न निवर्तन्ते तत् मम परमं धाम ।

**तात्पर्यम्** – यत् पदं न सूर्यः प्रकाशयितुं शक्नोति, न चन्द्रः, नापि अग्निः यत् पाप्तश्च पुरुषः पुनः न संसारक्लेशम् अनुभवति तदेव मम श्रेष्ठं स्थानम् ।

**रामानुजीयमतम्** – तद्धाम परमं मम इत्यस्य परमं ज्योतिः मदीयम् इत्यर्थः ।

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥15.7॥**

**पदार्थः** – जीवलोके = संसारे, सनातनः = चिरन्तनः, अंशः = अवयवः, जीवभृतः = जीवत्वं प्राप्तः, प्रकृतिस्थानि = प्रकृतौ विद्यमानानि, मनःषष्ठानि = चित्तषष्ठानि, कर्षति = आकर्षति ।

**अन्वयः** – जीवलोके मम सनातनः अंशः एव जीवभूतः । प्रकृतिस्थानि मनःषष्ठानि इन्द्रियाणि कर्षति ।

**तात्पर्यम्** – योऽयं संसारः तत्र जीवः ममैव चिरन्तनः कश्चित् अवयवः । यद्यपि सुप्तौ प्रलये च तस्य मयि लयो वर्तते तथापि मायाशालित्वात् सगुणे एव मयि लयः, न तु मायासम्बन्धराहित्यात् निर्विशेषे ब्रह्मणि । ततश्च सुषुप्तौ प्रलये वा समाप्ते पुनः संसाराय निर्गच्छन् सः कर्मवशात् शरीरं प्राप्नुवन् भोगार्थं मनःप्रधानानि सर्वाण्यपि इन्द्रियाणि प्राप्नोति ।

**माध्वमतम्**– ब्रह्मादिजीवशरीरे अनादिनित्यः जीवरूपः (ब्रह्मरुद्रादिः) ममैव भिन्नांशः । न तु मत्स्यादिवत् स्वरूपांशः । भिन्नोऽपि सूर्यस्य खद्योतवत् किञ्चित्सादृश्यमात्रेण अंशः इत्युच्यते ।

**रामानुजीयमतम्**– ममैवांश इत्यस्य मद्विभूतिमतः ममैव अंश इत्यर्थः ।

**व्याकरणम्** – जीवानां लोकः जीवलोकः, तस्मिन् – षष्ठीतत्पुरुषः । मनः षष्ठं येषु तानि, मनःषष्ठानि – बहुव्रीहिः । प्रकृतौ तिष्ठन्तीति प्रकृतिस्थानि – कर्तरि कप्रत्ययः उपपदसमासश्च ।

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥15.8॥**

**पदार्थः** – ईश्वरः = जीवः, अवाप्नोति = लभते, उत्क्रामति = निर्गच्छति, आशयात् = आधारात् कुसुमादेः, गन्धान् इव = सौरभम् इव, गृहीत्वा = स्वीकृत्य, संयाति = गच्छति ।

**अन्वयः** – ईश्वरः यत् शरीरम् अवाप्नोति, यत् च अपि उत्क्रामति वायुः आशयात् गन्धान् इव एतानि गृहीत्वा संयाति ।

**तात्पर्यम्** – सुषुप्तौ प्रलये वा समाप्ते सविशिषे ब्रह्मणि लीनः जीवः पूर्वस्मात् शरीरात् निर्गत्य स्वकर्मवशात्

शरीरान्तरं यदा प्राप्नोति तदा वायुः पुष्पात् गन्धमिव पूर्वस्मात् शरीरात् सर्वाण्यपि इन्द्रियाणि गृहीत्वैव शरीरान्तरं प्रविशति। ततश्च सविशेषे ब्रह्मणि लीनस्यैव संसारं प्रति पुनरागमनम्, न पुनः उपाधिभूतस्य शरीरस्य अनाशात् निर्विशेषे ब्रह्मणि लीनस्य इति मन्तव्यम्।

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥15.9॥**

**पदार्थः** - श्रोत्रम् = श्रवणम्, चक्षुः = नेत्रम्, स्पर्शनं च = त्वचं च, रसनम् = जिह्वाम्, घ्राणम् = नासिकाम्, मनः = चित्तम्, अधिष्ठाय = आश्रित्य, विषयान् = शब्दादीन्, उपसेवते = अनुभवति।

**अन्वयः** - श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणं च मनः च अधिष्ठाय अयम् एव विषयान् उपसेवते।

**तात्पर्यम्** - शरीरान्तरं प्रविष्टोऽयं जीवः श्रवणं नेत्रं त्वचं जिह्वां नासिकां चित्तं कर्मेन्द्रियाणि च आश्रित्यैव शब्दादीन् अनुभवति।

**माध्वमतम्** - परमात्मा जीवगतेषु श्रोत्रादिषु इन्द्रियेषु प्रवर्तकत्वेन स्थित्वा सद्विषयान् भुङ्क्ते।

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥15.10॥**

**पदार्थः** - विमूढाः = अविवेकिनः, उत्क्रामन्तम् = ऊर्ध्वं गच्छन्तम्, स्थितम् = तिष्ठन्तम्, भुञ्जानम् = अनुभवन्तम्, गुणान्वितम् = गुणसहितम्, ज्ञानचक्षुषः = ज्ञाननेत्राः।

**अन्वयः** - विमूढाः उत्क्रामन्तं स्थितं वा अपि भुञ्जानं गुणान्वितं वा न अनुपश्यन्ति, ज्ञानचक्षुषः पश्यन्ति।

**तात्पर्यम्** - पूर्वं शरीरं विहाय शरीरान्तरं गच्छन्तम्, तच्छरीरे तिष्ठन्तम्, इन्द्रियैः विषयान् अनुभवन्तं वा एनं जीवं मूढाः न कदापि ज्ञातुं शक्नुवन्ति। ज्ञाननेत्राः पुनः अवश्यं तं ज्ञातुं शक्नुवन्ति।

**माध्वमतम्** - किन्तु मूढाः परमात्मनः शुभफलभोक्तृत्वं न पश्यन्ति। ज्ञानिनः पश्यन्ति।

**व्याकरणम्** - गुणैः अन्वितः गुणान्वितः, तम् - तृतीयातत्पुरुषः। ज्ञानमेव चक्षुः येषां ते ज्ञानचक्षुषः- बहुव्रीहिः।

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥15.11॥**

**पदार्थः** - यतन्तः = प्रयत्नवन्तः, योगिनः = समाहितचित्ताः, अवस्थितम् = विद्यमानम्, अकृतात्मानः = असंस्कृतात्मानः, अचेतसः = अविवेकिनः।

**अन्वयः** - यतन्तः योगिनः च एनम् आत्मनि अवस्थितं पश्यन्ति। यतन्तः अपि अकृतात्मानः अचेतसः एनं न पश्यन्ति।

**तात्पर्यम्** - ध्यानादिभिः सततं प्रयतमाना एव ज्ञानिनः देहे वर्तमानमिमं द्रष्टुं शक्नुवन्ति। किन्तु शास्त्रादिभिः प्रयतमाना अपि कश्मलचित्ताः देहे वर्तमानमपि इमं द्रष्टुं न शक्नुवन्ति।

**माध्वमतम्** - ज्ञानोपायम् अवलम्ब्य यतमानाः ज्ञानं प्राप्य एनं पश्यन्ति। अशुद्धबुद्धयः यतमानाः नैनं पश्यन्ति।

**व्याकरणम्** - न कृतः अकृतः - नञ्तत्पुरुषः। अकृतः आत्मा येषां ते अकृतात्मानः - बहुव्रीहिः। न विद्यते चेतः येषां ते अचेतसः - नञ्बहुव्रीहिः।

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥15.12॥**

**पदार्थः** – आदित्यगतम् = सूर्याश्रितम्, तेजः = दीप्तिः, अखिलम् = समग्रम्, भासयते = प्रकाशयति, चन्द्रमसि = चन्द्रे, अग्नौ = वह्नौ, मामकम् = मदीयम्, विद्धि = जानीहि ।

**अन्वयः** – यत् अखिलं जगत् भासयते (तादृशम्) आदित्यगतं तेजः, यत् चन्द्रमसि, यत् च अग्नौ तत् तेजः मामकं विद्धि ।

**तात्पर्यम्** – सूर्ये चन्द्रे अग्नौ च वर्तमानं यत् तेजः जगत् भासयते तत् मम तेजः इति जानीहि ।

**व्याकरणम्** – आदित्यं गतम् आदित्यगतम् – द्वितीयातत्पुरुषः । मम इदं मामकम् – इदमर्थे अण् प्रकृतेः च अस्मद्शब्दस्य ममक इति आदेशः । मत्सम्बन्धि इत्यर्थः ।

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥15.13॥**

**पदार्थः** – गाम् = भूमिम्, आविश्य = प्रविश्य, ओजसा = बलेन, भूतानि = चराचराणि, धारयामि =वहामि, रसात्मकः = रसस्वभावः, सोमः = चन्द्रः, ओषधीः = फलपाकान्तानि सस्यानि, पुष्णामि = पोषयामि ।

**अन्वयः** – अहं गाम् आविश्य च ओजसा भूतानि धारयामि, रसात्मकः सोमः भूत्वा सर्वाः ओषधीः च पुष्णामि।

**तात्पर्यम्** – अहं धूलिराशितुल्याम् इमां पृथिवीं सर्वदा दृढीकुर्वन् स्वबलेन भूतानि धारयामि । अन्यथा सिकताराशिवत् इयं पृथिवी विच्छिद्येत । एवम् अहमेव रसरूपः चन्द्रः सन् पृथिव्याम् अस्यां जायमानानि सर्वाण्यपि व्रीहिमाषमुद्गादीनि संवर्धयामि ।

**व्याकरणम्** – रसः आत्मा यस्य सः रसात्मकः – बहुव्रीहिः ।

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥15.14॥**

**पदार्थः** – वैश्वानरः = जठराग्निः, प्राणिनाम् = प्राणवताम्, आश्रितः = प्राप्तः, प्राणापानसमायुक्तः = प्राणापानवायुसंयुक्तः, चतुर्विधम् = चतुष्प्रकारम्, पचामि = पक्वं करोमि ।

**अन्वयः** – अहं वैश्वानरः भूत्वा प्राणिनां देहम् आश्रितः प्राणापानसमायुक्तः चतुर्विधम् अन्नं पचामि ।

**तात्पर्यम्** – चेतनाः यदन्नं खादन्ति तत् भक्ष्यं भोज्यं लेह्यं चोष्यं चेति चतुर्विधं वर्तते । तत्र अपूपादि भक्ष्यम्, पायसादि भोज्यम्, गुडादि लेह्यम्, इक्षुदण्डादि च चोष्यमिति विवेकः । चेतनानाम् इदं चतुर्विधमपि अन्नम् अहं जठराग्निः भूत्वा प्राणवायुम् अपानवायुं च अवलम्ब्य सम्यक् जीर्णीकरोमि ।

**व्याकरणम्** – प्राणश्च अपानश्च प्राणापानौ – द्वन्द्वः । प्राणापानाभ्यां समायुक्तः प्राणापानसमायुक्तः – तृतीयातत्पुरुषः । चतस्रो विधाः यस्य तत् चतुर्विधम् – बहुव्रीहिः ।

**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥15.15॥**

**पदार्थः** - सन्निविष्टः = संस्थितः, स्मृतिः = स्मरणम्, अपोहनम् = अपहरणम्, मत्तः = मत्प्रभावात्, वेद्यः = ज्ञेयः, वेदान्तकृत् = उपनिषत्कारकः, वेदवित् = वेदाभिज्ञः ।

**अन्वयः** - अहं सर्वस्य च हृदि सन्निविष्टः । मत्तः एव स्मृतिः ज्ञानम् अपोहनं च । सर्वैः वेदैः च अहम् एव वेद्यः वेदान्तकृत् वेदवित् च ।

**तात्पर्यम्** - अहं सर्वेषामपि हृदये तिष्ठामि । मत्प्रभावात् एव सर्वेषां स्मृतिः ज्ञानम्, तयोः नाशश्च । अहमेव सकलैः वेदैः ज्ञेयः । अहमेव उपनिषदां कर्ता । अहमेव वेदज्ञश्च ।

**रामानुजीयमतम्** - ज्ञानम् - इन्द्रियलिङ्गागमयोगजः वस्तुनिश्चयः । वेदान्तकृत् - अन्तकृति फलकृति वेदोदित-फलस्य प्रदाता ।

**माध्वमतम्**- वेदान्तकृत् = ब्रह्मसूत्रकृत् ।

**व्याकरणम्** - वेदानाम् अन्तः वेदान्तः - षष्ठीतत्पुरुषः । वेदान्तं करोति इति वेदान्तकृत् - कर्तरि क्विप् उपपद-समासश्च । वेदान् वेत्ति इति वेदवित् - कर्तरि क्विप् उपपदसमासश्च ।

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥15.16॥**

**पदार्थः** - क्षरः = विनाशी, अक्षरः = अविनाशी, भूतानि = विकारजातानि, कूटस्थः = शिलाराशिः इव स्थितः ।

**अन्वयः** - लोके क्षरः च अक्षरः एव च (इति) इमौ पुरुषौ द्वौ । सर्वाणि भूतानि क्षरः कूटस्थः अक्षरः उच्यते ।

**तात्पर्यम्** - अत्र लोके क्षरः अक्षरः चेति द्वौ पुरुषौ स्तः । तत्र क्षरः पुरुषो नाम महदादिः भूतान्तः सर्वोऽपि कार्यरूपः राशिः । स च विनाशी । अक्षरः मायाशब्देन या व्यवह्रियते सा प्रकृतिः । अयं निर्विकारत्वेन स्थितः कारणभागः ।

**माध्वमतम्**- शरीरक्षरणात् चतुर्मुखादिजीवराशिः क्षरपदवाच्यः । आकाशवत् निर्विकारत्वात् (शरीर-क्षरणाभावात्) श्रीः अक्षरपदवाच्या ।

**रामानुजीयमतम्** - क्षरपुरुषः - अचित्संसृष्टानि सर्वभूतानि । अक्षरपुरुषः कूटस्थः अचित्संसर्गवियुक्तः मुक्तात्मा ।

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥15.17॥**

**पदार्थः** - परमात्मा = परब्रह्म, उदाहृतः = कथितः, ईश्वरः = प्रभुः, लोकत्रयम् = भुवनत्रयम्, आविश्य = प्रविश्य, बिभर्ति = धारयति ।

**अन्वयः** - उत्तमः पुरुषः तु अन्यः परमात्मा इति उदाहृतः अव्ययो यः लोकत्रयम् आविश्य बिभर्ति ।

**तात्पर्यम्** - आभ्याम् उभाभ्यामपि भिन्नः अन्यः कश्चित् पुरुषो वर्तते । सः उत्तमः पुरुषः । स एव परमात्मा यः त्रीन् अपि लोकान् व्याप्य तान् बिभर्ति । एवं कार्यभूतः पदार्थः महदादिः क्षरः, कारणीभूता प्रकृतिः अक्षरः । ताभ्यां व्यतिरिक्तः उत्तमः पदार्थः परमात्मेति भागत्रयम् ।

**माध्वमतम्**- क्षराक्षराभ्याम् उत्तमः पुरुषस्तु भूर्भुवस्वरिति लोकत्रयमाविश्य धत्ते ।

**रामानुजीयमतम्** – उत्तमपुरुषः = अन्यः परमात्मा ।
**व्याकरणम्** – लोकानां त्रयम् लोकत्रयम् – षष्ठीतत्पुरुषः ।

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥15.18॥**

**पदार्थः** – क्षरम् = क्षरपुरुषम्, अतीतः = अतिक्रान्तः, अक्षरात् = अक्षरपुरुषात्, उत्तमः = अतिशयितः, प्रथितः = प्रसिद्धः ।
**अन्वयः** – यस्मात् अहं क्षरम् अतीतः अक्षरात् अपि च उत्तमः अतः लोके वेदे च पुरुषोत्तमः प्रथितः अस्मि ।
**तात्पर्यम्** – अहं नित्यमुक्तत्वात् क्षरं पुरुषम् अतिक्रान्तः इति पुरुषोऽस्मि । नियामकत्वात् अक्षरपुरुषात् उत्तमः इति उत्तमोऽप्यस्मि । तदेवं पुरुषश्च उत्तमश्च इति हेतोः अहं लोके वेदे च पुरुषोत्तमः इति प्रसिद्धिं गतोऽस्मि ।

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥15.19॥**

**पदार्थः** – असम्मूढः = विवेकी, सर्ववित् = सर्वज्ञः, सर्वभावेन = सर्वात्मना ।
**अन्वयः** – भारत ! यः असम्मूढः मां पुरुषोत्तमं जानाति सः सर्ववित् सर्वभावेन भजति ।
**तात्पर्यम्** – अर्जुन ! यः मानवः विवेकी सन् एवं मां पुरुषोत्तमं वेत्ति सः मानवः सर्वज्ञः । सः सर्वप्रकारेण मामेव सेवते ।

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।**
**एतद् बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥15.20॥**

**पदार्थः** – अनघ = अपाप ! गुह्यतमम् = अतिरहस्यम्, शास्त्रम् = अबाधितार्थप्रतिपादकं वाक्यम्, बुद्ध्वा = ज्ञात्वा, बुद्धिमान् = विवेकवान्, कृतकृत्यः = कृतार्थः ।
**अन्वयः** – अनघ ! मया इदं गुह्यतमं शास्त्रम् इति उक्तम् । भारत ! एतत् बुद्ध्वा बुद्धिमान् कृतकृत्यः च स्यात् ।
**तात्पर्यम्** – हे अपाप (अर्जुन) ! एतत् अतिरहस्यं शास्त्रम् इति मया प्रतिपादितम् । भारत ! इदं शास्त्रं ज्ञात्वा भवान् विवेकवान् कृतार्थः च भवेत् ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥

श्रीमद्भगवद्गीता

अथ षोडशोऽध्यायः

## दैवासुरसंपद्विभागयोगः

**श्रीभगवानुवाच** – **अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥16.1॥**
**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥16.2॥**
**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥16.3॥**

**पदार्थः** – अभयम् = अभीरुत्वम्, संत्त्वसंशुद्धिः = चित्तनैर्मल्यम्, ज्ञानयोगव्यवस्थितिः = आत्मज्ञानोपाये तत्परत्वम्, दानम् = वितरणम्, दमः = बाह्येन्द्रियनिग्रहः, यज्ञः = यागः, स्वाध्यायः = वेदाध्ययनम्, तपः = विविधः नियमः, आर्जवम् = ऋजुत्वम् ।

अहिंसा = पीडावर्जनम्, सत्यम् = यथार्थकथनम्, अक्रोधः = कोपाभावः, त्यागः = समर्पणम्, शान्तिः = उपशमः, अपैशुनम् = अपिशुनत्वम्, भूतेषु = प्राणिषु, दया = कृपा, अलोलुप्त्वम् = तृष्णाशून्यत्वम्, मार्दवम् = अक्रौर्यम्, ह्रीः = लज्जा, अचापलम् = अचाञ्चल्यम् ।

तेजः = प्रागल्भ्यम्, क्षमा = सहनम्, धृतिः = धैर्यम्, शौचम् = शुद्धिः, अद्रोहः = अपकारचिन्तनाभावः, न अतिमानिता = अतिमानत्यागः, दैवीम् = देवसम्बन्धिनीम्, सम्पदम् = सम्पत्तिम्, अभिजातस्य = अभिमूखीभूय उत्पन्नस्य ।

**अन्वयः** – भारत ! दैवीं सम्पदम् अभिजातस्य अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः दानं दमः च यज्ञः च स्वाध्यायः तपः आर्जवम् अहिंसा सत्यम् अक्रोधः त्यागः शान्तिः अपैशुनम् भूतेषु दया अलोलुप्त्वं मार्दवं ह्रीः अचापलं तेजः क्षमा धृतिः शौचम् अद्रोहः नातिमानिता च भवन्ति ।

**तात्पर्यम्** – भारत ! देवयोग्यां सम्पदम् अभिलक्ष्य जातस्य पुरुषस्य अभीरुत्वम्, अन्तःकरणनैर्मल्यम् आत्मज्ञानोपाये तत्परत्वम्, दानम्, बाह्येन्द्रियनिग्रहः, यागः, वेदाध्ययनम्, तपः, ऋजुत्वम्, पीडावर्जनम्, यथार्थकथनम्, कोपाभावः, भगवते समर्पणम्, उपशमः, अपिशुनत्वम्, प्राणिषु दया, तृष्णाविरहः, अक्रौर्यम्, लज्जा, अचाञ्चल्यम्, प्रागल्भ्यम्, सहनम्, धृतिः, शुद्धिः, अपकारबुद्धेः अभावः, आत्मनि पूज्यत्वबुद्धेः च अभावः इति एते गुणाः भवन्ति ।

**माध्वमतम्**–ज्ञानयोगव्यवस्थितिः = ज्ञानोपायनिष्ठता, शान्तिः = भगवन्निष्ठता, अचापलम् = स्थैर्यम् ।

**रामानुजीयमतम्** – अलोलुप्त्वम् – अलोलुपत्वम्, अलोलुत्वम् इति वा पाठः । दैवी सम्पत् = देवसम्बन्धिनी सम्पत्, देवाः भगवदाज्ञानुवर्तिशीलाः, तेषां सम्पत् । सा च भगवदाज्ञानुवृत्तिरेव तान् अभिजातस्य अभिमुखीकृत्य जातस्य ।

**व्याकरणम्** – देवानाम् इयं दैवी, ताम् – इदमर्थे अण् स्त्रीत्वे च ङीप् । ज्ञानस्य योगः ज्ञानयोगः – षष्ठीतत्पुरुषः । ज्ञानयोगे व्यवस्थितिः ज्ञानयोगव्यवस्थितिः – सप्तमीतत्पुरुषः । लोलुपस्य भावः लोलुपत्वम् – भावार्थे त्वप्रत्ययः । न लोलुपत्वम् अलोलुपत्वम् – नञ्तत्पुरुषः । अत्र अलोलुप्त्वम् इति अवर्णस्य लोपः आर्षः । चपलस्य भावः चापलम् – भावे अण् । न चापलम्, अचापलम् – नञ्तत्पुरुषः ।

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥16.4॥**

**पदार्थः** – दम्भः – धार्मिकतया आत्मनः ख्यापनम्, पारुष्यम् = परुषवचनम्, आसुरीम् = राक्षसीम्, सम्पदम् = विभवम् ।

**अन्वयः** – पार्थ ! आसुरीं सम्पदम् अभिजातस्य दम्भः दर्पः अभिमानः च क्रोधः पारुष्यम् एव च भवन्ति ।

**तात्पर्यम्** – पार्थ ! आसुरीं सम्पदम् अभिलक्ष्य जातस्य पुरुषस्य वेषभूषादिना आत्मनः धार्मिकतया ख्यापनम्, अहङ्कारः, आत्मनि पूज्यत्वबुद्धिः, कठोरवादित्वम्, अविवेकः च इत्येते गुणाः भवन्ति ।

**माध्वमतम्**– दम्भः = आत्माल्पत्वं ज्ञात्वापि महत्त्वप्रदर्शनम्, दर्पः = सत्यपि भयकारणे मदात् तदभावप्रदर्शनम् ।

**व्याकरणम्** – असुराणाम् इयम् आसुरी, ताम् – इदमर्थे अण्, स्त्रीत्वे च ङीप् ।

**दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥16.5॥**

**पदार्थः** – विमोक्षाय = बन्धनाशाय, निबन्धाय = संसाराय, मता = अभीष्टा, मा शुचः = शोकं मा कार्षीः, दैवीम् = दिव्याम्, सम्पदम् = सम्पत्तिम्, अभिजातः = अभिमुखीभूय समुत्पन्नः ।

**अन्वयः** – पाण्डव ! दैवी सम्पत् विमोक्षाय आसुरी निबन्धाय मता । मा शुचः । दैवीं सम्पदम् अभिजातः असि ।

**तात्पर्यम्** – दैवी सम्पत् संसाररूपं बन्धनं नाशयति, आसुरी तु तदेव बन्धनं जनयति । त्वं शोकं मा कार्षीः । अभयसत्त्वसंशुद्धिप्रभृतयः गुणाः यथा सम्भवन्ति तथा उत्पन्नोऽसि ।

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥16.6॥**

**पदार्थः** – भूतसर्गौ = मनुष्यसृष्टी, दैवः = दिव्यः, आसुरः = राक्षससम्बन्धी ।

**अन्वयः** – पार्थ ! अस्मिन् लोके दैवः आसुरः एव च (इति) द्वौ भूतसर्गौ । दैवः विस्तरशः प्रोक्तः आसुरं मे शृणु ।

**तात्पर्यम्** – अर्जुन ! एतस्मिन् लोके दैवगुणसम्पन्नः राक्षसगुणसम्पन्नः च द्विविधौ मनुष्यौ स्तः । तयोः दैवगुण-सम्पन्नस्य मनुष्यस्य अमानित्वादम्भित्वादिना त्रयोदशे अध्याये, गुणातीतत्वेन चतुर्दशे, निर्मान-मोहत्वादिना च पञ्चदशे अध्याये विस्तरेण निरूपणं कृतम् । आसुरगुणसम्पन्नस्य तु निरूपणम् इदानीं क्रियते, शृणु ।

**व्याकरणम्** – भूतानां सर्गौ भूतसर्गौ – षष्ठीतत्पुरुषः । असुराणाम् अयम् आसुरः – इदमर्थे अण् । देवानाम् अयं दैवः – इदमर्थे अण् ।

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥16.7॥**

**पदार्थः** - आसुराः = असुरगुणसम्पन्नाः, प्रवृत्तिम् = प्रवर्तनम्, निवृत्तिम् = निवर्तनम्, विदुः = जानन्ति, शौचम् = शुद्धिः, आचारः = सदाचारः, सत्यम् = यथार्थकथनम् ।

**अन्वयः** - आसुराः जनाः प्रवृत्तिं च निवृत्तिं च न विदुः । तेषु शौचं न विद्यते । आचारः अपि न, सत्यम् अपि न।

**तात्पर्यम्** - असुरगुणसम्पन्नाः जनाः धर्मे प्रवृत्तिं न जानन्ति, अधर्मात् च निवृत्तिम् । कायिकं वाचिकं मानसिकं चेति यत् त्रिविधं शौचं तत् तेषु न सम्भवति । नापि च यथार्थवादित्वम् ।

**माध्वमतम्**- आसुरस्वभावजनाः विहिते प्रवृत्तिं, निषिद्धे निवृत्तिं च न विदुः ।

**व्याकरणम्** - असुराणाम् इमे आसुराः - इदमर्थे अण् ।

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥16.8॥**

**पदार्थः** - असत्यम् = सत्यभूतवेदादिहीनम्, अप्रतिष्ठम् = अनाधारम्, अनीश्वरम् = नियन्तृरहितम्, आहुः = वर्णयन्ति, अपरस्परसम्भूतम् = स्त्रीपुरुषमिथुनात् जातम्, कामहैतुकम् = कामनिमित्तकम् ।

**अन्वयः** - ते जगत् असत्यम् अप्रतिष्ठम् अनीश्वरम् आहुः । अपरस्परसम्भूतं कामहैतुकम् अन्यत् किम् इति आहुः ।

**तात्पर्यम्** - ते जनाः वदन्ति - अस्मिन् लोके सत्यार्थप्रतिपादकाः वेदपुराणादयः न प्रमाणानि । तारतम्ये स्वभावः एव कारणम्, न तु धर्माधर्मौ । लोकेऽस्मिन् न कोऽपि नियामकः अस्ति । स्त्रीपुरुषद्वन्द्वात् एव जगदिदं समुपन्नम् इति कामः एव जगतः उत्पत्तौ कारणम् । कारणान्तरं सर्वथा नास्ति ।

**व्याकरणम्** - न विद्यते सत्यम् यस्मिन् तत् असत्यम् - बहुव्रीहिः । न विद्यते प्रतिष्ठा यस्मिन् तत् अप्रतिष्ठम् - बहुव्रीहिः । न विद्यते ईश्वरः यस्मिन् तत् अनीश्वरम् - बहुव्रीहिः । अपरः च परः च अपरस्परौ - द्वन्द्वः । अपरस्पराभ्यां सम्भूतम् - अपरस्परसम्भूतम् - तृतीयातत्पुरुषः ।

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥16.9॥**

**पदार्थः** - अवष्टभ्य = अवलम्ब्य, नष्टात्मानः = नष्टचित्ताः, अल्पबुद्धयः = स्वल्पविवेकाः, उग्रकर्माणः = क्रूरकार्याः, अहिताः = शत्रवः, जगतः = लोकस्य, क्षयाय = विनाशाय, प्रभवन्ति = कल्पन्ते ।

**अन्वयः** - एतां दृष्टिम् अवष्टभ्य नष्टात्मानः अल्पबुद्धयः उग्रकर्माणः अहिताः जगतः क्षयाय प्रभवन्ति ।

**तात्पर्यम्** - नष्टचित्ताः मन्दमतयश्च ते जनाः इमां दृष्टिम् अवलम्ब्य क्रूरे कार्ये आसक्ताः शत्रवः सन्तः जगतो नाशाय प्रवर्तन्ते ।

**व्याकरणम्** - नष्टः आत्मा येषां ते, नष्टात्मानः - बहुव्रीहिः । अल्पा बुद्धिः येषां ते अल्पबुद्धयः - बहुव्रीहिः । उग्रं कर्म येषां ते उग्रकर्माणः - बहुव्रीहिः । न हिताः अहिताः - नञ्तत्पुरुषः ।

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥16.10॥**

**पदार्थः** – दुष्पूरम् = अशक्यपूरणम्, कामम् = इच्छाविशेषम्, आश्रित्य = अवलम्ब्य, मोहात् = अविवेकात्, दम्भमानमदान्विताः = दम्भाभिमानगर्वसहिताः, असद्ग्राहान् = दुष्टनिश्चयान्, अशुचिव्रताः = अशुद्धकर्माणः, प्रवर्तन्ते = प्रवृत्ताः भवन्ति ।

**अन्वयः** – दुष्पूरं कामम् आश्रित्य दम्भमानमदान्विताः मोहात् असद्ग्राहान् गृहीत्वा अशुचिव्रताः प्रवर्तन्ते ।

**तात्पर्यम्** – ते हि दम्भादिभिः समन्विताः गर्हितं व्रतं चरन्तश्च अमितं विषयाभिलाषम् आश्रित्य अनर्थकरान् निर्णयान् विधाय जगतः नाशाय प्रवर्तन्ते ।

**माध्वमतम्**–दुःखेन पूरणीयं कामम् आश्रित्य मिथ्याज्ञानस्वभावात् कुशास्त्राभ्यासजन्यविपरीतनिश्चयान् गृहीत्वा क्षुद्रभोगाय प्रवर्तन्ते ।

**व्याकरणम्** – दम्भश्च मानश्च मदश्च दम्भमानमदाः – द्वन्द्वः । दम्भमानमदैः अन्विताः दम्भमानमदान्विताः – तृतीयातत्पुरुषः । असन्तश्च ते ग्राहाश्च असद्ग्राहाः, तान् – कर्मधारयः । अशुचि व्रतं येषां ते अशुचिव्रताः – बहुव्रीहिः ।

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥16.11॥**
**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥16.12॥**

**पदार्थः** – अपरिमेयाम् = परिमातुमशक्याम्, प्रलयान्ताम् = मरणान्ताम्, उपाश्रिताः = अवलम्बिताः, कामोपभोगपरमाः = विषयानुभवपरमपुरुषार्थाः, एतावत् = इयत्, निश्चिताः = कृतनिर्णयाः, आशापाशशतैः = स्पृहारज्जुशतैः, कामक्रोधपरायणाः = रागद्वेषासक्ताः, कामभोगार्थम् = विषयानुभवार्थम्, अन्यायेन = अधर्मेण, अर्थसञ्चयान् = वस्तुसमुदायान्, ईहन्ते = वाञ्छन्ति ।

**अन्वयः** – अपरिमेयां प्रलयान्तां चिन्तां च उपाश्रिताः कामोपभोगपरमाः एतावत् इति निश्चिताः आशापाशशतैः बद्धाः कामक्रोधपरायणाः कामभोगार्थम् अन्यायेन अर्थसञ्चयान् ईहन्ते ।

**तात्पर्यम्** – तेषां विचारः तादृशो भवति यः अपरिमितः भवति यस्य च फलं भवति अन्ततः मरणम् । तेषां मतेन विषयोपभोगरूपः कामः एव प्रधानः पुरुषार्थः । कामजन्यसुखात् अतिरिक्तं सुखं ते नाङ्गीकुर्वन्ति । नानाविधैः आशापाशैः बद्धाः ते कामक्रोधादिना सहिताः विषयभोगार्थम् अधर्म्येण मार्गेण धनसङ्ग्रहं कर्तुमिच्छन्ति ।

**व्याकरणम्** – न परिमेया अपरिमेया, ताम् – नञ्तत्पुरुषः । प्रलयः अन्तः यस्याः सा, प्रलयान्ता, ताम् – बहुव्रीहिः । काम्यन्ते इति कामाः विषयाः – कर्मणि घञ् । कामानाम् उपभोगः कामोपभोगः – षष्ठीतत्पुरुषः। कामोपभोगः एव परमः येषां ते कामोपभोगपरमाः – बहुव्रीहिः ।

आशा एव पाशाः आशापाशाः – कर्मधारयः । आशापाशानां शतानि आशापाशशतानि, तैः, आशापाशशतैः – षष्ठीतत्पुरुषः । कामश्च क्रोधश्च कामक्रोधौ – द्वन्द्वः । परम् अयनम्, परायणम् – कर्मधारयः । कामक्रोधौ परायणं येषां ते कामक्रोधपरायणाः – बहुव्रीहिः । कामभोगाय इदं कामभोगार्थम् –

नित्यसमसोऽयम्, चतुर्थीतत्पुरुषः । अर्थानां सञ्चयाः अर्थसञ्चयाः, तान् – षष्ठीतत्पुरुषः ।

**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥16.13॥**
**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥16.14॥**
**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥16.15॥**
**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥16.16॥**

**पदार्थः** – मनोरथम् = अभीष्टम्, प्राप्स्ये = लप्स्ये, हतः = निहतः, हनिष्ये = नाशयिष्यामि, ईश्वरः = प्रभुः, भोगी = भोगसाधनवान्, सिद्धः = कृतकृत्यः, बलवान् = बलयुक्तः ।

आढ्यः = धनी, अभिजनवान् = सत्कुलजातः, यक्ष्ये = यज्ञं करिष्ये, दास्यामि = वितरिष्यामि, मोदिष्ये = हर्षं प्राप्स्यामि, अज्ञानविमोहिताः = अविवेकभ्रान्ताः, अनेकचित्तविभ्रान्ताः = विविधमनोविभ्रममोहिताः, मोहजालसमावृताः = अविवेकजालसहिताः, कामभोगेषु = विषयानुभवेषु, प्रसक्ताः = अत्यन्तमासक्ताः, अशुचौ = अपवित्रे, नरके = नरकलोके ।

**अन्वयः** – अद्य इदं मया लब्धम्, इमं मनोरथं प्राप्स्ये, इदं धनम् अस्ति, इदम् अपि मे पुनः भविष्यति, असौ शत्रुः मया हतः, अपरान् अपि हनिष्ये । अहम् ईश्वरः, अहं भोगी, अहं सिद्धः बलवान् सुखी । आढ्यः अभिजनवान् अस्मि, मया सदृशः अन्यः कः अस्ति ? यक्ष्ये, दास्यामि, मोदिष्ये इति अज्ञानविमोहिताः अनेकचित्तविभ्रान्ताः मोहजालसमावृताः कामभोगेषु प्रसक्ताः अशुचौ नरके पतन्ति ।

**तात्पर्यम्** – ते हि 'इदं धनं मया अद्य प्राप्तम् इति, तच्च धनम् अचिरादेव प्राप्स्यामि इति, इदं धनम् इदानीमस्ति इति, तच्च धनं मम अचिरादेव भविष्यति इति, शत्रुम् इमम् अद्य मारितवान् अन्यानपि शत्रून् अचिरादेव मारयिष्यामि इति, अहमेव लोकस्य नियामकः अन्यो नियामको नास्ति इति, अहं सर्वैः सुखसाधनैः उपेतः इति, अहं कृतकृत्यः इति, अहमेव बलवान् सुखी चेति, अहं धनिकः इति, अहं सत्कुल-जातः इति, एतादृशस्य मम अन्यः सदृशो नास्ति इति, अहं यज्ञं करिष्यामि इति, अहं दानं करिष्यामि इति, अहं सन्तोषं प्राप्स्यामि' इति च स्वच्छन्दं कथयन्तः अविवेकेन भ्रान्ताः, नानाविषयेषु मनसः सञ्चारात् मूढाः, रागरूपजालेन आवृताः, विषयोपभोगे आसक्ताः च अनर्थकारिणि नरके निपतन्ति।

**व्याकरणम्** – भोगः अस्य अस्मिन् वा अस्ति इति भोगी – मतुबर्थे इनिः । बलम् अस्य अस्मिन् वा अस्ति इति बलवान् – मतुप् । सुखम् अस्य अस्मिन् वा अस्ति इति सुखी – मतुबर्थे इनिः ।

अभिजनः अस्य अस्मिन् वा अस्ति इति अभिजनवान् – मतुप् । अज्ञानेन विमोहिताः अज्ञानविमोहिताः –

तृतीयातत्पुरुषः । अनेकविषयकं चित्तम् अनेकचित्तम् – मध्यमपदलोपी तत्पुरुषः । अनेकचित्तेन विभ्रान्ताः अनेकवित्तविभ्रान्ताः – तृतीयातत्पुरुषः । मोह एव जालम् मोहजालम् – कर्मधारयः । मोहजालेन समावृताः मोहजालसमावृताः – तृतीयातत्पुरुषः । कामानां भोगाः कामभोगाः, तेषु – षष्ठीतत्पुरुषः । न शुचिः अशुचिः, तस्मिन् – नञ्तत्पुरुषः ।

**आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥16.17॥**
**अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥16.18॥**

**पदार्थः** – आत्मसम्भाविताः = आत्मनैव पूज्यत्वं प्रापिताः, स्तब्धाः = धृष्टाः, धनमानमदान्विताः = वित्तमानगर्वसहिताः, दम्भेन = आत्मनो धार्मिकतया ख्यापनेन, अविधिपूर्वकम् = अशास्त्रीयम्, नामयज्ञैः = नाममात्रेण यज्ञैः, यजन्ते = देवान् पूजयन्ति, संश्रिताः = अवलम्बितवन्तः, आत्मपरदेहेषु = स्वकीयान्य-शरीरेषु, प्रद्विषन्तः = खेदयन्तः, अभ्यसूयकाः = असहमानाः ।

**अन्वयः** – आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ते दम्भेन अविधिपूर्वकं नामयज्ञैः यजन्ते । अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः आत्मपरदेहेषु मां प्रद्विषन्तः अभ्यसूयकाः भवन्ति ।

**तात्पर्यम्** – ते हि आत्मानं पूज्यत्वेन प्रचारयन्ति, अविनीताः भवन्ति, धनमानमदैः उपेताः भवन्ति, तादृशाः ते सोमयाजिप्रभृतिभिः शब्दैः आत्मनः व्यपदेशम् इच्छन्तः अश्रद्धया अशास्त्रीयक्रमेण च कथञ्चित् यागं कुर्वन्ति, तेषु अहङ्कारबलदर्पादयः निवासं कुर्वन्ति । एतादृशाः ते असूयापराः सर्वेषु शरीरेषु अन्तर्यामितया वर्तमानं मां खेदयन्ति ।

**व्याकरणम्** – आत्मना सम्भाविताः आत्मसम्भाविताः – तृतीयातत्पुरुषः । धनं च मानश्च मदश्च धनमानमदाः – द्वन्द्वः । धनमानमदैः अन्विताः धनमानमदान्विताः – तृतीयातत्पुरुषः । नामसम्पादकाः यज्ञाः नामयज्ञाः, तैः – मध्यमपदलोपी तत्पुरुषः । विधिः पूर्वः यथा भवति तथा विधिपूर्वकम्, क्रियाविशेषणम् – बहुव्रीहिः, समासान्ते स्वार्थे कप्प्रत्ययः च । न विधिपूर्वकम् अविधिपूर्वकम् – नञ्तत्पुरुषः । आत्मा च परे च आत्मपराः – द्वन्द्वः । आत्मपराणां देहाः आत्मपरदेहाः, तेषु – षष्ठीतत्पुरुषः ।

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥16.19॥**

**पदार्थः** – द्विषतः = शत्रून्, क्रूरान् = उग्रान्, अशुभान् = अपवित्रान्, नराधमान् = नीचमानवान्, संसारेषु = भवेषु, आसुरीषु = राक्षसीषु, अजस्रम् = सन्ततम्, क्षिपामि = पातयामि ।

**अन्वयः** – द्विषतः क्रूरान् अशुभान् तान् नराधमान् संसारेषु आसुरीषु योनिषु एव अजस्रम् अहं क्षिपामि ।

**तात्पर्यम्** – ये मां द्विषन्ति, क्रूराः अशुभाश्च सन्ति आसुरगुणसम्पन्नाः तादृशान् नरापसदान् अहं सर्वदा संसारे एव पातयामि, तत्रापि आसुरस्वभावेषु एव जन्म कल्पयामि ।

**व्याकरणम्** – नरेषु अधमाः, नराधमाः, तान् – सप्तमीतत्पुरुषः । न शुभाः अशुभाः, तान् – नञ्तत्पुरुषः ।

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥16.20॥**

**पदार्थः** – आसुरीम् = राक्षसीम्, योनिम् = प्रकृतिम्, आपन्नाः = प्राप्ताः, मूढाः = अविवेकिनः, अप्राप्य = अनासाद्य, जन्मनि जन्मनि = प्रतिजन्म, अधमाम् = नीचाम्, यान्ति = गच्छन्ति ।

**अन्वयः** – कौन्तेय ! आसुरीं योनिम् आपन्नाः मूढाः माम् अप्राप्य एव ततः जन्मनि जन्मनि अधमां गतिं यान्ति ।

**तात्पर्यम्** – अर्जुन ! तादृशानां नरापसदानां राक्षसानां स्वभावं प्राप्तवतां न कदापि मम प्राप्तिः भवति । ते हि जन्मनि जन्मनि क्रमेण नीचामेव गतिं प्राप्नुवन्ति ।

**व्याकरणम्** – न प्राप्य अप्राप्य – नञ्तत्पुरुषः ।

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥16.21॥**

**पदार्थः** – कामः = वाञ्छा, क्रोधः = कोपः, लोभः = तृष्णा, नाशनम् = विनाशकरम्, नरकस्य = नरकलोकस्य, द्वारम् = प्रतिहारः ।

**अन्वयः** – कामः क्रोधः तथा लोभः इदम् आत्मनः नाशनं नरकस्य त्रिविधं द्वारम् । तस्मात् एतत् त्रयं त्यजेत् ।

**तात्पर्यम्** – वाञ्छा, कोपः तथा तृष्णा एतत् आत्मविनाशकरं त्रिप्रकारं नरकलोकस्य प्रतिहारः । तस्मात् इदं त्रितयं वर्जयेत् ।

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥16.22॥**

**पदार्थः** – तमोद्वारैः = नरकद्वारैः, विमुक्तः = विवर्जितः, श्रेयः = हितम्, पराम् = उत्कृष्टाम्, गतिम् = मोक्षाख्यं स्थानम्, याति = अधिगच्छति ।

**अन्वयः** – कौन्तेय ! तमोद्वारैः एतैः त्रिभिः विमुक्तः नरः आत्मनः श्रेयः आचरति । ततः परां गतिं याति ।

**तात्पर्यम्** – अर्जुन ! नरकद्वारैः एतैः कामादिभिः त्रिभिः विवर्जितः मानवः स्वस्य हितं यदि करोति तर्हि सः अत्यन्तप्रशंसनीयम् उत्कृष्टं मोक्षम् अधिगच्छति ।

**व्याकरणम्** – तमसो द्वाराणि तमोद्वाराणि, तैः – षष्ठीतत्पुरुषः ।

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥16.23॥**

**पदार्थः** – शास्त्रविधिम् = शास्त्रपद्धतिम्, उत्सृज्य = परित्यज्य, कामकारतः = स्वच्छन्दाचरणेन, सिद्धिम् = कार्यसिद्धिम्, न अवाप्नोति = न लभते ।

**अन्वयः** – यः शास्त्रविधिम् उत्सृज्य कामकारतः वर्तते सः सिद्धिं न अवाप्नोति, न सुखम्, न परां गतिम् ।

**तात्पर्यम्** – यः खलु पुरुषः शास्त्रसम्मतं मार्गं विहाय स्वेच्छया सन्ततम् अमार्गेणैव सञ्चरति तस्य कार्यसिद्धिः

न भवति, न सुखम्, नापि मोक्षः। सः अत्रैव संसारे चिरं पीडाम् अनुभवन् तिष्ठति।

**रामानुजीयमतम्** – शास्त्रम् – वेदाः।

**व्याकरणम्** – शास्त्रसम्मतो विधिः शास्त्रविधिः, तम् – मध्यमपदलोपी तत्पुरुषः। कामेन कारः कामकारः, तेन कामकारेण – तृतीयाविभक्त्यन्तात् तसिप्रत्यये कामकारतः इति शब्दः।

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥16.24॥**

**पदार्थः** – कार्याकार्यव्यवस्थितौ = कर्तव्याकर्तव्यव्यवस्थायाम्, शास्त्रम् = अबाधितार्थप्रतिपादकं वाक्यम्, प्रमाणम् = ज्ञानसाधनम्, शास्त्रविधानोक्तम् = शास्त्रविहितम्, ज्ञात्वा = विदित्वा।

**अन्वयः** – तस्मात् कार्याकार्यव्यवस्थितौ ते शास्त्रं प्रमाणम्। शास्त्रविधानोक्तं कर्म ज्ञात्वा इह कर्तुम् अर्हसि।

**तात्पर्यम्** – तस्मात् यदा तव कार्ये अकार्ये वा विषये सन्देहो भवति तदा तव शास्त्रं प्रमाणम्। तत्र स्थितेन वाक्येन यत् प्रतिपाद्यते तदेव कार्यं कर्तुमर्हसि।

**व्याकरणम्** – कार्यं च अकार्यं च कार्याकार्ये – द्वन्द्वः। कार्याकार्ययोः व्यवस्थितिः कार्याकार्यव्यवस्थितिः, तस्याम् – षष्ठीतत्पुरुषः। विधीयते अनेन इति विधानम् (वाक्यम्) – करणे ल्युट्। शास्त्रस्य विधानम् शास्त्रविधानम् – षष्ठीतत्पुरुषः। शास्त्रविधानेन उक्तम् शास्त्रविधानोक्तम् – तृतीयातत्पुरुषः।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः॥

## श्रीमद्भगवद्गीता

अथ सप्तदशोऽध्यायः

# श्रद्धात्रयविभागयोगः

**अर्जुन उवाच – ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥17.1॥**

**पदार्थः** – शास्त्रविधिम् = शास्त्रीयं कर्म, उत्सृज्य = वर्जयित्वा, श्रद्धया = आसक्त्या, अन्विताः = सहिताः, निष्ठा = स्थितिः, आहो = अथवा।

**अन्वयः** – कृष्ण! ये शास्त्रविधिमुत्सृज्य श्रद्धया अन्विताः यजन्ते तेषां निष्ठा तु का? सत्त्वम् आहो रजः तमः।

**तात्पर्यम्** – ये शास्त्रविधिम् उल्लङ्घ्य श्रद्धया कर्म कुर्वन्ति ते आसुराः। ये शास्त्रविधिम् अनुसृत्य श्रद्धया कर्म कुर्वन्ति ते दैवाः। ये पुनः शास्त्रविधिं त्यजन्ति वृद्धव्यवहारेण सम्प्रदायः इति श्रद्धया कर्म अनुतिष्ठन्ति न ते दैवाः, शास्त्रविधेः त्यागात्। नापि आसुराः श्रद्धया कर्मानुष्ठानात्। ततश्च तादृशानां का स्थितिः? किं तेषु सत्त्वं गुणो निर्णयः किं वा तमः आहोस्वित् रजः?

**श्रीभगवानुवाच** - **त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥17.2॥**

**पदार्थः** - देहिनाम् = शरीरवताम्, स्वभावजा = स्वभावात् सञ्जाता, श्रद्धा = आस्था ।

**अन्वयः** - देहिनां स्वभावजा (या) श्रद्धा सा सात्त्विकी राजसी तामसी च इति त्रिविधा भवति, तां शृणु ।

**तात्पर्यम्** - प्राणिनां स्वभाववशात् या श्रद्धा भवति सा सात्त्विकी, राजसी, तामसी चेति त्रिविधा वर्तते । तद्विवृणोमि, शृणु ।

**व्याकरणम्** - तिस्रः विधाः यस्याः सा त्रिविधा - बहुव्रीहिः । स्वभावात् जाता स्वभावजा - कर्तरि डप्रत्ययः उपपदसमासश्च । सत्त्वात् आगता सात्त्विकी - आगता इत्यर्थे ठक् । रजसः आगता राजसी - आगता इत्यर्थे अण् स्त्रीत्वे च ङीप् ।

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥17.3॥**

**पदार्थः** - सत्त्वानुरूपा = अन्तःकरणानुगुणा, श्रद्धा = आसक्तिः, श्रद्धामयः = आसक्तिमयः, यच्छ्रद्धः = यादृशासक्तिविशिष्टः सः = सः पुरुषः, सः तादृशासक्तिविशिष्टः ।

**अन्वयः** - भारत ! सर्वस्य सत्त्वानुरूपा श्रद्धा भवति । अयं पुरुषः श्रद्धामयः । यः यच्छ्रद्धः सः सः एव ।

**तात्पर्यम्** - सर्वस्यापि अन्तःकरणानुगुणा श्रद्धा भवति । यस्मिन् श्रद्धा सः श्रद्धामयः इत्युच्यते । सा च श्रद्धा क्वचित् सत्त्वगुणप्रधाना, क्वचित् रजोगुणप्रधाना क्वचिच्च तमोगुणप्रधाना चेति त्रिविधा भवति । यः यादृश्या श्रद्धया विशिष्टः सः तादृशश्रद्धः इति निर्णयः ।

**व्याकरणम्** - सत्त्वस्य अनुरूपा सत्त्वानुरूपा - षष्ठीतत्पुरुषः । श्रद्धामयः - प्रचुरार्थे मयट् श्रद्धाप्रचुरः इत्यर्थः । या श्रद्धा यस्य सः यच्छ्रद्धः - बहुव्रीहिः ।

**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।**
**प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥17.4॥**

**पदार्थः** - देवान् = अमरान्, यजन्ते = पूजयन्ति, यक्षरक्षांसि = यक्षराक्षसान्, भूतगणान् = भूतसमुदायान् ।

**अन्वयः** - सात्त्विकाः देवान् यजन्ते, राजसाः यक्षरक्षांसि, अन्ये तामसाः जनाः प्रेतान् भूतगणान् च यजन्ते ।

**तात्पर्यम्** - तत्र येषु सत्त्वं वर्तते ते देवान् पूजयन्ति । येषु रजः ते यक्षान् राक्षसान् च पूजयन्ति । येषु पुनः तमः ते प्रेतान् भूतान् च पूजयन्ति ।

**व्याकरणम्** - यक्षाः रक्षांसि च यक्षरक्षांसि - द्वन्द्वः । भूतानां गणाः भूतगणाः, तान् - षष्ठीतत्पुरुषः ।

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥17.5॥**
**कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।**
**मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥17.6॥**

**पदार्थः** – दम्भाहङ्कारसंयुक्ताः = दम्भाभिमानसहिताः, कामरागबलान्विताः = इच्छानुरागाग्रहयुक्ताः, अशास्त्रविहितम् = अशास्त्रप्रतिपादितम्, तप्यन्ते = कुर्वन्ति, अचेतसः = अविवेकिनः, शरीरस्थम् = देहस्थितम्, भूतग्रामम् = इन्द्रियसमुदायम्, अन्तःशरीरस्थम् = साक्षिभूतम्, कर्शयन्तः = कृशीकुर्वन्तः, आसुरनिश्चयान् = क्रूरनिर्णयान् ।

**अन्वयः** – दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः अचेतसः शरीरस्थं भूतग्रामम् अन्तःशरीरस्थं मां च एव कर्शयन्तः ये जनाः अशास्त्रविहितं घोरं तपः तप्यन्ते तान् आसुरनिश्चयान् विद्धि ।

**तात्पर्यम्** – येषु पुनः धार्मिकतया आत्मनः ख्यापनम्, अहङ्कारः, विषयाभिलाषः, विषयाभिनिवेशः, आग्रहः इत्यादयः गुणाः सन्ति ते अविवेकिनः स्वशरीरे वर्तमानं पृथिव्यादिभूतसमूहं मां च कृशीकुर्वन्तः अशास्त्रीयं घोरं तपः कुर्वन्ति । तादृशाः उग्रकर्माणः इति ज्ञातव्यम् । (कामः – विषयेषु अभिलाषः, रागः – तेषु अभिनिवेशः ।)

**माध्वमतम्**– अन्तःशरीरस्थम् = शरीरे अन्तर्यामित्वेन स्थितं भगवन्तम् ।

**व्याकरणम्** – शास्त्रेण विहितं शास्त्रविहितम् – तृतीयातत्पुरुषः । न शास्त्रविहितम् अशास्त्रविहितम् – नञ्तत्पुरुषः । दम्भश्च अहङ्कारश्च दम्भाहङ्कारौ – द्वन्द्वः । दम्भाहङ्कारभ्यां संयुक्ताः दम्भाहङ्कारसंयुक्ताः – तृतीयातत्पुरुषः । कामश्च रागश्च बलञ्च कामरागबलानि – द्वन्द्वः । कामरागबलैः अन्विताः कामराग-बलान्विताः – तृतीयातत्पुरुषः ।

शरीरे तिष्ठतीति शरीरस्थः, तम् – कर्तरि कप्रत्ययः उपपदसमासश्च । भूतानां ग्रामः भूतग्रामः, तम् – षष्ठीतत्पुरुषः । न विद्यते चेतः येषां ते अचेतसः – बहुव्रीहिः । आसुरः निश्चयः येषां ते आसुरनिश्चयाः, तान् बहुव्रीहिः ।

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥17.7॥**

**पदार्थः** – प्रियः = इष्टः, भेदम् = विभागम्, शृणु = आकर्णय ।

**अन्वयः** – आहारः तु अपि सर्वस्य त्रिविधः प्रियः भवति तथा यज्ञः तपः दानम् । तेषाम् इमं भेदं शृणु ।

**तात्पर्यम्** – सर्वेषां यत् प्रियं भोज्यं तदपि त्रिप्रकारकं भवति, तथा यागः तपः वितरणं च त्रिविधं भवति । तेषाम् इमं विभागं शृणु ।

**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥17.8॥**

**पदार्थः** – आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः = आयुष्यम् उत्साहः शक्तिः आरोग्यं चित्तप्रसादः प्रीतिश्च एषां वर्धकाः, रस्याः = आस्वादनीयाः, स्निग्धाः = स्नेहवन्तः, स्थिराः = चिरस्थायिनः, हृद्याः =रमणीयाः, सात्त्विकप्रियाः = सात्त्विकाभिमताः ।

**अन्वयः** – आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः रस्याः स्निग्धाः स्थिरा हृद्याः आहाराः सात्त्विकप्रियाः ।

**तात्पर्यम्** – तत्र आयुष्यम्, उत्साहः, शक्तिः, आरोग्यं, चित्तप्रसादः, प्रीतिश्चेति एतेषां गुणानां विवर्धकाः,

आस्वाद्याः, स्नेहवन्तः, चिरस्थायिनः, रमणीयाश्च ये आहाराः सन्ति ते सात्त्विकानां प्रियाः भवन्ति।

**माध्वमतम्**– सत्त्वम् = चित्तशुद्धिः ।

**व्याकरणम्** – आयुश्च सत्त्वं च बलं च आरोग्यं च सुखं च प्रीतिश्च आयुःसत्त्वबलारोग्यसुखप्रीतयः – द्वन्द्वः । आयुःसत्त्वबलारोग्यसुखप्रीतीनां विवर्धनाः – षष्ठीतत्पुरुषः । सात्त्विकानां प्रियाः सात्त्विकप्रियाः – षष्ठीतत्पुरुषः ।

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ।।17.9।।**

**पदार्थः** – कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः = अतिकटवः अत्यम्लाः अतिलवणाः अत्युष्णाः तीक्ष्णाः रूक्षाः दाहकराश्च, दुःखशोकामयप्रदाः = दुःखरोगादिदायकाः, राजसस्य = रजोगुणसहितस्य, इष्टाः = प्रीतिकराः ।

**अन्वयः** – कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः दुःखशोकामयप्रदाः आहारा राजसस्य इष्टाः ।

**तात्पर्यम्** – ये पुनः आहाराः अतिकटवः, अत्यम्लाः, अतिलवणाः, अत्युष्णाः, तीक्ष्णाः, रूक्षाः विदाहिनश्च ते दुःखम् अनारोग्यं च जनयन्ति । तादृशाः आहाराः राजसानां प्रियाः भवन्ति । (दुःखं तात्कालिकी पीडा, शोकः पश्चाद्भावि दौर्मनस्यम् )

**व्याकरणम्** – कटवश्च अम्लाश्च लवणाश्च अत्युष्णाश्च तीक्ष्णाश्च रूक्षाश्च विदाहिनश्च कट्वम्ल-लवणात्युष्णतीक्ष्णरूक्षविदाहिनः – द्वन्द्वः । दुःखं च शोकश्च आमयश्च दुःखशोकामयाः – द्वन्द्वः । दुःखशोकामयानां प्रदाः दुःखशोकामयप्रदाः – षष्ठीतत्पुरुषः

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ।।17.10।।**

**पदार्थः** – यातयामम् = यामात्मकः कालः यस्य व्यतीतः तादृशम्, गतरसम् = गतसारम्, पूति = दुर्गन्धम्, पर्युषितं च = रात्र्यन्तरितम्, उच्छिष्टम् = भुक्तावशिष्टम्, अमेध्यं च = अशुचि च, तामसप्रियम् = तामसाभिमतम् ।

**अन्वयः** – यातयामं गतरसं पूति पर्युषितं च उच्छिष्टम् अपि च अमेध्यं च यत् भोजनं तत् तामसप्रियम् ।

**तात्पर्यम्** – ये पुनः आहाराः यामात्मकः कालः यस्य व्यतीतः तादृशाः, अतिपक्वाः, दुर्गन्धविशिष्टाः, दिनान्तरे पक्वाः, भुक्तावशिष्टाः अभक्षणीयाश्च सन्ति ते तामसानां प्रियाः भवन्ति ।

**माध्वमतम्** – यातयामम् = यामान्तरितपाकम् ।

**व्याकरणम्** – यातः यामः यस्य तत् यातयामम् – बहुव्रीहिः । गतः रसः यस्य तत् गतरसम् – बहुव्रीहिः । न मेध्यम् अमेध्यम् – नञ्तत्पुरुषः । तामसानां प्रियम् तामसप्रियम् – षष्ठीतत्पुरुषः ।

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ।।17.11।।**

**पदार्थः** – अफलाकाङ्क्षिभिः = फलम् अनपेक्षमाणैः, यष्टव्यम् एव इति = यज्ञः कर्तव्यः इति,

समाधाय = मनः एकाग्रं कृत्वा, विधिदृष्टः = शास्त्रविहितः, इज्यते = क्रियते, सात्त्विकः = सत्त्वसम्बन्धी।

**अन्वयः** – अफलाकाङ्क्षिभिः यष्टव्यम् एव इति मनः समाधाय विधिदृष्टः यः यज्ञः इज्यते सः सात्त्विकः।

**तात्पर्यम्** – फलम् अनपेक्ष्य यज्ञः कर्तव्यः इति दृढं सङ्कल्प्य एकाग्रेण मनसा यथाशास्त्रं यः यज्ञः क्रियते सः सात्त्विकः इत्युच्यते।

**व्याकरणम्** – फलम् आकांक्षन्ति इति फलाकाङ्क्षिणः – ताच्छीलिके कर्तरि णिनिः उपपदसमासश्च। न फलाकांक्षिणः अफलाकाङ्क्षिणः, तैः – नञ्तत्पुरुषः। विधिना दृष्टः विधिदृष्टः – तृतीयातत्पुरुषः।

**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥17.12॥**

**पदार्थः** – अभिसन्धाय = उद्दिश्य, दम्भार्थम् = धर्मादिगुणवत्त्वेन आत्मनः ख्यापनार्थम्, राजसम् = रजोगुणसम्बन्धिनम्।

**अन्वयः** – भरतश्रेष्ठ ! फलं तु अभिसन्धाय दम्भार्थम् अपि च एव यत् इज्यते तं यज्ञं राजसं विद्धि।

**तात्पर्यम्** – अर्जुन ! फलम् अपेक्ष्य धार्मिकतया आत्मानं ख्यापयितुं यः यज्ञः क्रियते सः राजसः इति जानीहि।

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ 17.13॥**

**पदार्थः** – विधिहीनम् = अशास्त्रसम्मतम्, असृष्टान्नम् = अदत्तान्नम्, मन्त्रहीनम् = मन्त्रशून्यम्, अदक्षिणम् = दक्षिणाविरहितम्, श्रद्धाविरहितम् = अनासक्तिसहितम्, तामसम् = तमस्सम्बन्धिनम्, परिचक्षते = कथयन्ति।

**अन्वयः** – विधिहीनम् असृष्टान्नं मन्त्रहीनम् अदक्षिणं श्रद्धाविरहितं यज्ञं तामसं परिचक्षते।

**तात्पर्यम्** – यः यज्ञः शास्त्रसम्मतो न विद्यते, यत्र अन्नं परेभ्यः न दीयते, यत्र स्वरादिशुद्धः मन्त्रः नास्ति, यत्र दक्षिणा अपि नास्ति, यश्च अश्रद्धया क्रियते सः तामसः इति कथ्यते।

**व्याकरणम्** – विधिना हीनः विधिहीनः, तम् – तृतीयातत्पुरुषः। सृष्टम् अन्नं यस्मिन् तत् सृष्टान्नम् – बहुव्रीहिः। न सृष्टान्नम् असृष्टानाम् – नञ्तत्पुरुषः। न विद्यते दक्षिणा यत्र सः अदक्षिणः, तम् – बहुव्रीहिः। श्रद्धया विरहितः श्रद्धाविरहितः, तम् – तृतीयातत्पुरुषः।

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥17.14॥**

**पदार्थः** – देवद्विजगुरुप्राज्ञपूजनम् = देवस्य द्विजस्य आचार्यस्य पण्डितस्य च सेवनम्, शौचम् = शुद्धिः, आर्जवम् = अवक्रता, ब्रह्मचर्यम् = ब्रह्मव्रतम्, अहिंसा = अपीडनम्, शारीरम् = दैहिकम्।

**अन्वयः** – देवद्विजगुरुप्राज्ञपूजनं शौचम् आर्जवं ब्रह्मचर्यम् अहिंसा च शारीरं तपः उच्यते।

**तात्पर्यम्** – देवस्य द्विजस्य आचार्यस्य पण्डितस्य च अर्चनम्, शुद्धता, आर्जवम्, ब्रह्मचर्यम्, अहिंसा च शारीरं तपः इत्युच्यते।

**व्याकरणम्** –देवश्च द्विजश्च गुरुश्च प्राज्ञश्च देवद्विजगुरुप्राज्ञाः – द्वन्द्वः। देवद्विजगुरुप्राज्ञानां पूजनम् देवद्विज–गुरुप्राज्ञपूजनम् – षष्ठीतत्पुरुषः। न हिंसा अहिंसा – नञ्तत्पुरुषः। शरीरस्य इदं शारीरम् – इदमर्थे अण्।

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥17.15॥**

**पदार्थः** – अनुद्वेगकरम् = अक्षोभकरम्, सत्यम् = यथार्थम्, प्रियहितं = इष्टं हितकरं च, वाक्यम् = वचनम्, स्वाध्यायाभ्यसनम् = वेदाभ्यासः, वाङ्मयम् = वाग्रूपम् ।

**अन्वयः** – अनुद्वेगकरं सत्यं प्रियहितं च यत् वाक्यं स्वाध्यायाभ्यसनं च एव वाङ्मयं तपः उच्यते ।

**तात्पर्यम्** – अक्षोभकरं यथार्थम् इष्टं हितकरं च यत् वचनम्, वेदाभ्यासः तथा वाङ्मयं तपः उच्यते ।

**व्याकरणम्** – उद्वेगस्य करम् उद्वेगकरम् – षष्ठीतत्पुरुषः । न उद्वेगकरम् अनुद्वेगकरम् – नञ्तत्पुरुषः । प्रियं च तत् हितं च प्रियहितम् – कर्मधारयः । स्वाध्यायस्य अभ्यसनं स्वाध्यायाभ्यसनम् – षष्ठीतत्पुरुषः ।

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥17.16॥**

**पदार्थः** – मनःप्रसादः = चित्तशान्तिः, सौम्यत्वम् = सौमनस्यम्, मौनम् = वाक्संयमः, आत्मविनिग्रहः = मनोनिरोधः, भावसंशुद्धिः = वञ्चनाराहित्यम्, मानसम् = अन्तःकरणसम्बन्धि ।

**अन्वयः** – मनःप्रसादः सौम्यत्वं मौनम् आत्मविनिग्रहः भावसंशुद्धिः इति एतत् मानसं तपः उच्यते ।

**तात्पर्यम्** – चित्तशान्तिः सौमनस्यं वाक्संयमः मनोनिरोधः भावसंशुद्धिः च इति इदम् अन्तःकरणसम्बन्धि तपः कथ्यते ।

**माध्वमतम्**– सौम्यत्वम् = अक्रौर्यम्, भावसंशुद्धिः = नानाकामराहित्यम् ।

**व्याकरणम्** – मनसः प्रसादः मनःप्रसादः – षष्ठीतत्पुरुषः । आत्मनः विनिग्रहः आत्मविनिग्रहः – षष्ठीतत्पुरुषः । भावे संशुद्धिः भावसंशुद्धिः – सप्तमीतत्पुरुषः । मनसः इदं मानसम् – इदमर्थे अण् ।

**श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥17.17॥**

**पदार्थः** – अफलाकाङ्क्षिभिः = अकामैः, युक्तैः = समाहितैः, तप्तम् = आचरितम्, त्रिविधम् = त्रिप्रकारम् ।

**अन्वयः** – परया श्रद्धया तप्तं तत् तपः त्रिविधं भवति । अफलाकाङ्क्षिभिः युक्तैः नरैः तप्तं तपः सात्त्विकं परिचक्षते ।

**तात्पर्यम्** – गाढश्रद्धया आचरितं तपः त्रिप्रकारं भवति । फलम् अनपेक्ष्य एकाग्रेण मनसा आचरितं तपः सात्त्विकं वदन्ति ।

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥17.18॥**

**पदार्थः** – सत्कारमानपूजार्थम् = स्तुतिबहुमानार्चनार्थम्, दम्भेन = धार्मिकत्वेन आत्मनः ख्यापनार्थं च, चलम् = चञ्चलम्, अध्रुवम् = अस्थिरम्, प्रोक्तम् = कथितम् ।

**अन्वयः** – सत्कारमानपूजार्थं दम्भेन च एव यत् तपः क्रियते तत् इह राजसं चलम् अध्रुवं प्रोक्तम् ।

**तात्पर्यम्** – स्तुतिं बहुमानम् अर्चनं च प्राप्तुं धार्मिकतया आत्मानं ख्यापयितुं च यत् तपः क्रियते तत् राजसम्

उदाहृतम् । तच्च तपः अत्रैव लोके फलदायकं न परलोके इति चलम्, फलं नियमेन न जनयति इति अध्रुवं च ।

**व्याकरणम्** – सत्कारश्च मानश्च पूजा च सत्कारमानपूजाः – द्वन्द्वः । सत्कारमानपूजाभ्यः इदं सत्कारमान-पूजार्थम् – नित्यसमासोऽयम्, चतुर्थीतत्पुरुषः । न ध्रुवम् अध्रुवम् – नञ्तत्पुरुषः ।

**मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ।।17.19।।**

**पदार्थः** – मूढग्राहेण = अविवेककृतेन दुराग्रहेण, आत्मनः = स्वस्य, पीडया = बाधया, परस्य = अन्यस्य, उत्सादनार्थम् = विनाशार्थम्, उदाहृतम् = अभिहितम् ।

**अन्वयः** – मूढग्राहेण आत्मनः पीडया परस्य उत्सादनार्थं वा यत् तपः क्रियते तत् तामसम् उदाहृतम् ।

**तात्पर्यम्** – अविवेककृतेन दुराग्रहेण, शरीरायासेन, शत्रोः विनाशार्थं च यत् तपः क्रियते तत् तामसम् इत्यभिहितम् ।

**व्याकरणम्** – मूढः ग्राहः मूढग्राहः, तेन – कर्मधारयः । विवेकाभावकृतेन दुराग्रहेण इति पर्यवसितः अर्थः ।

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ।।17.20।।**

**पदार्थः** – देशे = योग्ये प्रदेशे, काले = योग्ये समये, पात्रे = शमादिगुणसम्पन्ने, दातव्यम् इति = देयम् इति, अनुपकारिणे = उपकारविहीनाय, स्मृतम् = प्रोक्तम् ।

**अन्वयः** – देशे काले च पात्रे च दातव्यम् इति अनुपकारिणे यत् दानं दीयते तत् दानं सात्त्विकं स्मृतम् ।

**तात्पर्यम्** – योग्ये प्रदेशे योग्ये च काले उपकारम् अकृतवते च शमादिगुणसम्पन्नाय पुरुषाय दातव्यम् इति बुद्ध्या यत् दानं क्रियते तत् सात्त्विकम् इत्युच्यते ।

**व्याकरणम्** – न उपकारी अनुपकारी, तस्मै अनुपकारिणे – नञ्तत्पुरुषः ।

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ।।17.21।।**

**पदार्थः** – प्रत्युपकारार्थम् = प्रत्युपकाराय, उद्दिश्य = सङ्कल्प्य, परिक्लिष्टम् = दुःखसहितम्, स्मृतम् = कथितम् ।

**अन्वयः** – यत् तु प्रत्युपकारार्थं फलम् उद्दिश्य वा पुनः परिक्लिष्टं च दीयते तत् दानं राजसं स्मृतम् ।

**तात्पर्यम्** – अयं मे काले प्रत्युपकारं करिष्यति इत्यभिप्रायेण, फलापेक्षया, सन्तापसहिततया वा यत् दानं क्रियते तत् राजसम् इति आख्यायते ।

**माध्वमतम्**– परिक्लिष्टम् = अन्यायेनार्जितम् ।

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ।।17.22।।**

**पदार्थः** – अदेशकाले = अनुचिते प्रदेशे समये च, असत्कृतम् = सत्काररहितम्, अवज्ञातम् = परिभवसहितम्,

अपात्रेभ्यः = अनर्हेभ्यः ।

**अन्वयः** – अदेशकाले असत्कृतम् अवज्ञातं च अपात्रेभ्यः यत् दानं दीयते तत् तामसम् उदाहृतम् ।

**तात्पर्यम्** – अयोग्ये देशे काले च शमविद्यादिगुणरहिताय अनादरेण तिरस्कारेण च यत् दानं क्रियते तत् तामसमिति भण्यते ।

**व्याकरणम्** – देशश्च कालश्च अनयोः समाहारः देशकालम् । न देशकालम्, अदेशकालम्, तस्मिन् – नञ्तत्पुरुषः । न पात्राणि अपात्राणि, तेभ्यः – नञ्तत्पुरुषः । न सत्कृतम् असत्कृतम् – नञ्तत्पुरुषः ।

**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥17.23॥**

**पदार्थः** – निर्देशः = उच्चारणम्, ब्रह्मणः = परब्रह्मणः, स्मृतः = प्रसिद्धः, पुरा = पूर्वम्, विहिताः = निर्मिताः ।

**अन्वयः** – ॐ तत् सत् इति त्रिविधः निर्देशः ब्रह्मणः स्मृतः । तेन ब्राह्मणाः वेदाः च यज्ञाः च पुरा विहिताः ।

**तात्पर्यम्** – ॐ तत् सत् इति त्रिभिः शब्दैः ब्रह्मणः निर्देशः क्रियते । तेन च ब्रह्मणा ब्राह्मणाः वेदाः यज्ञाः च पूर्वं निर्मिताः ।

**माध्वमतम्** – जगदाधारत्वात् ओमिति वेदैकवेद्यत्वात् तदिति शुभगुणपूर्णत्वात् सदिति ब्रह्म उच्यते ।

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥17.24॥**

**पदार्थः** – ब्रह्मवादिनाम् = ब्रह्मविदाम्, विधानोक्ताः = शास्त्रविहिताः, यज्ञदानतपःक्रियाः = यागदानतपोरूपाः क्रियाः, उदाहृत्य = उच्चार्य, सततम् = सदा, प्रवर्तन्ते = व्याप्रियन्ते ।

**अन्वयः** – तस्मात् ब्रह्मवादिनां विधानोक्ताः यज्ञदानतपःक्रियाः ओम् इति उदाहृत्य सततं प्रवर्तन्ते ।

**तात्पर्यम्** – तस्मात् ब्रह्मविदां शास्त्रविहिताः यज्ञदानतपोरूपाः क्रियाः ओम् इति शब्देनैव आरब्धाः भवन्ति ।

**रामानुजीयमतम्** – ब्रह्मवादिनः – त्रैवर्णिकाः ब्रह्मवाचकत्वेन निर्दिष्टेषु शब्देषु ॐ इति शब्दस्य त्रैवर्णिकेषु अन्वयो वर्णितः ।

**व्याकरणम्** – यज्ञश्च दानं च तपश्च यज्ञदानतपांसि – द्वन्द्वः । यज्ञदानतपांसि इति क्रियाः यज्ञदानतपःक्रियाः – कर्मधारयः ।

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥17.25॥**

**पदार्थः** – मोक्षकाङ्क्षिभिः = मोक्षार्थिभिः, फलम् = प्रयोजनम्, अनभिसन्धाय = अनपेक्ष्य, विविधाः = बहुप्रकाराः, यज्ञतपःक्रियाः = यागादयः, दानक्रियाः = वितरणक्रियाः ।

**अन्वयः** – मोक्षकाङ्क्षिभिः तत् इति फलम् अनभिसन्धाय विविधाः यज्ञतपःक्रियाः दानक्रियाः च क्रियन्ते ।

**तात्पर्यम्** – ये मोक्षम् इच्छन्ति ते तत् इति ब्रह्मणः तदिति शब्दम् उच्चार्य फलनिरपेक्षतया नानाविधं यज्ञं तपः दानं च कुर्वन्ति ।

**व्याकरणम्** – न अभिसन्धाय अनभिसन्धाय – नञ्तत्पुरुषः । यज्ञाश्च तपांसि च यज्ञतपांसि, यज्ञतपांसि इति

क्रियाः यज्ञतपःक्रियाः - कर्मधारयः । दानानि इति क्रियाः दानक्रियाः - कर्मधारयः ।

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ।।17.26।।**

**पदार्थः** - सद्भावे = अस्तित्वे, साधुभावे = श्रेष्ठत्वे, प्रयुज्यते = उच्चार्यते, प्रशस्ते = श्लाघ्ये, युज्यते = कथ्यते ।

**अन्वयः** - पार्थ ! सद्भावे साधुभावे च सत् इति एतत् प्रयुज्यते तथा प्रशस्ते कर्मणि सत् शब्दः युज्यते ।

**तात्पर्यम्** - अस्ति इति, श्रेष्ठम् इति च अर्थे प्रतिपादनीये सत् इति शब्दः प्रयुज्यते पण्डितैः । तस्मात् प्रशस्ते विवाहादौ कर्मणि 'सत् इदं कर्म' इति 'सत्'शब्दस्य प्रयोगः सुतरां सङ्गच्छते ।

**व्याकरणम्** - साधुः भावः साधुभावः, तस्मिन् - कर्मधारयः । सत् इति शब्दः सच्छब्दः - कर्मधारयः ।

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ।।17.27।।**

**पदार्थः** - स्थितिः = वृत्तिः, तदर्थीयम् = यज्ञदानतपःप्रयोजनार्थम्, अभिधीयते = प्रोच्यते ।

**अन्वयः** - यज्ञे तपसि दाने च स्थितिः सत् इति च उच्यते । तदर्थीयं कर्म च एव सत् इति एव अभिधीयते ।

**तात्पर्यम्** - यज्ञाय तपसे दानाय च या स्थितिः क्रियते सापि सत् इति कथ्यते । तथा तेषां यज्ञादीनां यद् अनुकूलं कर्म वर्तते तदपि सत् इति शब्देनैव उच्यते ।

**व्याकरणम्** - सः अर्थः तदर्थः - कर्मधारयः । तदर्थस्य इदं तदर्थीयम् - इदमर्थे छप्रत्ययः (ईय) ।

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ।।17.28।।**

**पदार्थः** - अश्रद्धया = अनासक्त्या, हुतम् = हवनं कृतम्, दत्तम् = वितीर्णम्, तप्तम् = अनुष्ठितम्, कृतम् = आचरितम्, प्रेत्य = परलोके, इह = एतल्लोके, नो = न भवति ।

**अन्वयः** - पार्थ ! अश्रद्धया हुतं दत्तं तपः तप्तं कृतं च यत् असत् इति उच्यते तत् प्रेत्य न इह नो ।

**तात्पर्यम्** - अश्रद्धया यत् हुतं दत्तं तप्तं च भवति, यच्च अन्यत् कर्म आचरितं तत् सर्वम् असत् इत्युच्यते । न तत् इहलोके फलं ददाति, नापि परलोके । तस्मात् असत् इति व्यपदेशः अर्थवान् ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥

श्रीमद्भगवद्गीता

अथ अष्टादशोऽध्यायः

## मोक्षसन्न्यासयोगः

**अर्जुन उवाच** - **सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥18.1॥**

**पदार्थः** - तत्त्वम् = याथात्म्यम्, केशिनिषूदन = केशिसंहारक ! वेदितुम् = ज्ञातुम् ।

**अन्वयः** - महाबाहो हृषीकेश केशिनिषूदन ! सन्न्यासस्य त्यागस्य च तत्त्वं पृथक् वेदितुम् इच्छामि ।

**तात्पर्यम्** - श्रीकृष्ण ! सन्न्यासस्य याथात्म्यं त्यागस्य च याथात्म्यं पृथक् पृथक् ज्ञातुम् अभिलषामि ।

**व्याकरणम्** - केशिनः निषूदनः केशिनिषूदनः, षष्ठीतत्पुरुषः, तत्सम्बुद्धौ केशिनिषूदन ।

**श्रीभगवानुवाच** - **काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥18.2॥**

**पदार्थः** - काम्यानाम् = फलमुद्दिश्य क्रियमाणानाम्, कर्मणाम् = क्रियाणाम्, न्यासम् = परित्यागम्, कवयः = पण्डिताः, विदुः = आचक्षते, विचक्षणाः = विवेकिनः, सर्वकर्मफलत्यागम् = सकलकर्मप्रयोजनपरित्यागम्, प्राहुः = कथयन्ति ।

**अन्वयः** - काम्यानां कर्मणां न्यासं सन्न्यासं कवयः विदुः । सर्वकर्मफलत्यागं विचक्षणाः त्यागं प्राहुः ।

**तात्पर्यम्** - फलमुद्दिश्य क्रियमाणानां कर्मणां परित्यागं सन्न्यासः इति पण्डिताः आचक्षते । सर्वकर्म-प्रयोजनपरित्यागं विवेकिनः त्यागः इति कथयन्ति ।

**व्याकरणम्** - सर्वाणि कर्माणि सर्वकर्माणि - कर्मधारयः । सर्वकर्मणां फलम् सर्वकर्मफलम् - षष्ठीतत्पुरुषः । सर्वकर्मफलस्य त्यागः सर्वकर्मफलत्यागः, तम् - षष्ठीतत्पुरुषः ।

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥18.3॥**

**पदार्थः** - एके = अन्ये, मनीषिणः = बुधाः, दोषवत् = दोषः इव, त्याज्यम् = वर्जनीयम्, प्राहुः = वर्णयन्ति, अपरे = इतरे, यज्ञदानतपःकर्म = यागवितरणतपःकर्म ।

**अन्वयः** - एके मनीषिणः दोषवत् कर्म त्याज्यम् इति प्राहुः । अपरे यज्ञदानतपःकर्म च न त्याज्यम् इति ।

**तात्पर्यम्** - अन्ये बुधाः यथा दोषः तथा कर्म वर्जनीयम् इति वदन्ति । इतरे तु यज्ञदानतपःकर्म न वर्जनीयम् इति वदन्ति ।

**व्याकरणम्** - यज्ञश्च दानं च तपश्च यज्ञदानतपांसि - द्वन्द्वः । यज्ञदानतपांसि इति कर्म यज्ञदानतपःकर्म - कर्मधारयः । त्यजधातोः कर्मणि ण्यति त्याज्यमिति शब्दः, त्यक्तव्यम् इत्यर्थः ।

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥18.4॥**

**पदार्थः** – भरतसत्तम = भरतश्रेष्ठ, निश्चयम् = निर्धारणम्, पुरुषव्याघ्र = पुरुषश्रेष्ठ ! सम्प्रकीर्तितः = वर्णितः ।
**अन्वयः** – भरतसत्तम ! तत्र त्यागे मे निश्चयं शृणु, पुरुषव्याघ्र ! त्यागः हि त्रिविधः सम्प्रकीर्तितः ।
**तात्पर्यम्** – भरतश्रेष्ठ अर्जुन ! तत्र त्यागे तावत् मम निर्धारणं शृणु । अर्जुन ! त्यागः त्रिविधः वर्णितः ।
**व्याकरणम्** – पुरुषः व्याघ्रः इव पुरुषव्याघ्रः, तत्सम्बुद्धौ पुरुषव्याघ्र – कर्मधारयः ।

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥18.5॥**

**पदार्थः** – यज्ञदानतपःकर्म = यागः दानं तपः च इति कर्म, कार्यम् = कर्तव्यम्, मनीषिणाम् = विदुषाम्, पावनानि = शुद्धिकराणि ।
**अन्वयः** – यज्ञदानतपःकर्म न त्याज्यं तत् कार्यम् एव । यज्ञः दानं तपः च एव मनीषिणां पावनानि ।
**तात्पर्यम्** – यज्ञः दानं तपश्च इति एतत् कर्मत्रयं न सर्वथा वर्जनीयम् । तत् अवश्यं कर्तव्यम् । यतः तत् त्रिविधं कर्म मनीषिणां शुद्धिकरम् ।
**माध्वमतम्** – मनीषिणाम् = भगवत्तत्त्वज्ञानिनाम् ।
**व्याकरणम्** – मनीषा (बुद्धिः) एषाम् एषु वा अस्तीति मनीषिणः – मतुबर्थे इनिः ।

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥18.6॥**

**पदार्थः** – सङ्गम् = आसक्तिम्, फलानि = प्रयोजनानि, कर्तव्यानि = आचरणीयानि, निश्चितम् = निर्णीतम्, मतम् = अभीष्टम् ।
**अन्वयः** – पार्थ ! एतानि अपि तु कर्माणि सङ्गं फलानि च त्यक्त्वा कर्तव्यानि इति निश्चितं मे उत्तमं मतम् ।
**तात्पर्यम्** – अर्जुन ! एतानि कर्माणि 'अहमेव करोमि' इति बुद्धिं विना, फलापेक्षां च विना कर्तव्यानि इति यत् निर्णीयते तदेव मम परमं मतम् इति जानीहि ।

**नियतस्य तु सन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥18.7॥**

**पदार्थः** – नियतस्य = नित्यस्य, संन्यासः = परित्यागः, न उपपद्यते = न युज्यते, मोहात् = अज्ञानात्, परिकीर्तितः = कथितः ।
**अन्वयः** – नियतस्य कर्मणः तु सन्यासः न उपपद्यते । मोहात् तस्य परित्यागः तामसः परिकीर्तितः ।
**तात्पर्यम्** – काम्यं नित्यं चेति यत् द्विविधं कर्म वर्तते तत्र नित्यस्य कर्मणः त्यागः सर्वथा न युज्यते । यदि अज्ञानात् तस्य त्यागः क्रियते तर्हि सः त्यागः तमोगुणप्रयुक्तः इति निश्चीयते ।

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥18.8॥**

**पदार्थः** – कायक्लेशभयात् = शरीरदुःखभीत्या ।

**अन्वयः** – कायक्लेशभयात् दुःखम् इति एव यत् कर्म त्यजेत् सः राजसं त्यागं कृत्वा त्यागफलं न एव लभेत् ।

**तात्पर्यम्** – यः पुनः शरीरायासभयात् दुःखं भवतीति मत्वा कर्म त्यजति सः त्यागः राजसः इत्युच्यते । तस्य च त्यागस्य सात्त्विकत्यागफलं सर्वथा न सम्भवति । तस्मात् तादृशः त्यागः न श्रेयस्करः ।

**व्यकरणम्** – कायस्य क्लेशः कायक्लेशः – षष्ठीतत्पुरुषः । कायक्लेशात् भयं कायक्लेशभयम्, तस्मात्– पञ्चमीतत्पुरुषः । त्यागस्य फलम् त्यागफलम् – षष्ठीतत्पुरुषः ।

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥18.9॥**

**पदार्थः** – कार्यम् = कर्तव्यम्, नियतं कर्म = नित्यकर्म ।

**अन्वयः** – अर्जुन ! सङ्गं फलं च एव त्यक्त्वा कार्यम् इति एव यत् नियतं कर्म क्रियते सः त्यागः सात्त्विकः मतः ।

**तात्पर्यम्** – हे अर्जुन ! अहं करोमीति कर्तृत्वाभिनिवेशं विना, फलापेक्षां च विना मया इदम् अवश्यं कर्तव्यम् इति बुद्ध्या यः कर्म करोति तत्र यः कर्तृत्वाभिनिवेशस्य तथा फलस्य त्यागः सः सात्त्विकः त्यागः इत्युच्यते ।

**माध्वमतम्** – त्यागफलम् = भगवत्प्रीतिम् ।

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥18.10॥**

**पदार्थः** – सत्त्वसमाविष्टः = सत्त्वोद्रेकसम्पन्नः, छिन्नसंशयः = अपगतसन्देहः, मेधावी = बुद्धिमान्, अकुशलम् = अशोभनम्, कुशले = शोभने, अनुषज्जते = प्रीतिं करोति ।

**अन्वयः** – सत्त्वसमाविष्टः छिन्नसंशयः मेधावी त्यागी अकुशलं कर्म न द्वेष्टि । कुशले न अनुषज्जते ।

**तात्पर्यम्** – सत्त्वगुणेन आविष्टः यः पुरुषः सः शैत्यकाले यत् प्रातःस्नानादि क्लेशकरं कर्म वर्तते तत्र न द्वेषं करोति, ग्रीष्मकाले तादृशमेव यत् सुखकरं कर्म वर्तते तत्र न प्रीतिं भजते । सः एव त्यागी, सः एव प्राज्ञः, स एव च सन्देहरहितः ।

**माध्वमतम्** – मेधावी = भगवत्तत्त्वज्ञानी, अकुशलं कर्म = तत्कालिकसुखदं न, किन्तु कायक्लेशदं कर्म ।

**व्याकरणम्** – सत्त्वेन समाविष्टः सत्त्वसमाविष्टः – तृतीयातत्पुरुषः । मेधा अस्य अस्मिन् वा अस्तीति मेधावी – मतुबर्थे विनिप्रत्ययः । छिन्नः संशयः यस्य सः छिन्नसंशयः – बहुव्रीहिः ।

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥18.11॥**

**पदार्थः** – देहभृता = शरीरधारिणा, अशेषतः = सर्वात्मना, कर्मफलत्यागी = कर्मप्रयोजनपरित्यागी ।

**अन्वयः** – देहभृता अशेषतः कर्माणि त्यक्तुं नहि शक्यम् । यः तु कर्मफलत्यागी सः त्यागी इति अभिधीयते ।

**तात्पर्यम्** – न हि केनापि पुरुषेण सर्वाणि कर्माणि त्यक्तुं शक्यन्ते । यदि त्यज्यन्ते तर्हि जीवनमेव दुष्करं भवति। तस्मात् कर्मणां फलं यः त्यजति स एव त्यागी, नान्यः इति निर्णयः युक्तः ।

**व्याकरणम्** – देहं बिभर्ति इति देहभृत् – कर्तरि क्विप् उपपदसमासः च । कर्मणां फलं कर्मफलम् – षष्ठीतत्पुरुषः । कर्मफलस्य त्यागी कर्मफलत्यागी – षष्ठीतत्पुरुषः ।

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥18.12॥**

**पदार्थः** – अनिष्टम् = अनभिमतम्, इष्टम् = अभिमतम्, मिश्रम् = सङ्कीर्णम्, त्रिविधम् = त्रिप्रकारम्, फलम् = प्रयोजनम्, अत्यागिनाम् = त्यागरहितानाम्, प्रेत्य = मरणानन्तरम्, क्वचित् = कदापि ।

**अन्वयः** – अनिष्टम् इष्टं मिश्रं च इति कर्मणः त्रिविधं फलम् । अत्यागिनां प्रेत्य भवति सन्न्यासिनां तु न क्वचित् ।

**तात्पर्यम्** – ये तु कर्मफलम् अपेक्ष्य कर्म कुर्वन्ति ते सकामाः । तेषां कर्मफलं यदि पुण्यं तर्हि देवत्वम्, यदि पुनः पापं तर्हि नारकित्वम्, अथ उभयं तर्हि मनुष्यत्वम् इति फलविभागः । ये पुनः फलापेक्षां विना भगवदर्पणबुद्ध्या कर्म कुर्वन्ति ते सन्न्यासिनः । तेषां तु ईदृशं फलं न सम्भवत्येव । तेषां मोक्षः एव फलम् ।

**माध्वमतम्**– ये कर्मफलं न त्यजन्ति तेषां नरकाद्यनिष्टं स्वर्गादीष्टं मानुषादिमिश्रफलं च भवति । फलत्यागिनां तु पूर्वोक्तफलं न कदापि भवति ।

**व्याकरणम्** – न त्यागिनः अत्यागिनः, तेषाम् – नञ्तत्पुरुषः ।

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥18.13॥**

**पदार्थः** – सांख्ये = वेदान्ते, कृतान्ते = कर्मसमाप्तिविशिष्टे, सर्वकर्मणाम् = सकलक्रियाणाम्, सिद्धये = प्राप्तये, प्रोक्तानि = निर्दिष्टानि, निबोध = जानीहि ।

**अन्वयः** – महाबाहो ! साङ्ख्ये कृतान्ते सर्वकर्मणां सिद्धये प्रोक्तानि एतानि पञ्च कारणानि मे (वचनात्) निबोध ।

**तात्पर्यम्** – अर्जुन ! सर्वेषां कर्मणां यत्र परिसमाप्तिः भवति तादृशे वेदान्ते सर्वकर्मणां सिद्धये निर्णीतानि पञ्च कारणानि मम वचनात् जानीहि ।

**माध्वमतम्**– साङ्ख्ये कृतान्ते = ज्ञानसिद्धान्ते कपिलाख्यविष्णुकृतसाङ्ख्यशास्त्रे ।

**व्याकरणम्** – कृतानाम् (कर्मणाम्) अन्तः समाप्तिः यत्र सः कृतान्तः, तस्मिन् – बहुव्रीहिः । सर्वाणि कर्माणि सर्वकर्माणि, तेषाम् – कर्मधारयः ।

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥18.14॥**

**पदार्थः** – अधिष्ठानम् = शरीरम्, पृथग्विधम् = नानाप्रकारम्, करणम् = इन्द्रियम्, पृथक्चेष्टाः = भिन्नव्यापाराः, दैवम् = दिष्टम् ।

**अन्वयः** – अधिष्ठानं तथा कर्ता, पृथग्विधं करणं च, विविधाः च पृथक्चेष्टाः अत्र च एव पञ्चमं दैवम् ।

**तात्पर्यम्** – शरीरम्, अहङ्कारः, नेत्रश्रोत्रादीनि ज्ञानसम्बन्धीनि, वाक्पादादीनि कर्मसम्बन्धीनि, मनश्च इति एकादश

इन्द्रियाणि, कार्यतः स्वरूपतश्च भिन्नरूपाः प्राणापानादीनां व्यापाराः तथा एतेषां प्रेरकं दैवम् इति एतानि पञ्च सर्वेषां कर्मणां सिद्धौ कारणानि।

**माध्वमतम्** – शरीरादि अधिष्ठानम्, जीवपरमात्मरूपौ कर्तारौ, इन्द्रियादीनि करणानि, शारीरकमानसिकरूपाः क्रियाः अदृष्टं चेति कार्यसामान्ये कारणानि भवन्ति।

**व्याकरणम्** – पृथक् विधा यस्य तत् पृथग्विधम् – बहुव्रीहिः। पृथक् चेष्टा येषां ते पृथक्चेष्टाः – बहुव्रीहिः।

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥18.15॥**

**पदार्थः** – शरीरवाङ्मनोभिः = कायवाक्चित्तैः, न्याय्यम् = धर्म्यम्, विपरीतम् = अधर्म्यम्, प्रारभते = करोति, हेतवः = कारणभूताः।

**अन्वयः** – नरः शरीरवाङ्मनोभिः न्याय्यं वा विपरीतं वा यत् कर्म प्रारभते तस्य एते पञ्च हेतवः।

**तात्पर्यम्** – सर्वकर्मसिद्धौ पञ्च कारणानि इत्युक्तम्। तैः जायमानानि कर्माणि प्रकारान्तरेण कायिकं वाचिकं मानसिकं चेति त्रेधा विभक्तुं शक्यम्। तच्च त्रिविधं कर्म धर्म्यम् अधर्म्यं वा भवितुमर्हति।

**व्याकरणम्** – शरीरं च वाक् च मनश्च शरीरवाङ्मनांसि, तैः – द्वन्द्वः। न्यायात् अनपेतम् न्याय्यम् – अनपेतार्थे यत्, युक्तमिति पर्यवसितोऽर्थः।

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥18.16॥**

**पदार्थः** – तत्र = तस्मिन् प्रसङ्गे, एवं सति = पञ्च हेतवः इति स्थितौ, कर्तारम् = आचरितारम्, आत्मानम् = स्वम्, केवलम् = शुद्धम्, अकृतबुद्धित्वात् = असंस्कृतबुद्धित्वात्, दुर्मतिः = दुष्टबुद्धिः।

**अन्वयः** – तत्र एवं सति यः अकृतबुद्धित्वात् कर्तारं केवलम् आत्मानं तु पश्यति दुर्मतिः सः न पश्यति।

**तात्पर्यम्** – एवं सर्वकर्मसिद्धौ पञ्च कारणानि इति स्थितौ यः पुरुषः सर्वेषां कर्मणां कर्ता अहम् (आत्मा) इति चिन्तयति तस्य शास्त्रोपदेशेन बुद्धिरेव न संस्कृता इति निर्णयः। ततश्च सः जानन्नपि न जानाति इत्येव बोद्धव्यम्।

**माध्वमतम्**– पञ्चविधकारणेषु सत्स्वपि शास्त्रश्रवणादिना असंस्कृतबुद्धिः पुरुषः आत्मानं स्वतन्त्रकर्ता इति मन्यते। सः तत्त्वज्ञानार्हः न भवति।

**व्याकरणम्** – कृता बुद्धिः यस्य सः कृतबुद्धिः – बहुव्रीहिः। न कृतबुद्धिः अकृतबुद्धिः – नञ्तत्पुरुषः। अकृतबुद्धेः भावः अकृतबुद्धित्वम्, तस्मात् – भावार्थे त्वप्रत्ययः। दुष्टा मतिः यस्य सः दुर्मतिः–बहुव्रीहिः।

**यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते।**
**हत्वापि स इमान् लोकान्न हन्ति न निबध्यते ॥18.17॥**

**पदार्थः** – अहङ्कृतः = अहं कर्ता इति, भावः = अभिप्रायः, बुद्धिः = अन्तःकरणम्, लिप्यते = कलुषीभवति, लोकान् = प्राणिनः, हत्वा = विनाश्य, हन्ति = नाशयति, निबध्यते = बद्धो भवति।

**अन्वयः** – यस्य अहङ्कृतः भावः न, यस्य बुद्धिः न लिप्यते सः इमान् लोकान् हत्वा अपि न हन्ति, न निबध्यते।

**तात्पर्यम्** – यस्य सर्वेषां कर्मणां कर्ता अहं न इति अभिप्रायो वर्तते, यस्य च अन्तःकरणम् इदम् इष्टम् इदं च अनिष्टमिति विचार्य कर्मसु न प्रवर्तते सः चेतनान् मारयन्नपि न मारणप्रयुक्तं पापं प्राप्नोति। तस्मात् सः कदापि न संसारे बद्धो भवति।

**माध्वमतम्**– मयि स्वतन्त्रकर्तृत्वं नास्ति इति भावेन यः कर्माणि करोति तस्य तत्कर्मलेपः न भवति।

**व्याकरणम्** – अहं करोमि इति अहङ्कृत्, तस्य अहङ्कृतः – कर्तरि क्विप् उपपदसमासः च।

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।**
**करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥18.18॥**

**पदार्थः** – ज्ञानम् = सर्वविषयज्ञानम्, ज्ञेयम् = ज्ञातव्यम्, परिज्ञाता = वेदिता, कर्मचोदना = कर्मप्रवर्तना, करणम् = साधनम्, कर्म = ईप्सिततमम्, कर्ता = आचरिता, कर्मसङ्ग्रहः = कर्मप्रकारः।

**अन्वयः** – ज्ञानं ज्ञेयं परिज्ञाता इति कर्मचोदना त्रिविधा। करणं कर्म कर्ता इति कर्मसङ्ग्रहः त्रिविधः।

**तात्पर्यम्** – ज्ञानं ज्ञेयं ज्ञाता चेति कर्मप्रवर्तकं त्रिविधम्। तत्र करणं स्रुगादि। कर्म ज्योतिष्ठोमादि। कर्ता च तन्निर्वर्तकः पुरुषः इति विवेकः।

**माध्वमतम्**– कर्मसु जीवानाम् ईश्वरप्रेरणा ज्ञानं ज्ञेयं परिज्ञाता इति त्रिविधभगवत्स्वरूपरूपा भवति। इन्द्रियादिकरणम्, हस्तादिचेष्टा, जीवेश्वरौ चेति त्रिविधः कर्मकरणसङ्ग्रहः।

**व्याकरणम्** – सङ्गृह्यते अत्र इति सङ्ग्रहः – अधिकरणे अच्। कर्मणः सङ्ग्रहः कर्मसङ्ग्रहः – षष्ठीतत्पुरुषः।

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।**
**प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥18.19॥**

**पदार्थः** – गुणभेदतः = सत्त्वादिगुणभेदात्, त्रिधा = प्रकारत्रयेण, गुणसङ्ख्याने = साङ्ख्यशास्त्रे, यथावत् = यथातथम्, प्रोच्यते = कथ्यते।

**अन्वयः** – ज्ञानं कर्म च कर्ता च गुणभेदतः त्रिधा एव गुणसङ्ख्याने प्रोच्यते। तानि अपि यथावत् शृणु।

**तात्पर्यम्** – ज्ञानं कर्म कर्ता च सत्त्वादिगुणभेदात् त्रिप्रकारः इति साङ्ख्यशास्त्रे प्रतिपादितम्। तदेव यथावत् निरूपयामि, शृणु।

**रामानुजीयमतम्** – गुणसङ्ख्यानम् – गुणकार्यगणनम्

**व्याकरणम्** – गुणानां भेदः गुणभेदः, तेन गुणभेदेन – षष्ठीतत्पुरुषः। ततः स्वार्थे तसिप्रत्यये गुणभेदतः इति शब्दः। सङ्ख्यायन्ते (गुणाः) अनेन इति सङ्ख्यानम् – करणे ल्युट्। गुणानां सङ्ख्यानं गुणसङ्ख्यानम्, तस्मिन् – षष्ठीतत्पुरुषः।

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥18.20॥**

**पदार्थः** – सर्वभूतेषु = सकलभूतेषु, अव्ययम् = अक्षरम्, भावम् = परमात्मतत्त्वम्, विभक्तेषु = पृथक् स्थितेषु,

अविभक्तम् = विभागरहितम्, एकम् = अद्वितीयम्, ईक्षते = पश्यति, ज्ञानम् = सम्यक् ज्ञानम्।

**अन्वयः** – विभक्तेषु सर्वभूतेषु अव्ययम् एकं भावं येन ईक्षते तत् ज्ञानं सात्त्विकं विद्धि।

**तात्पर्यम्** – अत्र यावन्ति भूतानि सन्ति तानि परस्परं विभिन्नानि। तेषु सर्वत्र स्थितं समानं परमात्मतत्त्वं येन पश्यति तत् ज्ञानं सात्त्विकं जानीहि।

**व्याकरणम्** – न विभक्तम् अविभक्तम् – नञ्तत्पुरुषः।

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान्।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥18.21॥**

**पदार्थः** – भूतेषु = प्राणिषु, पृथग्विधान् = विविधान्, नानाभावान् = भिन्नान् आत्मनः, पृथक्त्वेन = भेदेन।

**अन्वयः** – सर्वेषु भूतेषु पृथग्विधान् नानाभावान् पृथक्त्वेन तु यत् ज्ञानं वेत्ति तत् ज्ञानं राजसं विद्धि।

**तात्पर्यम्** – सर्वेषु भूतेषु अयं दुःखी, अयं सुखी इत्यादिरूपेण नाना क्षेत्रज्ञान् येन पश्यति तत् ज्ञानं राजसं भवति।

**व्याकरणम्** – नाना भावाः नानाभावाः, तान् – कर्मधारयः।

**यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम्।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥18.22॥**

**पदार्थः** – एकस्मिन् कार्ये = देहादौ, कृत्स्नवत् = परिपूर्णवत्, सक्तम् = लग्नम्, अहैतुकम् = हेतुशून्यम्, अतत्त्वार्थवत् = परमार्थशून्यम्, अल्पम् = नीचम्, तामसम् = तमस्सम्बन्धि, उदाहृतम् = प्रोक्तम्।

**अन्वयः** – यत् तु एकस्मिन् कार्ये कृत्स्नवत् सक्तम् अहैतुकम् अतत्त्वार्थवत् अल्पं च तत् तामसम् उदाहृतम्।

**तात्पर्यम्** – एकस्मिन् देहे प्रतिमादौ वा परिपूर्णवत् एतावानेव ईश्वरः इत्यभिप्रायेण सक्तम् , कारणविहीनम् परमार्थावलम्बनशून्यम्, तुच्छं च तत् ज्ञानं तामसमिति कथ्यते।

**व्याकरणम्** – कृत्स्नेन तुल्यम् कृत्स्नवत् – तुल्यार्थे वतिप्रत्ययः। तत्त्वार्थः अस्य अस्मिन् वा अस्ति इति तत्त्वार्थवत् – मतुप्। न तत्त्वार्थवत् अतत्त्वार्थवत् – नञ्तत्पुरुषः।

**नियतं सङ्गरहितमरागद्वेषतः कृतम्।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥18.23॥**

**पदार्थः** – नियतम् = नित्यम्, सङ्गरहितम् = आसक्तिवर्जितम्, अरागद्वेषतः = रागद्वेषराहित्येन, अफलप्रेप्सुना = अफलाकाङ्क्षिणा।

**अन्वयः** – अफलप्रेप्सुना अरागद्वेषतः नियतं सङ्गरहितं यत् कृतं कर्म तत् सात्त्विकम् उच्यते।

**तात्पर्यम्**– नित्यत्वेन विहितम्, अहम् अस्य कर्ता इत्यभिनिवेशशून्यम्, रागद्वेषराहित्येन च फलनिरपेक्षेण पुरुषेण कृतं यत् कर्म तत् सात्त्विकम् इति उच्यते।

**व्याकरणम्** – सङ्गेन रहितम् सङ्गरहितम् – तृतीयातत्पुरुषः। रागश्च द्वेषश्च रागद्वेषौ – द्वन्द्वः। न रागद्वेषौ अरागद्वेषौ, ताभ्याम् अरागद्वेषाभ्याम् – नञ्तत्पुरुषः, ततः स्वार्थे तसिः। फलं प्रेप्सुः फलप्रेप्सुः – द्वितीया तत्पुरुषः। न फलप्रेप्सुः अफलप्रेप्सुः, तेन – नञ्तत्पुरुषः।

**यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥18.24॥**

**पदार्थः** – कामेप्सुना = फलाभिलाषयुक्तेन, साहङ्कारेण वा = अहङ्कारसहितेन वा, बुहुलायासम् = अधिकायासम्।

**अन्वयः** – कामेप्सुना साहङ्कारेण वा पुनः बहुलायासं तु यत् कर्म क्रियते तत् राजसम् उदाहृतम्।

**तात्पर्यम्** – फलापेक्षया अहङ्कारेण च यत् श्रमसाध्यं कर्म क्रियते तत् राजसम् इत्युच्यते।

**व्याकरणम्** – कामम् ईप्सुः कामेप्सुः, तेन – द्वितीयातत्पुरुषः। अहङ्कारेण सहितः साहङ्कारः, तेन – बहुव्रीहिः। बहुलः आयासः यस्मिन् तत् बहुलायासम् – बहुव्रीहिः।

**अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥18.25॥**

**पदार्थः** – अनुबन्धम् = भावि अशुभम्, क्षयम् = शरीरश्रमादेः नाशनम्, हिंसाम् = प्राणिपीडनम्, पौरुषम् = सामर्थ्यम्, अनवेक्ष्य = अविगणय्य, मोहात् = अविवेकात्।

**अन्वयः** – अनुबन्धं क्षयं हिंसां पौरुषं च अनवेक्ष्य मोहात् यत् कर्म आरभ्यते तत् तामसम् उच्यते।

**तात्पर्यम्** – पश्चात् भाविनम् अनर्थम्, शरीरसामर्थ्यस्य धनादेश्च नाशम्, प्राणिपीडनम्, आत्मसामर्थ्यं च अविचार्य अविवेकेनैव यत् कर्म क्रियते तत् तामसम् इति अभिधीयते।

**माध्वमतम्**– कर्मान्तरमेवानुबध्यमानम्, नाशम्, परपीडाम्, आत्मनः कार्यसामर्थ्यं च अनवेक्ष्य यत् कर्म आरभ्यते तत् तामसम्।

**व्याकरणम्** – न अवेक्ष्य अनवेक्ष्य – नञ्तत्पुरुषः।

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥18.26॥**

**पदार्थः** – मुक्तसङ्गः = फलाभिलाषरहितः, धृत्युत्साहसमन्वितः = धैर्यौत्सुक्यसहितः, अनहंवादी = अहङ्कारशून्यः, सिद्ध्यसिद्ध्योः = लाभालाभयोः, निर्विकारः = विकारशून्यः, कर्ता = आचरिता, सात्त्विकः = सत्त्ववान्, उच्यते = कथ्यते।

**अन्वयः** – मुक्तसङ्गः धृत्युत्साहसमन्वितः अनहंवादी सिद्ध्यसिद्ध्योः निर्विकारः कर्ता सात्त्विकः उच्यते।

**तात्पर्यम्** – यः तावत् फलापेक्षाम् अकुर्वन्, अहं करोमि इति अवदन्, धैर्येण औत्सुक्येन युक्तः, कर्मणि सिद्धे असिद्धे च समानचित्तः सन् कर्म करोति सः सात्त्विकः इति उच्यते।

**व्याकरणम्** – मुक्तः सङ्गः येन सः मुक्तसङ्गः – बहुव्रीहिः। न अहंवादी अनहंवादी – नञ्तत्पुरुषः। धृतिश्च उत्साहश्च धृत्युत्साहौ – द्वन्द्वः। धृत्युत्साहाभ्यां समन्वितः धृत्युसाहसमन्वितः – तृतीयातत्पुरुषः। सिद्धिश्च असिद्धिश्च सिद्ध्यसिद्धी, तयोः – द्वन्द्वः। निर्गतः विकारः यस्मात् सः निर्विकारः – बहुव्रीहिः। सत्त्वम् अस्य अस्मिन् वा अस्ति इति सात्त्विकः – मतुबर्थे ठन्।

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥18.27॥**

**पदार्थः** - रागी = रागवान्, कर्मफलप्रेप्सुः = कर्मफलार्थी, लुब्धः = लोभी, हिंसात्मकः = पीडास्वभावः, अशुचिः = अशुद्धः, हर्षशोकान्वितः = सुखदुःखसहितः, राजसः = रजोगुणयुक्तः, परिकीर्तितः = ख्यातः ।

**अन्वयः** - रागी कर्मफलप्रेप्सुः लुब्धः हिंसात्मकः अशुचिः हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ।

**तात्पर्यम्** - यः भार्यापुत्रादिषु प्रीतिमान्, कर्मफलापेक्षी, कृपणः, हिंसाप्रियः, कर्मापेक्षितशुद्धिरहितः, कर्मफलसिद्धौ च सन्तुष्टः असिद्धौ च दुःखितः भवति सः कर्ता राजसः इत्युच्यते ।

**व्याकरणम्**-हिंसा आत्मा यस्य सः हिंसात्मकः - बहुव्रीहिः । न शुचिः अशुचिः - नञ्तत्पुरुषः ।

**अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥18.28॥**

**पदार्थः** - अयुक्तः = अवधानाभावात् अयोग्यः, प्राकृतः = असंस्कृतबुद्धिः, स्तब्धः = अविनीतः, शठः = वञ्चनापरः, नैष्कृतिकः = परावमानी, अलसः = मन्दः, विषादी = शोकवान्, दीर्घसूत्री = मन्दकारी ।

**अन्वयः** - अयुक्तः प्राकृतः स्तब्धः शठः नैष्कृतिकः अलसः विषादी दीर्घसूत्री च कर्ता तामसः उच्यते ।

**तात्पर्यम्** - यः अवधानाभावात् कर्मणि अयोग्यः, असंस्कृतबुद्धिः, उद्धतः, वञ्चनापरः, अन्येषां तिरस्कारकः, आलस्यशीलः, शोचनस्वभावः मन्दकारी च वर्तते सः तामसः कर्ता इत्युच्यते ।

**माध्वमतम्**- अयुक्तः = भगवदर्पणादियोगरहितः, प्राकृतः = भगवद्भक्तिसामर्थ्यशून्यः, शठः = गूढद्वेषेण कर्मकारी, नैष्कृतिकः = नीचकर्मकृत्, दीर्घसूत्री = परकृतदोषं बहोः कालात् प्राक् कृतमपि अनुचितं सूचयन् पुरुषः ।

**व्याकरणम्** - न युक्तः अयुक्तः - नञ्तत्पुरुषः । विषादः अस्य अस्मिन् वा अस्ति इति विषादी - मतुबर्थे इनिः । दीर्घं सूत्रं दीर्घसूत्रम् - कर्मधारयः । दीर्घसूत्रम् अस्य अस्मिन् वा अस्ति इति दीर्घसूत्री - मतुबर्थे इनिः ।

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ 18.29॥**

**पदार्थः** - धनञ्जय = अर्जुन ! गुणतः = गुणानुसारेण, बुद्धेः = धियः, धृतेः = धैर्यस्य, भेदम् = विभागम्, पृथक्त्वेन = विभागेन, अशेषेण = समग्रम्, प्रोच्यमानम् = कथ्यमानम् ।

**अन्वयः** - धनञ्जय ! गुणतः त्रिविधं बुद्धेः धृतेः च एव भेदं पृथक्त्वेन अशेषेण प्रोच्यमानं शृणु ।

**तात्पर्यम्** - अर्जुन ! एवं ज्ञानकर्मकर्तॄणां त्रैविध्यं प्रदर्शितम् । अधुना बुद्धेः धृतेश्च तत्कृतं भेदम् अशेषं गुणदोषनिरूपणसहितं विवृणोमि । तदाकर्णय ।

**व्याकरणम्** - गुणेन इति तृतीयाविभक्त्यन्तात् स्वार्थे तसिः, गुणतः इति शब्दः ।

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥18.30॥**

**पदार्थः** - प्रवृत्तिम् = प्रवर्तनम्, निवृत्तिम् = निवर्तनम्, कार्याकार्ये = विहितं निषिद्धं च कर्म, भयाभये = भीतिम् अभीतिं च, बन्धम् = बन्धनम्, मोक्षम् = मुक्तिम् ।

**अन्वयः** – पार्थ ! प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये बन्धं मोक्षं च या वेत्ति सा बुद्धिः सात्त्विकी ।

**तात्पर्यम्** – अर्जुन ! यः धर्मे प्रवृत्तिम् अधर्मात् च निवृत्तिम्, देशकालादिविशेषेण कर्तव्यम् अकर्तव्यं च, कथं बन्धः, कथं च मोक्षः इत्येतत् या बुद्धिः जानाति सा बुद्धिः सात्त्विकी इति कथ्यते ।

**व्याकरणम्** – कार्यं च अकार्यं च कार्याकार्ये – द्वन्द्वः । भयं च अभयं च भयाभये – द्वन्द्वः ।

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥18.31॥**

**पदार्थः** – धर्मम् = शास्त्रविहितम्, अधर्मम् = शास्त्रनिषिद्धम्, कार्यम् = कर्तव्यम्, अकार्यम् = अकर्तव्यम्, अयथावत् = अयाथार्थ्येन, प्रजानाति = वेत्ति ।

**अन्वयः** – पार्थ ! यया धर्मम् अधर्मं च कार्यं च अकार्यम् एव च अयथावत् प्रजानाति सा बुद्धिः राजसी ।

**तात्पर्यम्** – पार्थ ! यया धर्मस्य अधर्मस्य शास्त्रसम्मतस्य कार्यस्य तदसम्मतस्य च अकार्यस्य यथावत् ज्ञानं न भवति सा बुद्धिः राजसी इति कथ्यते ।

**व्याकरणम्** – न यथावत् अयथावत् –, नञ्तत्पुरुषः ।

**अधर्मं धर्ममिति या मन्यते तमसावृता ।**
**सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥18.32॥**

**पदार्थः** – तमसा = तमोगुणेन, आवृता = आच्छादिता, सर्वार्थान् = सकलविषयान्, विपरीतान् = विरुद्धान् ।

**अन्वयः** – पार्थ ! तमसा आवृता या बुद्धिः अधर्मं धर्मम् इति सर्वार्थान् विपरीतान् च मन्यते सा तामसी ।

**तात्पर्यम्** – पार्थ ! या बुद्धिः तमोगुणेन आवृता अधर्मं धर्मः इति जानाति, सर्वान् अपि अर्थान् विपरीतानेव जानाति सा बुद्धिः तामसी इति कथ्यते ।

**व्याकरणम्** – सर्वे अर्थाः सर्वार्थाः, तान् – कर्मधारयः ।

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥18.33॥**

**पदार्थः** – अव्यभिचारिण्या = अविनाभूतेन, यया धृत्या = येन प्रयत्नेन, मनःप्राणेन्द्रियक्रियाः = चित्तप्राणेन्द्रियव्यापारान्, योगेन = समाधिना, धारयते = धरति, धृतिः = प्रयत्नः ।

**अन्वयः** – पार्थ ! योगेन अव्यभिचारिण्या यया धृत्या मनःप्राणेन्द्रियक्रियाः धारयते सा धृतिः सात्त्विकी ।

**तात्पर्यम्** – अर्जुन ! फलनिरपेक्षः पुरुषः समाधिना सहैव वर्तमानया यया बुद्ध्या मनसः प्राणस्य इन्द्रियाणां च व्यापारान् धारयति तस्य पुरुषस्य सा धृतिः सात्त्विकी इत्युच्यते ।

**व्याकरणम्** – मनश्च प्राणश्च इन्द्रियाणि च मनःप्राणेन्द्रियाणि –द्वन्द्वः । मनःप्राणेन्द्रियाणां क्रियाः मनःप्राणेन्द्रियक्रियाः, ताः – षष्ठीतत्पुरुषः ।

**यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥18.34॥**

**पदार्थः** – धृत्या = प्रयत्नेन, धर्मकामार्थान् = पुरुषार्थान्, प्रसङ्गेन = कर्तृत्वाभिमानेन, फलाकाङ्क्षी = फलाभिलाषी ।

**अन्वयः** – अर्जुन ! प्रसङ्गेन फलाकाङ्क्षी यया धृत्या धर्मकामार्थान् धारयते सा धृतिः राजसी ।

**तात्पर्यम्** – अर्जुन ! कर्तृत्वाभिमानेन फलापेक्षः सन् यया धृत्या धर्मार्थकामान् पुरुषार्थान् धारयति सा धृतिः राजसी इत्युच्यते ।

**व्याकरणम्** – धर्मश्च कामश्च अर्थश्च धर्मकामार्थाः, तान् – द्वन्द्वः । फलस्य आकाङ्क्षी फलाकाङ्क्षी – षष्ठीतत्पुरुषः ।

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥18.35॥**

**पदार्थः** – दुर्मेधाः = कुत्सितबुद्धिः, स्वप्नम् = निद्राम्, शोकम् = दुःखम्, विषादम् = ग्लानिम्, मदम् = गर्वम् ।

**अन्वयः** – पार्थ ! दुर्मेधाः यया स्वप्नं भयं शोकं विषादं मदम् एव च न विमुञ्चति सा धृतिः तामसी ।

**तात्पर्यम्** – अर्जुन ! कुत्सितबुद्धिः यया धृत्या निद्रां त्रासं दुःखं ग्लानिं गर्वमपि न त्यजति सा धृतिः तामसी ।

**व्याकरणम्** – दुष्टा मेधा यस्य सः दुर्मेधाः । दुर्मेधस् इति शब्दः, समासान्तः स्वार्थे असिच्प्रत्ययः ।

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥18.36॥**

**पदार्थः** – रमते = सन्तुष्टिं प्राप्नोति, दुःखान्तम् = दुःखोपशमम्, निगच्छति = प्राप्नोति ।

**अन्वयः** – भरतर्षभ ! इदानीं मे (वचनात्) त्रिविधं सुखं तु शृणु यत्र अभ्यासात् रमते दुःखान्तं च निगच्छति ।

**तात्पर्यम्** – भरतश्रेष्ठ ! यथा क्रियाणां कर्तृकर्मकरणानां च गुणभेदात् त्रिविधत्वं तथा तत्फलस्य सुखस्यापि तत् त्रिविधत्वं सम्भवति । तच्च सुखं तादृशं भवति यत्र पुरुषः समाधिवशात् अधिकां प्रीतिं प्राप्नोति, दुःखस्य अवसानं च । तदिदं कथयामि आकर्णय ।

**व्याकरणम्** – दुःखस्य अन्तः दुःखान्तः, तम् – षष्ठीतत्पुरुषः ।

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥18.37॥**

**पदार्थः** – अग्रे = पूर्वम्, विषम् इव = विषवत्, परिणामे = परिपाके, अमृतोपमम् = अमृतसदृशम्, आत्मबुद्धिप्रसादजम् = स्वमतिनैर्मल्यसञ्जातम् ।

**अन्वयः** – यत् तत् अग्रे विषम् इव परिणामे अमृतोपमम् आत्मबुद्धिप्रसादजं तत् सुखं सात्त्विकं प्रोक्तम् ।

**तात्पर्यम्** – यत् सुखं पूर्वं विषवत् परिपाके अमृतसदृशं स्वमतिनैर्मल्यसञ्जातं तत् सुखं सात्त्विकं कथितम् ।

**व्याकरणम्** – आत्मनः बुद्धिः आत्मबुद्धिः – षष्ठीतत्पुरुषः । आत्मबुद्धेः प्रसादः आत्मबुद्धिप्रसादः – षष्ठीतत्पुरुषः । आत्मबुद्धिप्रसादात् जायते इति आत्मबुद्धिप्रसादजम् – कर्तरि डप्रत्ययः उपपदसमासश्च ।

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ।।18.38।।**

**पदार्थः** – विषयेन्द्रियसंयोगात् = विषयेन्द्रियसम्बन्धात्, अग्रे = आदौ, अमृतोपमम् = अमृतसदृशम्, परिणामे = अन्ते, स्मृतम् = अभिहितम् ।

**अन्वयः** – यत् तत् विषयेन्द्रियसंयोगात् अग्रे अमृतोपमं परिणामे विषमिव तत् सुखं राजसं स्मृतम् ।

**तात्पर्यम्** – विषयेन्द्रियसम्बन्धात् जातं यत् सुखं तत् आदौ अमृतसदृशम् अन्ते विषसदृशं च भवति । तत् सुखं राजसम् अभिहितम् ।

**व्याकरणम्** – विषयाश्च इन्द्रियाणि च विषयेन्द्रियाणि – द्वन्द्वः । विषयान्द्रियाणां संयोगः विषयेन्द्रियसंयोगः, तस्मात् – षष्ठीतत्पुरुषः ।

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ।।18.39।।**

**पदार्थः** – अग्रे = आदौ, अनुबन्धे = उत्तरकाले, आत्मनः = स्वस्य, मोहनम् = अज्ञानकरम्, निद्रालस्य-प्रमादोत्थम् = स्वापमान्द्यानवधानसम्भूतम्, उदाहृतम् = वर्णितम् ।

**अन्वयः** – यत् सुखम् अग्रे च अनुबन्धे च आत्मनः मोहनं निद्रालस्यप्रमादोत्थं तत् तामसम् उदाहृतम् ।

**तात्पर्यम्** – निद्रा आलस्यम् अनवधानं चेति एतैः कारणैः जातं यत् सुखं तत् आदौ अन्ते च आत्मनः मोहकरं भवति । तत् तामसम् इत्युक्तम् ।

**व्याकरणम्** – निद्रा च आलस्यं च प्रमादश्च निद्रालस्यप्रमादाः – द्वन्द्वः । निद्रालस्यप्रमादेभ्यः उत्तिष्ठति इति निद्रालस्यप्रमादोत्थम् – कर्तरि कप्रत्ययः उपपदसमासश्च ।

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ।।18.40।।**

**पदार्थः** – पृथिव्याम् = भूमौ, दिवि = द्युलोके, प्रकृतिजैः = प्रकृतिसम्भवैः, मुक्तम् = त्यक्तम्, सत्त्वम् = प्राणिजातम् ।

**अन्वयः** – प्रकृतिजैः एभिः त्रिभिः गुणैः यत् मुक्तं स्यात् तत् सत्त्वं पृथिव्यां न अस्ति, दिवि देवेषु वा पुनः (नास्ति) ।

**तात्पर्यम्** – प्रकृतिस्थितैः सत्त्वादिभिः त्रिभिः गुणैः निर्मुक्तः तादृशः प्राणी भूलोके नास्ति देवलोकेऽपि नास्ति ।

**व्याकरणम्** – प्रकृतेः जाताः प्रकृतिजाः, तैः – कर्तरि डप्रत्ययः उपपदसमासश्च ।

**ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ।।18.41।।**

**पदार्थः** – परन्तप ! = शत्रुतापन ! ब्राह्मणक्षत्रियविशाम् = ब्राह्मणराजन्यवैश्यानाम्, स्वभावप्रभवैः = प्रकृत्या जातैः, गुणैः = सत्त्वरजस्तमोभिः, कर्माणि = शमादीनि कर्माणि, प्रविभक्तानि = विभक्तानि ।

**अन्वयः**– परन्तप ! ब्राह्मणक्षत्रियविशां शूद्राणां च स्वभावप्रभवैः गुणैः कर्माणि प्रविभक्तानि ।

**तात्पर्यम्** – अर्जुन ! ये ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च सन्ति तेषां तत्तद्गुणवशात् कर्माणि विभक्तानि सन्ति।

**व्याकरणम्** – ब्राह्मणाश्च क्षत्रियाश्च विशश्च (शकारान्तपुल्लिङ्ग विट्शब्दस्य बहुवचनम्) ब्राह्मणक्षत्रियविशः, तेषाम् – द्वन्द्वः । स्वभावात् प्रभवाः स्वभावप्रभवाः, तैः – पञ्चमीतत्पुरुषः ।

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥18.42॥**

**पदार्थः** – शमः = मनोनिग्रहः, दमः = बाह्येन्द्रियनिग्रहः, तपः = विविधं व्रतम्, शौचम् = शुचित्वम्, क्षान्तिः = क्षमा, आर्जवम् = अवक्रता, ज्ञानम् = बोधः, विज्ञानम् = शास्त्रानुभवः, आस्तिक्यम् = आस्तिकभावः, स्वभावजम् = स्वभावजातम्, ब्रह्मकर्म = ब्राह्मणकृत्यम् ।

**अन्वयः**– शमः दमः तपः शौचं क्षान्तिः आर्जवम् एव च ज्ञानं विज्ञानम् आस्तिक्यं स्वभावजं ब्रह्मकर्म ।

**तात्पर्यम्** – तत्र मनोनिग्रहः, बाह्येन्द्रियनिग्रहः, विविधं व्रतम्, शुचित्वम्, क्षमा, अवक्रता, ज्ञानम्, विज्ञानम्, आस्तिक्यं च ब्राह्मणानां स्वभावात् जातं कर्म ।

**रामानुजीयमतम्** – ज्ञानम् परावरतत्त्वयाथात्म्यबोधः । विज्ञानम् परतत्त्वगतासाधारणविशेषविषयं ज्ञानम् । आस्तिक्यम् – वैदिकार्थस्य कृत्स्नस्य सत्यतानिश्चयः प्रकृष्टः, केनापि हेतुना चालयितुम् अशक्यः इत्यर्थः ।

**व्याकरणम्** – अस्ति परलोकादिः इति मतिः यस्य सः आस्तिकः । तस्य भावः आस्तिक्यम् – भावे ष्यञ् ।

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥18.43॥**

**पदार्थः** – शौर्यम् = विक्रमः, तेजः = प्रागल्भ्यम्, धृतिः = अग्लानिः, दाक्ष्यम् = सामर्थ्यम्, युद्धे = आयोधने अपि, अपलायनम् = अपराङ्मुखीभावः, दानम् = वितरणम्, ईश्वरभावः = प्रभुत्वम्, स्वभावजम् = स्वभावोत्पन्नम्, क्षात्रम् = क्षत्रियसम्बन्धि, कर्म = कर्तव्यम् ।

**अन्वयः**– शौर्यं तेजः धृतिः दाक्ष्यं युद्धे च अपि अपलायनं दानम् ईश्वरभावः च स्वभावजं क्षात्रं कर्म ।

**तात्पर्यम्** – विक्रमः, आत्मविश्वासः, धैर्यम्, सामर्थ्यम्, युद्धे अपराङ्मुखीभावः, दानम्, प्रभुत्वं च क्षत्रियाणां स्वभावात् जातं कर्म ।

**व्याकरणम्** – न पलायनम् अपलायनम् – नञ्तत्पुरुषः । ईश्वरस्य भावः ईश्वरभावः – षष्ठीतत्पुरुषः ।

**कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥18.44॥**

**पदार्थः** – कृषिगौरक्ष्यवाणिज्यम् = भूकर्षणम्, पाशुपाल्यम्, क्रयविक्रयः च, स्वभावजम् = प्रकृतिसम्भवम्, वैश्यकर्म = वैश्यानां कर्म, परिचर्यात्मकम् = शूश्रूषात्मकम्, स्वभावजम् = स्वभावोत्पन्नम्, कर्म = कर्तव्यम् ।

**अन्वयः** – कृषिगौरक्ष्यवाणिज्यं स्वभावजं वैश्यकर्म । शूद्रस्य अपि परिचर्यात्मकं स्वभावजं कर्म ।

**तात्पर्यम्** – कृषिः, गवादिरक्षणम्, क्रयविक्रयश्च वैश्यानां स्वभावात् जातं कर्म । एतेषां त्रयाणामपि साहाय्याचरणं शूद्रस्य स्वभावात् जातं कर्म ।

**व्याकरणम्** – गां रक्षतीति गोरक्षः, तस्य भावः गौरक्ष्यम् – भावे ष्यञ्, गोरक्षणम् इत्यर्थः । कृषिश्च गौरक्ष्यं च वाणिज्यं च एतेषां समाहारः कृषिगौरक्ष्यवाणिज्यम् – द्वन्द्वः । परिचर्या आत्मा यस्य तत् परिचर्यात्मकम् – बहुव्रीहिः ।

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥18.45॥**

**पदार्थः** – स्वे स्वे = स्वस्मिन् स्वस्मिन्, कर्मणि = कर्तव्ये, अभिरतः = आसक्तः, संसिद्धिम् = अभ्युदयम्, लभते = प्राप्नोति, स्वकर्मनिरतः = स्वकर्मानुष्ठाता, विन्दति = लभते ।

**अन्वयः**– नरः स्वे स्वे कर्मणि अभिरतः संसिद्धिं लभते । स्वकर्मनिरतः सिद्धिं यथा विन्दति तत् शृणु ।

**तात्पर्यम्** – मानवः स्वस्मिन् स्वस्मिन् कर्तव्ये आसक्तः अभ्युदयं प्राप्नोति । स्वकर्म आचरन् फलं यथा लभते तं प्रकारं शृणु ।

**व्याकरणम्** – स्वस्य कर्म स्वकर्म – षष्ठीतत्पुरुषः । स्वकर्मणि निरतः स्वकर्मनिरतः – सप्तमीतत्पुरुषः ।

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥18.46॥**

**पदार्थः** – भूतानाम् = प्राणिनाम्, प्रवृत्तिः = उत्पत्तिः, ततम् = परिव्याप्तम्, स्वकर्मणा = स्वकर्तव्येन, अभ्यर्च्य = आराध्य ।

**अन्वयः** – मानवः यतः भूतानां प्रवृत्तिः, येन इदं सर्वं ततम् तं स्वकर्मणा अभ्यर्च्य सिद्धिं विन्दति ।

**तात्पर्यम्** – सर्वेषां प्राणिनाम् उत्पत्तिः यस्मात् भवति, यः इदं समग्रं विश्वं व्याप्य तिष्ठति तादृशं परमात्मानम् एते सर्वेऽपि पुरुषाः आराध्य अभ्युदयं प्राप्नुवन्ति ।

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥18.47॥**

**पदार्थः** – विगुणः = विकृतः, स्वधर्मः = आत्मधर्मः, स्वनुष्ठितात् = सुष्ठु कृतात्, परधर्मात् = इतरधर्मात्, श्रेयान् = श्रेयोदायकः, स्वभावनियतम् = स्वभावलब्धम्, कर्म = कर्तव्यम्, कुर्वन् = आचरन्, किल्बिषम् = पापम्, न आप्नोति = न अधिगच्छति ।

**अन्वयः** – विगुणः स्वधर्मः स्वनुष्ठितात् परधर्मात् श्रेयान् । स्वभावनियतं कर्म कुर्वन् किल्बिषं न आप्नोति ।

**तात्पर्यम्** – साधु आचरितात् परधर्मादपि किञ्चिदङ्गेन विकलः स्वधर्मः एव श्रेयस्करः । प्रकृतिवशात् यत् कर्म निर्णीतं तत् कर्म कुर्वन् पुरुषः पापं न प्राप्नोति ।

**रामानुजीयमतम्** – स्वधर्मः – वर्णाश्रमयोग्यः धर्मः – कर्मयोगः । परधर्मः – इन्द्रियजयनिपुणपुरुषधर्मः ज्ञानयोगः ।

**व्याकरणम्** – परस्य धर्मः परधर्मः, तस्मात् – षष्ठीतत्पुरुषः । स्वभावेन नियतं स्वभावनियतम् – तृतीयातत्पुरुषः।

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥18.48॥**

**पदार्थः** - सदोषम् = दोषयुक्तम्, सहजम् = स्वभावजम्, सर्वारम्भाः = सर्वकर्माणि, आवृताः = आच्छादिताः ।

**अन्वयः** - कौन्तेय ! सदोषमपि सहजं कर्म न त्यजेत् । धूमेन हि अग्निः इव सर्वारम्भाः दोषेण आवृताः ।

**तात्पर्यम्** - अर्जुन ! दोषयुक्तम् अपि स्वभावजं कर्तव्यं न त्यजेत् । धूमेन अग्निः इव सर्वाण्यपि कर्माणि दोषेण आवृतान्येव भवन्ति ।

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति ॥18.49॥**

**पदार्थः** - असक्तबुद्धिः = असङ्गमतिः, जितात्मा = विहितमनस्कः, विगतस्पृहः = अपगताशः, सन्यासेन = सम्यक् दर्शनेन, नैष्कर्म्यसिद्धिम् = परमात्मज्ञानयोग्यताम्, अधिगच्छति = प्राप्नोति ।

**अन्वयः** - सर्वत्र असक्तबुद्धिः जितात्मा विगतस्पृहः सन्यासेन परमां नैष्कर्म्यसिद्धिम् अधिगच्छति ।

**तात्पर्यम्** - यः पुरुषः सर्वेषु अपि विषयेषु अनास्थः, जितमनस्कः, आशाविहीनः च वर्तते सः ज्ञानयोगेन सर्वकर्मनिवृत्तिरूपां सिद्धिं प्राप्नोति ।

**माध्वमतम्** - सन्यासेन = सर्वकर्मणां भगवति समर्पणेन, नैष्कर्म्यसिद्धिः = प्रारब्धाद्यनिष्टकर्मनाशाख्यसिद्धिः ।

**व्याकरणम्** - असक्ता बुद्धिः यस्य सः असक्तबुद्धिः - बहुव्रीहिः ! जितः आत्मा येन सः जितात्मा - बहुव्रीहिः । विगता स्पृहा यस्मात् सः विगतस्पृहः - बहुव्रीहिः । नैष्कर्म्यस्य सिद्धिः नैष्कर्म्यसिद्धिः - षष्ठीतत्पुरुषः ।

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥18.50॥**

**पदार्थः** - सिद्धिम् = योग्यताम्, ब्रह्म = परमात्मानम्, निबोध = जानीहि, परा = उत्तमा, निष्ठा = स्थितिः, समासेन = सङ्ग्रहेण ।

**अन्वयः** - कौन्तेय ! सिद्धिं प्राप्तः ब्रह्म यथा आप्नोति तथा मे (वचनात्) निबोध या ज्ञानस्य परा निष्ठा समासेन एव।

**तात्पर्यम्** - एवं नैष्कर्म्यसिद्धिं प्राप्तः पुरुषः येन प्रकारेण परमात्मानं प्राप्नोति तं प्रकारं शृणु । तत्परमात्मनः प्राप्तिः नाम ज्ञानस्य परिसमाप्तिः इति जानीहि ।

**माध्वमतम्** - या नैष्कर्म्यसिद्धिः ज्ञानस्य परिनिष्ठा तां येन प्रकारेण प्राप्तः भूत्वा अपरं ब्रह्म (लक्ष्मीम्) आप्नोति तत्प्रकारं संक्षेपतः शृणु ।

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥18.51॥**
**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥18.52॥**
**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥18.53॥**

**पदार्थः** - विशुद्धया = सात्त्विक्या, बुद्ध्या = मत्या, धृत्या = धैर्येण, नियम्य = वशीकृत्य, शब्दादीन् = शब्दप्रभृतीन्, विषयान् = इन्द्रियार्थान्, रागद्वेषौ = आसक्तिविद्वेषौ, व्युदस्य = अपहाय ।

विविक्तसेवी = एकान्तसेवी, लघ्वाशी = अल्पभोजनः, यतवाक्कायमानसः = नियतवाग्देहचित्तः, ध्यानयोगपरः = आत्मचिन्तनपरः, वैराग्यम् = वितृष्णाम्, समुपाश्रितः = अवलम्बितः ।

अहङ्कारम् = अहम्भावम्, बलम् = दार्ढ्यम्, दर्पम् = गर्वम्, परिग्रहम् = स्वीकारम्, विमुच्य = त्यक्त्वा, निर्ममः = ममताशून्यः, ब्रह्मभूयाय = ब्रह्मभावाय, कल्पते = शक्नोति ।

**अन्वयः** - विशुद्धया बुद्ध्या युक्तः धृत्या आत्मानं नियम्य च शब्दादीन् विषयान् त्यक्त्वा रागद्वेषौ व्युदस्य च विविक्तसेवी लघ्वाशी यतवाक्कायमानसः नित्यं ध्यानयोगपरः वैराग्यं समुपाश्रितः अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहं विमुच्य शान्तः निर्ममः ब्रह्मभूयाय कल्पते ।

**तात्पर्यम्** - यः सात्त्विकबुद्ध्या युक्तो भवति, धृतिमान् भवति, चित्तं नियमयति, शब्दादीन् विषयान् त्यजति, रागद्वेषौ दूरीकरोति, निर्जने प्रदेशे वसति, मितं भुङ्क्ते, शरीरेन्द्रियमनांसि नियच्छति, सततं ध्यायन् वैराग्यं प्राप्नोति, अहङ्कारादिं दोषं च विमुञ्चति सः शान्तः ममताशून्यश्च ब्रह्मत्वं प्रतिपद्यते ।

**माध्वमतम्**- विशुद्धया बुद्ध्या = विषयेषु असक्तया बुद्ध्या, आत्मानम् = मनः । ध्यानयोगपरः = नित्यं ध्यानरूपोपायपरः ।

**व्याकरणम्** - शब्दः आदिः येषां ते शब्दादयः, तान् शब्दादीन् - बहुव्रीहिः । विविक्तं सेवते तच्छीलः विविक्तसेवी - ताच्छीलिके कर्तरि णिनिप्रत्ययः उपपदसमासश्च । लघु अश्नाति इति लघ्वाशी - ताच्छीलिके कर्तरि णिनिप्रत्ययः उपपदसमासश्च । वाक् च कायश्च मानसं च वाक्कायमानसानि - द्वन्द्वः । यतानि वाक्कायमानसानि येन सः यतवाक्कायमानसः - बहुव्रीहिः । ध्याने योगः ध्यानयोगः - सप्तमीतत्पुरुषः । ध्यानयोगः परः यस्य सः, ध्यानयोगपरः - बहुव्रीहिः । ब्रह्मणः भावः ब्रह्मभूयम्, तस्मै - भावार्थे क्यप् उपपदसमासश्च ।

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥18.54॥**

**पदार्थः** - ब्रह्मभूतः = ब्रह्मैव सन्, प्रसन्नात्मा = प्राप्तप्रसादः, शोचति = विषीदति, काङ्क्षति = अभिलषति, मद्भक्तिम् = परमेश्वरभक्तिम् ।

**अन्वयः** - ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । सर्वेषु भूतेषु समः परां मद्भक्तिं लभते ।

**तात्पर्यम्** - यदा पुरुषः ब्रह्मभूतः भवति ततः परं तस्य शोकः न सम्भवति, नापि विषयाभिलाषः । सः सर्वेषु प्राणिषु समानः सन् अतिशयितां मद्भक्तिं प्राप्नोति ।

**माध्वमतम्**- पूर्वोक्तगुणविशिष्टः लक्ष्मीं प्राप्तः (ब्रह्मभूतः) विषयेषु अप्रवृत्तमनाः सन् न शोचति न कामयते च ।

**रामानुजीयमतम्** - प्रसन्नात्मा स्वस्वामिनि । परां भक्तिम् = मयि निरतिशयप्रीतिरूपां भक्तिं लभते ।

**व्याकरणम्** - प्रसन्नः आत्मा यस्य सः प्रसन्नात्मा - बहुव्रीहिः । मयि भक्तिः मद्भक्तिः, ताम्- सप्तमीतत्पुरुषः।

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥18.55॥**

**पदार्थः** - भक्त्या = भक्तियोगेन, तत्त्वतः = परमार्थतः, यावान् = यादृशपरिमाणविशिष्टः, यः च अस्मि =

यादृक्स्वरूपविशिष्टः च अस्मि, अभिजानाति = सम्यक् वेत्ति, तत्त्वतः = वस्तुतः, विशते = प्रविशति ।

**अन्वयः** - भक्त्या तत्त्वतः यावान् यः च अस्मि (तादृशं) माम् अभिजानाति ततः मां तत्त्वतः ज्ञात्वा तदनन्तरं विशते ।

**तात्पर्यम्** - सः भक्त्या प्रथमं सर्वत्र व्याप्तं सच्चिदानन्दस्वरूपं च मां जानाति ततः मामेव प्रविशति अर्थात् मय्येव लीनो भवति ।

**माध्वमतम्**- भगवान् कियान्, देशकालगुणैः कियत् व्याप्तः, किंनामा, किंरूपश्च इति विज्ञाय यदि पुरुषः परमभक्त्या सेवते तर्हि मुक्तः भवति ।

**रामानुजीयमतम्** - भक्त्या एव तत्त्वज्ञानम् भक्त्यैव च परमात्मप्राप्तिः ।

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥18.56॥**

**पदार्थः** - सर्वकर्माणि = निखिलकर्तव्यानि, मद्व्यपाश्रयः = मदाश्रयः, कुर्वाणः = आचरन्, मत्प्रसादात् = मदनुग्रहात्, अव्ययम् = अविनाशि ।

**अन्वयः** - सर्वकर्माणि अपि मद्व्यपाश्रयः सदा कुर्वाणः मत्प्रसादात् अव्ययं शाश्वतं पदम् अवाप्नोति ।

**तात्पर्यम्** - सः नित्यनैमित्तिकानि सर्वाण्यपि कर्माणि कुर्वन् मामेव आश्रयं मन्यमानः क्रमेण मदनुग्रहादेव मम अनश्वरं पदं प्राप्नोति ।

**व्याकरणम्** - सर्वाणि कर्माणि सर्वकर्माणि - कर्मधारयः । अहं व्यपाश्रयः यस्य सः मद्व्यपाश्रयः - बहुव्रीहिः । मम प्रसादः मत्प्रसादः, तस्मात् - षष्ठीतत्पुरुषः ।

**चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥18.57॥**

**पदार्थः** - चेतसा = मनसा, सन्न्यस्य = समर्प्य, मत्परः = मदासक्तः, बुद्धियोगम् = समाहितचित्तत्वम्, उपाश्रित्य = अवलम्ब्य, मच्चित्तः = मन्मनाः ।

**अन्वयः** - सर्वकर्माणि चेतसा मयि सन्न्यस्य मत्परः बुद्धियोगम् उपाश्रित्य सततं मच्चित्तः भव ।

**तात्पर्यम्** - सर्वाण्यपि कर्माणि मयि विन्यस्य अहमेव परः पुरुषार्थः इति मन्यमानः समाहितचित्तः सर्वदा मय्येव मनः स्थापय ।

**व्याकरणम्** - मयि चित्तं यस्य सः मच्चित्तः - बहुव्रीहिः ।

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ 18.58॥**

**पदार्थः** - मच्चित्तः = मदन्तःकरणः, मत्प्रसादात् = मदनुग्रहात्, सर्वदुर्गाणि = सकलदुःखानि, तरिष्यसि = अतिक्रमिष्यसि, अथ चेत् = यदि पुनः, अहङ्कारात् = अहम्भावात्, न श्रोष्यसि = न अवधारयसि, विनङ्क्ष्यसि = विनाशं गमिष्यसि ।

**अन्वयः** - मच्चित्तः मत्प्रसादात् सर्वदुर्गाणि तरिष्यसि । अथ त्वम् अहङ्कारात् न श्रोष्यसि चेत् विनङ्क्ष्यसि ।

**तात्पर्यम्** - यदि मयि एव मनः स्थापयसि तर्हि सर्वाण्यपि दुःखानि अतिक्रमितुं शक्नोषि । अथ अहमपि ज्ञानी

इति अहङ्कारात् मदुक्तं न शृणोषि तर्हि अवश्यम् अधःपतनं प्राप्नोषि ।

**व्याकरणम्** – सर्वाणि दुर्गाणि सर्वदुर्गाणि – कर्मधारयः । मम प्रसादः मत्प्रसादः, तस्मात् – षष्ठीतत्पुरुषः ।

**यद्यहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥18.59॥**

**पदार्थः** – अहङ्कारम् = अहम्भावम्, आश्रित्य = स्वीकृत्य, योत्स्ये = युद्धं करिष्ये, मन्यसे = चिन्तयसि, व्यवसायः = निश्चयः, मिथ्या = विपरीतः, प्रकृतिः = क्षत्रियहेतुभूता प्रकृतिः, नियोक्ष्यति = अवश्यं प्रवर्तयति ।

**अन्वयः** – यदि अहङ्कारम् आश्रित्य न योत्स्ये इति मन्यसे (तर्हि) एषः ते व्यवसायः मिथ्या । प्रकृतिः त्वां नियोक्ष्यति ।

**तात्पर्यम्** – यदि त्वम् अहङ्कारम् आश्रित्य अहं युद्धं न करोमि इति निर्णयसि तदापि तव निर्णयः निष्फलः भवति । यतः क्षत्रियत्वकारणीभूता या प्रकृतिः सा प्रवृद्धरजोगुणा सती त्वाम् अवश्यं युद्धे प्रवर्तयिष्यति । अतः पूर्वमेव मदुक्तस्य अनुसरणं तव अत्यन्तं श्रेयस्करम् ।

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥18.60॥**

**पदार्थः** – स्वभावजेन = नैसर्गिकेन, निबद्धः = नियतः, मोहात् = अविवेकात्, अवशः = परवशः ।

**अन्वयः** – कौन्तेय ! स्वभावजेन स्वेन कर्मणा निबद्धः यत् कर्तुं न इच्छसि तत् मोहात् अवशः अपि करिष्यसि ।

**तात्पर्यम्** – अर्जुन ! यदि त्वम् अविवेकेन युद्धं न करोषि तर्हि पूर्वकर्मसंस्कारानुगुणस्य स्वभावस्य यदनुरूपं युद्धादिकर्म तेन नियन्त्रणात् परवशः सन् अवश्यं युद्धे प्रवर्तसे ।

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥18.61॥**

**पदार्थः** – ईश्वरः = नारायणः, सर्वभूतानि = सकलप्राणिनः, यन्त्रारूढानि = यन्त्राधिष्ठितानि इव, मायया = प्रकृत्या, भ्रामयन् = चालयन्, सर्वभूतानाम् = सकलप्राणिनाम्, हृद्देशे = हृदयप्रदेशे ।

**अन्वयः** – अर्जुन ! ईश्वरः सर्वभूतानि यन्त्रारूढानि मायया भ्रामयन् सर्वभूतानां हृद्देशे तिष्ठति ।

**तात्पर्यम्** – अर्जुन ! सर्वेषामपि प्राणिनां हृदये ईश्वरो वर्तते । सः तानि सर्वाणि भूतानि यन्त्रारूढानि इव सम्यक् भ्रामयति । अतः त्वं न स्वतन्त्रः । युद्धं न करोमि इति कृतनिर्णयोऽपि अन्ते युद्धं करिष्यस्येव । तस्मात् इदानीमेव मम वचनं पालय ।

**माध्वमतम्**– ईश्वरः शरीरारूढान् प्राणिनः स्वरूपभूतेच्छया कर्मसु प्रवर्तयन् हृद्देशे तिष्ठति ।

**रामानुजीयमतम्** – ईश्वरः = सर्वनियमनशीलः वासुदेवः । हृद्देशः = सकलप्रवृत्तिनिवृत्तिमूलज्ञानोदयो देशः ।

**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥18.62॥**

**पदार्थः** – सर्वभावेन = सर्वात्मना, शरणम् = आश्रयम्, गच्छ = प्राप्नुहि, तत्प्रसादात् = ईश्वरानुग्रहात् ।

**अन्वयः** – भारत ! सर्वभावेन तम् एव शरणं गच्छ । तत्प्रसादात् परां शान्तिं शाश्वतं स्थानं प्राप्स्यसि ।

**तात्पर्यम्**- अर्जुन ! तस्मात् त्वं सर्वात्मना तमेव ईश्वरं शरणं गच्छ, यस्यानुग्रहात् परमां शान्तिं प्राप्नुवन् शाश्वतं स्थानम् अवाप्स्यसि ।

**रामानुजीयमतम्** - शरणं गच्छ - अनुवर्तस्व ।

**व्याकरणम्** - तस्य प्रसादः तत्प्रसादः, तस्मात् - षष्ठीतत्पुरुषः । सर्वः भावः सर्वभावः, तेन - कर्मधारयः ।

**इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥18.63॥**

**पदार्थः** - गुह्यात् = गोप्यात्, गुह्यतरम् = अतिशयेन गोप्यम्, ज्ञानम् = तत्त्वम्, आख्यातम् = कथितम्, अशेषेण = सकलम्, विमृश्य = आलोच्य ।

**अन्वयः** - मया गुह्यात् गुह्यतरम् एतत् ज्ञानम् इति ते आख्यातम् । एतत् अशेषेण विमृश्य यथा इच्छसि तथा कुरु ।

**तात्पर्यम्** - अर्जुन ! मया एतावन्तं कालम् अत्यन्तं रहस्यं तत्त्वं विशदीकृतम् । एतत् सर्वं सम्यक् ज्ञात्वा यत् कर्तुम् इच्छसि तत् कुरु ।

**व्याकरणम्** - अतिशयेन गुह्यम् गुह्यतरम् - द्वयोः अन्यतरस्मिन् अतिशये तरप् ।

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥18.64॥**

**पदार्थः** - सर्वगुह्यतमम् = अत्यन्तगोपनीयम्, परमम् = प्रकृष्टम्, वचः = वाक्यम्, भूयः = पुनः, इष्टः = अभिमतः, हितम् = श्रेयस्करम्, वक्ष्यामि = वदिष्यामि ।

**अन्वयः** - दृढं मे इष्टः असि इति सर्वगुह्यतमं मे परमं वचः भूयः शृणु । ततः ते हितं वक्ष्यामि ।

**तात्पर्यम्** - अत्यन्तं गोपनीयं मम प्रकृष्टं वचनं पुनः शृणु । त्वं मम अत्यन्तम् इष्टः असि । तस्मात् तव यत् श्रेयस्करं तत् वदिष्यामि ।

**व्याकरणम्** - अतिशयेन गुह्यं गुह्यतमम् - बहुषु अन्यतमस्मिन् अतिशये तमप् ।

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥18.65॥**

**पदार्थः** - मन्मनाः = मन्मनस्कः, मद्भक्तः = मदाराधकः, मद्याजी = मत्पूजकः, एष्यसि = गमिष्यसि, सत्यम् = परमार्थतः, प्रतिजाने = प्रतिशृणोमि ।

**अन्वयः** - मन्मना भव । मद्भक्तः मद्याजी मां नमस्कुरु । माम् एव एष्यसि । ते सत्यं प्रतिजाने । मे प्रियः असि ।

**तात्पर्यम्** - अर्जुन ! मय्येव चित्तं स्थापय । मद्भक्तो भव । मामेव पूजय । मामेव नमस्कुरु । अन्ते मामेव प्राप्स्यसि । दृढमहं कथयामि यत् त्वं मम अत्यन्तं प्रियः । अतः यत् ते श्रेयस्करं तदेव कथयामि । तदेव अनुतिष्ठ ।

**रामानुजीयमतम्** - सर्वधर्मान्-कर्मयोग-ज्ञानयोग-भक्तियोगरूपान् सर्वान् धर्मान् परमनिश्रेयससाधनभूतान् । परित्यज्य मदाराधकत्वेन अतिमात्रप्रीत्या यथाधिकारं कुर्वन् एव उक्तरीत्या फलसङ्गकर्तृत्वादिपरित्यागेन परित्यज्य ।

**व्याकरणम्** – मयि मनः यस्य सः मन्मनाः – बहुव्रीहिः । मम भक्तः मद्भक्तः – षष्ठीतत्पुरुषः । मां यजते इति मद्याजी – ताच्छीलिके कर्तरि णिनिः उपपदसमासश्च ।

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ 18.66॥**

**पदार्थः** – सर्वधर्मान् = सकलकर्माणि, परित्यज्य = विसृज्य, शरणम् = आश्रयम्, व्रज = गच्छ, त्वा = त्वाम्, सर्वपापेभ्यः = सकलकिल्बिषेभ्यः, मोक्षयिष्यामि = विमोचयिष्यामि ।

**अन्वयः** – सर्वधर्मान् परित्यज्य माम् एकं शरणं व्रज । अहं त्वा सर्वपापेभ्यः मोक्षयिष्यामि मा शुचः ।

**तात्पर्यम्** – अर्जुन ! तस्मात् त्वं सर्वाणि कर्माणि परित्यज्य मां शरणं प्राप्नुहि । अहं त्वां कर्मत्यागजन्यात् सर्वस्मात् अपि पापात् विमोचयिष्यामि । शोकं मा कुरु ।

**माध्वमतम्**– अन्यान् सर्वान् धर्मान् सर्वधर्मफलानि च परित्यज्य माम् (श्रीकृष्णम्) शरणं व्रज । अहं त्वां सर्वपापेभ्यः विनिर्मुक्तं करिष्यामि ।

**व्याकरणम्** – सर्वे धर्माः सर्वधर्माः, तान् – कर्मधारयः । सर्वाणि पापानि सर्वपापानि, तेभ्यः – कर्मधारयः ।

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥18.67॥**

**पदार्थः** – कदाचन = कदापि, अतपस्काय = तपोविहीनाय, वाच्यम् = कथनीयम्, अभक्ताय = भक्तिहीनाय, अशुश्रूषवे = असेविने, अभ्यसूयति = न सहते ।

**अन्वयः** – इदं ते कदाचन अतपस्काय न वाच्यम् । न अभक्ताय, न च अशुश्रूषवे, मां यः अभ्यसूयति तस्मै न ।

**तात्पर्यम्** – एतावन्तं कालं यदुक्तं गीतार्थतत्त्वं तत् त्वया तपोविहीनाय न वाच्यम् । भक्तिहीनाय न वाच्यम् । असेविने न वाच्यम् । मां यः न सहते तस्मै अपि न वाच्यम् ।

**व्याकरणम्** – न विद्यते तपः यस्मिन् सः अतपस्कः, तस्मै – नञ्बहुव्रीहिः । न भक्तः अभक्तः, तस्मै – नञ्तत्पुरुषः । न शुश्रूषुः अशुश्रूषुः, तस्मै – नञ्तत्पुरुषः ।

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ 18.68 ॥**

**पदार्थः** – गुह्यम् = रहस्यम्, मद्भक्तेषु = मदाराधकेषु, अभिधास्यति = वदिष्यति, असंशयः = न सन्देहः ।

**अन्वयः** – यः परमं गुह्यम् इदं मद्भक्तेषु अभिधास्यति सः मयि परां भक्तिं कृत्वा माम् एव एष्यति । असंशयः ।

**तात्पर्यम्** – यः पुरुषः प्रकृष्टं रहस्यम् इदं मदाराधकेषु वदिष्यति सः मयि परमेश्वरे श्रद्धां कुर्वन् माम् एव अधिगच्छति । अत्र सन्देहः नास्ति ।

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥18.69॥**

**पदार्थः** – प्रियकृत्तमः = अत्यन्तं प्रियकरः, प्रियतरः = इष्टतरः, भुवि = भूमौ, भविता = भविष्यति ।

**अन्वयः** - मनुष्येषु च तस्मात् कश्चित् मे न प्रियकृत्तमः । तस्मात् अन्यः प्रियतरः भुवि न च भविता ।

**तात्पर्यम्** - मनुष्येषु तस्मात् प्रियकारी अपरः कोऽपि नास्ति । तस्मात् अन्यः मम प्रियो नापि भविष्यति । सः एव प्रियकारी, सः एव च मम अत्यन्तं प्रियः इति जानीहि ।

**व्याकरणम्** - अतिशयेन प्रियकृत् प्रियकृत्तमः - अतिशयार्थे तमप् । अतिशयेन प्रियः प्रियतरः - द्वयोः अन्यतरस्मिन् अतिशये तरप् ।

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥18.70॥**

**पदार्थः** - धर्म्यम् = धर्मयुक्तम्, संवादम् = सम्भाषणम्, अध्येष्यते = पठिष्यति, ज्ञानयज्ञेन = ज्ञानरूपयागेन, इष्टः = पूजितः, स्याम् = भवेयम् ।

**अन्वयः** - यः च धर्म्यम् आवयोः इमं संवादम् अध्येष्यते तेन ज्ञानयज्ञेन अहम् इष्टः स्याम् इति मे मतिः ।

**तात्पर्यम्** - यो वा मनुष्यः आवयोः इदं सम्भाषणं सम्यक् पठिष्यति सः ज्ञानयज्ञेन मां यजति इत्येव मम मतिः ।

**व्याकरणम्** - ज्ञानमेव यज्ञः ज्ञानयज्ञः, तेन - कर्मधारयः ।

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥18.71॥**

**पदार्थः** - श्रद्धावान् = श्रद्दधानः, अनसूयः = ईर्ष्यारहितः, शृणुयात् = आकर्णयेत्, मुक्तः = विमुक्तः, पुण्यकर्मणाम् = पवित्रकर्मणाम्, शुभान् = प्रशस्तान्, प्राप्नुयात् = गच्छेत् ।

**अन्वयः** - श्रद्धावान् अनसूयः च यः नरः शृणुयात् अपि सः अपि मुक्तः पुण्यकर्मणां शुभान् लोकान् प्राप्नुयात् ।

**तात्पर्यम्** - यः पुरुषः श्रद्धावान् ईर्ष्यारहितश्च सन् इदं सम्भाषणं शृणोति सोऽपि सर्वेभ्यः पापेभ्यः मुक्तः पुण्यशालिनां शुभं लोकं प्राप्स्यति ।

**व्याकरणम्** - श्रद्धा अस्य अस्मिन् वा अस्ति इति श्रद्धावान् - मतुप् । न विद्यते असूया यस्मिन् सः अनसूयः - नञ्बहुव्रीहिः । पुण्यं कर्म येषां ते पुण्यकर्माणः, तेषां बहुव्रीहिः ।

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय ॥18.72॥**

**पदार्थः** - एकाग्रेण = अवहितेन, चेतसा = चित्तेन, श्रुतं कच्चित् = आकर्णितं किम्, अज्ञानसम्मोहः = अज्ञानजन्यः विपर्ययः, प्रणष्टः कच्चित् = अपगतः किम् ।

**अन्वयः** - पार्थ ! त्वया एकाग्रेण चेतसा एतत् श्रुतं कच्चित् । धनञ्जय ! ते अज्ञानसम्मोहः प्रणष्टः कच्चित् ।

**तात्पर्यम्** - अर्जुन ! त्वया अवहितेन चित्तेन इदं श्रुतं किम् ? अर्जुन ! तव अविवेकः अपगतः किम् ?

**व्याकरणम्** - अज्ञानात् सम्मोहः अज्ञानसम्मोहः - पञ्चमीतत्पुरुषः ।

अर्जुन उवाच - **नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादात्मयाच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥18.73॥**

**पदार्थः** – अच्युत = श्रीकृष्ण ! त्वत्प्रसादात् = भवदनुग्रहात्, मोहः = अविवेकः, स्मृतिः = स्मरणम्, लब्धा = प्राप्तम्, गतसन्देहः = विगतसंशयः, स्थितः = भूतः, वचनम् = वाक्यम्, करिष्ये =आचरिष्यामि ।

**अन्वयः** – अच्युत ! तव प्रसादात् मोहः नष्टः । स्मृतिः मया लब्धा । गतसन्देहः स्थितः अस्मि । तव वचनं करिष्ये ।

**तात्पर्यम्** – श्रीकृष्ण ! भवदनुग्रहात् अविवेकः अपगतः । कर्तव्यस्मरणं मम जातम् । विगतसन्देहः स्थितः अस्मि । तव वचनम् आचरिष्यामि ।

**माध्वमतम्**– हे अच्युत ! त्वत्प्रसादात् विपरीतज्ञानलक्षणः मोहः नष्टः । नारायणद्विट्तदनुबन्धिनिग्रहः परमो धर्मः अवश्यं कार्यः इति स्मृतिः जाता । तस्मात् तव वचनं करिष्ये ।

**रामानुजीयमतम्** – मोहः = विपरीतज्ञानम् । स्मृतिः = यथावस्थिततत्त्वज्ञानम् ।

**व्याकरणम्** – तव प्रसादः त्वत्प्रसादः, तस्मात् – षष्ठीतत्पुरुषः । गतः सन्देहः यस्मात् सः गतसन्देहः – पञ्चमीतत्पुरुषः ।

**सञ्जय उवाच –** **इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥18.74॥**

**पदार्थः** – महात्मनः = महानुभावस्य, वासुदेवस्य = नारायणस्य, पार्थस्य = अर्जुनस्य, रोमहर्षणम् = रोमाञ्चकरम्, संवादम् = सम्भाषणम्, अश्रौषम् = अशृणवम् ।

**अन्वयः** – महात्मनः वासुदेवस्य पार्थस्य च रोमहर्षणम् अद्भुतम् इमं संवादम् इति अहम् अश्रौषम् ।

**तात्पर्यम्** – महानुभावस्य नारायणस्य अर्जुनस्य च रोमाञ्चकरम् आश्चर्यम् एनं संवादम् अहम् अशृणवम् ।

**व्याकरणम्** – रोम्णां हर्षणः रोमहर्षणः, तम् – षष्ठीतत्पुरुषः ।

**व्यासप्रसादाच्छ्रुतवानेतद् गुह्यमहं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥18.75॥**

**पदार्थः** – साक्षात् = प्रत्यक्षम्, कथयतः = वदतः, योगेश्वरात् = योगप्रभोः, कृष्णात् = वासुदेवात्, गुह्यम् = रहस्यम्, परम् = उत्तमम्, योगम् = योगग्रन्थम्, व्यासप्रसादात् = व्यासानुग्रहात्, श्रुतवान् = आकर्णितवान् ।

**अन्वयः** – साक्षात् कथयतः योगेश्वरात् कृष्णात् गुह्यं परम् एतत् योगं व्यासप्रसादात् अहं स्वयं श्रुतवान् ।

**तात्पर्यम्** – योगेश्वरः कृष्णः साक्षात् स्वमुखेन यदिदं गीतार्थतत्त्वम् उक्तवान् तदहं व्यासानुग्रहेण श्रुतवान् अस्मि ।

**व्याकरणम्** – व्यासस्य प्रसादः व्यासप्रसादः, तस्मात् – षष्ठीतत्पुरुषः । योगस्य ईश्वरः योगेश्वरः, तस्मात् – षष्ठीतत्पुरुषः ।

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥18.76॥**

**पदार्थः** – अद्भुतम् = आश्चर्यम्, पुण्यम् = पापहरम्, केशवार्जुनयोः = कृष्णार्जुनयोः, संवादम् = संलापम्, संस्मृत्य संस्मृत्य = पुनः पुनः स्मृत्वा, मुहुः मुहुः = भूयो भूयः, हृष्यामि = तुष्यामि ।

**अन्वयः** – राजन् ! अद्भुतं पुण्यं केशवार्जुनयोः इमं संवादं संस्मृत्य संस्मृत्य मुहुः मुहुः च हृष्यामि ।

**तात्पर्यम्** – राजन्, धृतराष्ट्र ! आश्चर्यं पापहरं कृष्णार्जुनयोः एनम् संलापं पुनः पुनः स्मृत्वा भूयो भूयः च तुष्यामि।

**माध्वमतम्**-पुण्यम् = पारत्रिकसुखहेत्वदृष्टकरम्
**व्याकरणम्** - केशवश्च अर्जुनश्च केशवार्जुनौ, तयोः - द्वन्द्वः ।

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान् राजन्हृष्यामि च पुनः पुनः ॥18.77॥**

**पदार्थः** - हरेः = विष्णोः, विस्मयः = आश्चर्यम् ।
**अन्वयः** - राजन् ! हरेः अत्यद्भुतं च तत् रूपं संस्मृत्य संस्मृत्य (स्थितस्य) मे महान् विस्मयः । पुनः पुनः च हृष्यामि ।
**तात्पर्यम्** - राजन् ! हरेः अत्यद्भुतं च तत् रूपं स्मृत्वा स्मृत्वा (स्थितस्य) मम महत् आश्चर्यं भवति । पुनःपुनः सन्तुष्यामि च ।

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥18.78॥**

**पदार्थः** - योगेश्वरः = सर्वयोगेशः, धनुर्धरः = गाण्डीवधरः, पार्थः = अर्जुनः, श्रीः = लक्ष्मीः, विजयः = जयः, भूतिः = ऐश्वर्यम्, ध्रुवा = स्थिरः, नीतिः = धर्मः, मतिः = बुद्धिः ।
**अन्वयः** - यत्र योगेश्वरः कृष्णः यत्र धनुर्धरः पार्थः तत्र श्रीः विजयः भूतिः ध्रुवा नीतिः (इति) मम मतिः ।
**तात्पर्यम्** - यत्र योगेश्वरः कृष्णः वर्तते यत्र च धनुर्धरः पार्थः वर्तते, तत्र सम्पत्तिः जयः ऐश्वर्यं धर्मः च अवश्यं भवति इति मम मतिः ।
**माध्वमतम्**- यत्र सर्वोपायवतां स्वामी भगवान् श्रीकृष्णः तत्र राज्यलक्ष्मीः, सम्पत्, न्यायः इति मम मतिः निश्चला ।
**रामानुजीयमतम्** - योगेश्वरः = चेतनस्य अचेतनस्य च कृत्स्नस्य वस्तुनः ये ये स्वभावयोगाः तेषां सर्वेषां योगानाम् ईश्वरः । नीतिश्च ध्रुवा = निश्चला इति मतिः मम इति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
मोक्षसंन्यासयोगो नाम अष्टादशोध्यायः ॥

# उत्तराणि

## पञ्चमोऽध्यायः

5.1.1.कर्मणाम्। 5.1.2. कर्मणाम्। 5.1.3 अर्जुनः कृष्णम्। 5.1.4. कर्मणां परित्यागः। 5.1.5. कृष्ण!

5.2.1. सन्यासः कर्मयोगश्च। 5.2.2. कर्मयोगः। 5.2.3. सन्यासकर्मयोगयोः। 5.2.4. कर्मणां परिग्रहः। 5.2.5. (कृष्णः)।

5.3.1. न द्वेष्टि, न काङ्क्षति। 5.3.2. नित्यसन्यासी। 5.3.3. बन्धात्। 5.3.4. रागद्वेषशून्यः। 5.3.5. सुखम्।

5.4.1. साङ्ख्ययोगौ पृथक् इति। 5.4.2. पण्डिताः। 5.4.3. सांख्ययोगयोः एकम्। 5.4.4. सम्यक्। 5.4.5. सांख्ययोगयोः।

5.5.1. स्थानम्। 5.5.2. स्थानम्। 5.5.3. एकम्। 5.5.4. ज्ञानिभिः। 5.5.5. सम्यक् पश्यति।

5.6.1. सन्यासः। 5.6.2. कर्मयोगात्। 5.6.3. मुनिः। 5.6.4. योगयुक्तः। 5.6.5. नचिरेण।

5.7.1. सर्वभूतात्मभूतात्मा। 5.7.2. योगयुक्तः, विशुद्धात्मा, विजितात्मा, जितेन्द्रियश्च। 5.7.3. विशुद्धचित्तः। 5.7.4. योगेन। 5.7.5. स्वच्छशरीरः।

5.8.1. युक्तः। 5.8.2. किञ्चिदपि नैव करोमि इति। 5.8.3. तत्त्ववित्। 5.8/9.4. पश्यन्, शृण्वन्, स्पृशन्, जिघ्रन्, अश्नन्, गच्छन्, स्वपन्, श्वसन्, प्रलपन्, विसृजन्, गृह्णन्, उन्मिषन्, निमिषन् अपि। 5.9.5. इन्द्रियार्थेषु।

5.10.1. ब्रह्मणि। 5.10.2. सङ्गम्। 5.10.3. अम्भसा पद्मपत्रम् इव। 5.10.4. फलासक्तिः।

5.11.1. योगिनः। 5.11.2. सङ्गम्। 5.11.3. आत्मशुद्धये। 5.11.4. कायेन, मनसा, बुद्ध्या, इन्द्रियैरपि। 5.11.5. केवलैः।

5.12.1. युक्तः। 5.12.2. कर्मफलम्। 5.12.3. सक्तः। 5.12.4. कामकारेण। 5.12.5. मोक्षः।

5.13.1. देही। 5.13.2. सर्वकर्माणि। 5.13.3. मनसा। 5.13.4. सुखम् 5.13.5. नवद्वारे पुरे देहे।

5.14.1. कर्तृत्वं कर्माणि कर्मफलसंयोगं च। 5.14.2. स्वभावः। 5.14.3. परमात्मा। 5.14.4. लोकस्य।

5.15.1. पापं सुकृतं च। 5.15.2. अज्ञानेन। 5.15.3. जन्तवः। 5.15.4. ज्ञानम् अज्ञानेन आवृतम्, तेन। 5.15.5. ज्ञानम्।

5.16.1. ज्ञानम्। 5.16.2. आदित्यवत्। 5.16.3. आत्मनः ज्ञानेन। 5.16.4.येषाम् अज्ञानं ज्ञानेन नाशितं तेषाम्। 5.16.5. परमार्थतत्त्वम्।

5.17.1. अपुनरावृत्तिम्। 5.17.2. तद्बुद्धयः, तदात्मानः, तन्निष्ठाः, तत्परायणाः च। 5.17.3. मोक्षः। 5.17.4. परमात्मनि। 5.17.5. परमात्मा।

5.18.1. पण्डिताः। 5.18.2. विद्याविनयसम्पन्नः। 5.18.3. ब्राह्मणे, गवि, हस्तिनि, शुनि श्वपाके च।

5.19.1. येषां मनः साम्ये स्थितं तैः। 5.19.2. इह एव। 5.19.3. ब्रह्मणि। 5.19.4. निर्दोषं समं च।

5.20.1. ब्रह्मणि। 5.20.2 स्थिरबुद्धिः, असम्मूढः ब्रह्मणि स्थितश्च। 5.20.3. प्रियम्। 5.20.4. अप्रियम्। 5.20.5. ब्रह्मवित्।

5.21.1 .बाह्यस्पर्शेषु। 5.21.2. अक्षयम्। 5.21.3. ब्रह्मयोगयुक्तात्मा। 5.21.4. असक्तात्मा।

5.22.1. दुःखयोनयः आद्यन्तवन्तश्च। 5.22.2. भोगाः। 5.22.3. भोगेषु। 5.22.4. उत्पत्तिविनाशसहिताः। 5.22.5. कौन्तेय।

5.23.1. कामक्रोधोद्भवः। 5.23.2. युक्तः सुखी च। 5.23.3. सोढुम्। 5.23.4. शरीरविमोक्षणात् प्राक्।

5.24.1. योगी। 5.24.2. ब्रह्मभूतः। 5.24.3. ब्रह्मनिर्वाणम्। 5.24.4. अन्तःसुखः, अन्तरारामः, अन्तर्ज्योतिश्च। 5.24.5. मोक्षः।

5.25.1. ऋषयः। 5.25.2. ऋषयः। 5.25.3. छिन्नद्वैधाः, यतात्मानः, सर्वभूतहिते रताश्च। 5.25.4. अपगतसंशयाः। 5.25.5. ब्रह्मनिर्वाणम्।

5.26.1. यतीनाम्। 5.26.2. कामक्रोधवियुक्तानाम्, यतचेतसाम्,विदितात्मनां च। 5.26.3. कामक्रोधाभ्याम्। 5.26.4. अभितः।

5.27.1. शब्दादयो विषयाः। 5.27.2. बाह्यान्। 5.27.3. भ्रुवोः मध्ये। 5.27.4. प्राणापानौ। 5.27.5. नासाभ्यन्तरचारिणौ। 5.28.6. मुनिः। 5.28.7. यतेन्द्रियमनोबुद्धिः, मोक्षपरायणः, विगतेच्छाभयक्रोधश्च।

5.29.1. कृष्णः। 5.29.2. सर्वभूतानाम्। 5.29.3. यज्ञतपसाम्। 5.29.4. सर्वलोकानाम्। 5.29.5. शान्तिम्।

## षष्ठोऽध्यायः

6.1.1. अनाश्रितः कार्यं कर्म यः करोति सः। 6.1.2. कर्मफलम्। 6.1.3. सन्यासी। 6.1.4. योगी।
6.1.5. अग्निसाध्यश्रौतकर्मत्यागी। 6.1.6. अग्निनिरपेक्षस्मार्तकर्मपरित्यागी।

6.2.1. योगात्। 6.2.2. पाण्डव। 6.2.3. असन्यस्तसङ्कल्पः। 6.2.4. कर्मफलविषयकः अभिलाषः।

6.3.1. योगम्। 6.3.2 कर्म। 6.3.3. योगारूढस्य। 6.3.4. शमः। 6.3.5. योगम् आरुरुक्षोः। 6.3.6. योगारूढस्य मुनेः।

6.4.1. सर्वसङ्कल्पसन्यासी। 6.4.2. योगारूढः। 6.4.3. सर्वेषाम् इन्द्रियविषयाणां तत्साधनानां च श्रवणादीनां क्रियाणां परित्यक्ता।
6.4.4. ज्ञानारूढः ज्ञानवान् इत्यर्थः।

6.5.1. उद्धरेत्। 6.5.2. आत्मना। 6.5.3. न अवसादयेत्। 6.5.4. आत्मा। 6.5.5. आत्मा। 6.5.6. मनः।

6.6.1. येन आत्मना आत्मा जितः। 6.6.2. आत्मा। 6.6.3. आत्मा। 6.6.4. आत्मनः। 6.6.5. मनः।

6.7.1. परमात्मा। 6.7.2. जितात्मनः प्रशान्तस्य। 6.7.3. समाहितः। 6.7.4. शीतोष्णसुखदुःखेषु।

6.8.1. ज्ञानविज्ञानाभ्याम्। 6.8.2. योगी। 6.8.3. ज्ञानविज्ञानतृप्तात्मा, कूटस्थः, विजितेन्द्रियः, समलोष्टाश्मकाञ्चनश्च। 6.8.4. योगी।
6.8.5. युक्तः। 6.8.6. निर्विकारः, कूटम् अयोधनः, तद्वत् तिष्ठति इति वा।

6.9.1. स्वभावेनैव उपकर्ता, स्नेहेन उपकर्ता। 6.9.2. समबुद्धिः। 6.9.3. सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु, साधुषु, पापेषु च।
6.9.4. उदासीनः। 6.9.5. स्वभावेनापकर्ता, कारणविशेषेण अपकर्ता। 6.9.6. विवदमानयोः उभयोरपि हिताकाङ्क्षी।

6.10.1. आत्मानम्। 6.10.2. रहसि। 6.10.3. सततम्। 6.10.4. एकाकी, यतचित्तात्मा, निराशीः अपरिग्रहश्च।
6.10.5. तृष्णाविहीनः। 6.10.6. योगी।

6.11.1. शुचौ देशे। 6.11.2. नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरं च। 6.11.3. आसने।

6.12.1. एकाग्रम्। 6.12.2. यतचित्तेन्द्रियक्रियः। 6.12.3. आत्मविशुद्धये।

6.13.1. कायशिरोग्रीवम्। 6.13.2. समम् अचलं च। 6.13.3. स्वं नासिकाग्रम्, दिशः च। 6.14.1. प्रशान्तात्मा, विगतभीः,
ब्रह्मचारिव्रते स्थितश्च। 6.14.2. समाहितः, निरुद्धचित्तवृत्तिः।

6.15.1. नियतमानसः। 6.15.2. योगी। 6.15.3. सदा। 6.15.4. शान्तिम्। 6.15.5. योगी।

6.16.1. अत्यश्नतः, अनश्नतः, अतिस्वप्नशीलस्य, जाग्रतश्च। 6.16.2. योगः। 6.16.3. अतिस्वप्नशीलस्य जाग्रतश्च।
6.16.4. अर्जुन। 6.16.5. समाधिः।

6.17.1. युक्ताहारविहारस्य, कर्मसु युक्तचेष्टस्य युक्तस्वप्नावबोधस्य च। 6.17.2. दुःखहा। 6.17.3. कर्मसु। 6.17.4. योगः।

6.18.1. निःस्पृहः। 6.18.2. सर्वकामेभ्यः। 6.18.3. यदा विनियतं चित्तम् आत्मन्येवावतिष्ठते। 6.18.4. विनियतम्।
6.18.5. आत्मनि।

6.19.1. निवातस्थः। 6.19.2. योगी। 6.19.3. आत्मनः। 6.19.4. दीपः। 6.19.5. योगिनः।

6.20.1.योगसेवया। 6.20.2. आत्मानम्। 6.20.3 आत्मनि। 6.20.4. चित्तम्।

6.21.1. आत्यन्तिकं बुद्धिग्राह्यम् अतीन्द्रियं च। 6.21.2. तत्त्वतः। 6.21.3. सुखम्। 6.21.4. अनिर्वचनीयम्।

6.22.1. सुखम्। 6.22.2. दुःखेन। 6.22.3. गुरुणा। 6.22.4. लाभम्।

6.23.1. दुःखसंयोगवियोगम्। 6.23.2. योगसंज्ञितम्। 6.23.3. योगः। 6.23.4. निश्चयेन।

6.24.1. सङ्कल्पप्रभवाः। 6.24.2. सङ्कल्पप्रभवान्। 6.24.3. इन्द्रियग्रामम्। 6.25.1. धृतिगृहीतया। 6.25.2. आत्मसंस्थम्।
6.25.3. शनैः शनैः।

6.26.1. चञ्चलम् अस्थिरं च। 6.26.2. मनः। 6.26.3. मनः। 6.26.5. आत्मनि।

6.27.1. योगिनम्। 6.27.2. प्रशान्तमनसम्, शान्तरजसम्, अकल्मषं ब्रह्मभूतं च। 6.27.3. सुखम्। 6.27.4. जीवन्मुक्तः।

6.28.1. आत्मानम्। 6.28.2. विगतकल्मषः। 6.28.3. सुखेन। 6.28.4 ब्रह्मसंस्पर्शम्। 6.28.5. योगी।

6.29.1. सर्वत्र समदर्शनः । 6.29.2. सर्वभूतानि । 6.29.3. आत्मानं सर्वभूतस्थम्, आत्मनि च सर्वभूतानि । 6.29.4. सर्वभूतस्थम् ।

6.30.1. सर्वत्र । 6.30.2. भगवति । 6.30.3. यः सर्वत्र भगवन्तं पश्यति सर्वं च भगवति पश्यति तस्य । 6.30.4. भगवतः ।

6.31.1. सर्वभूतस्थितः । 6.31.2. एकत्वम् आस्थितः । 6.31.3. भगवति । 6.31.4. सर्वथा वर्तमानोऽपि ।

6.32.1. परमः । 6.32.2. चेतनात् सुखं भवतु दुःखं वा तथापि यः सर्वत्र समानं पश्यति । 6.32.3. आत्मौपम्येन । 6.32.4. समम् ।

6.33.1. समत्वेन उपलक्षितः । 6.33.2. स्थिराम् । 6.33.3. मनसः चञ्चलत्वात् । 6.33.4. योगस्य स्थिरां स्थितिम् ।

6.34.1. चञ्चलं प्रमाथि बलवत् दृढं च । 6.34.2. सुदुष्करः । 6.34.3. वायोरिव । 6.34.4. मनसः ।

6.35.1. दुर्निग्रहं चलं च । 6.35.2. मनः । 6.35.3. अभ्यासेन, वैराग्येण च । 6.35.4. अर्जुनस्य । 6.35.5. कौन्तेयशब्देन ।

6.36.1. योगः । 6.36.2. असंयतात्मना । 6.36.3. कृष्णस्य । 6.36.4. यतता वश्यात्मना । 6.36.5. उपायतः ।

6.37.1. अयतिः योगाच्चलितमानसः पुरुषः । 6.37.2. योगात् ।

6.38.1. ब्रह्मणः । 6.38.2. छिन्नाभ्रमिव । 6.38.3. उभयविभ्रष्टः ।

6.39.1. संशयम् । 6.39.2. अशेषतः । 6.39.3. कृष्णः । 6.39.4. कृष्णात् । 6.39.5. कृष्ण ।

6.40.1 विनाशः । 6.40.2. इह अमुत्र च । 6.40.3. दुर्गतिम् । 6.40.4. कल्याणकृत् । 6.40.5. अर्जुनम् ।

6.41.1. पुण्यकृताम् । 6.41.2. शुचीनां श्रीमतां गेहे । 6.41.3. शाश्वतीः समाः । 6.41.4. योगभ्रष्टः ।

6.42.1. धीमतां कुले । 6.42.2. योगिनाम् । 6.42.3. योगिनां कुले जन्म । 6.42.4. धीमतां योगिनां कुले ।

6.43.1. पौर्वदेहिकम् । 6.43.2. बुद्धिसंयोगम् । 6.43.3. तस्मिन् जन्मनि । 6.43.4. भूयः संसिद्धये यतते ।

6.43.1. पूर्वाभ्यासेन । 6.43.2. अवशोऽपि । 6.43.3. शब्दब्रह्म । 6.43.4. योगम् ।

6.45.1. परां गतिम् । 6.45.2. अनेकजन्मसंसिद्धः । 6.45.3. संसिद्धकिल्बिषः । 6.45.4. योगी । 6.45.5. पराम् । 6.45.6. मुक्तिः ।

6.46.1. योगी । 6.46.2. योगी । 6.46.3. योगी । 6.46.4. तपस्विभ्यः, ज्ञानिभ्यः, कर्मिभ्यश्च । 6.46.5. तस्मात् योगी भव ।

6.47.1. यः श्रद्धावान् तं भजते च । 6.47.2. सर्वेषामपि योगिनाम् । 6.47.3. तद्गतेन ।

***

ग्रन्थऋणम् –

1. श्रीमद्भगवद्गीता पदार्थान्वयबोधिनी – G.S.R. Narasimhamurthy and A. Someswarasarma, Kanchi Kamakotipeetham, Kancheepuram, T.N.
2. गीता का शब्दकोश – डा. रत्नाकर नराले, प्रभात प्रकाशन, दिल्ली
3. गीतादर्शन – डा. रत्नाकर नराले, प्रभात प्रकाशन, दिल्ली
4. श्रीमद्भगवद्गीतामयंक – स्वामी गोपाल मुनि, नीता प्रकाशन, नई दिल्ली – 110 049
5. संस्कृतभाषादीपिका (तृतीया) एन्. रङ्गनाथशर्मा, सुरसरस्वतीसभा, शङ्गगिरिः
6. श्रीमद्भगवद्गीता – शाङ्करभाष्य हिन्दी–अनुवादसहित, गीताप्रेस, गोरखपुर
7. श्रीमद्भगवद्गीता (तत्त्वप्रकाशिकेत्याद्यष्टटीकोपेता) – परिमल पब्लिकेशन्स, दिल्ली

## पादानुक्रमणिका
## (अकारादिक्रमसूची)

* * *

# संस्कृताय भवन्तः कृपया अधोनिर्दिष्टेषु पञ्चविंशत्यां कार्येषु कानिचन पञ्च कार्याणि कुर्वन्तु

१. 'वदतु संस्कृतम्' इत्यस्य पुस्तकस्य पञ्च प्रतिकृतीः क्रीत्वा पञ्चभ्यः जनेभ्यः ददातु ।
२. 'पत्राचारद्वारा संस्कृतशिक्षणम्' इति योजनायां पञ्च शिक्षार्थिनः योजयतु ।
३. सम्भाषणसन्देशपत्रिकायाः पञ्च ग्राहकान् सङ्गृह्णातु ।
४. पञ्चभ्यः जनेभ्यः संस्कृतभारत्यै धनसहयोगराशिं सङ्गृह्य ददातु ।
५. संस्कृतभारत्याः पञ्च पुस्तकानि क्रेतुं पञ्च जनान् प्रेरयतु ।
६. पञ्चसु स्थानेषु सम्भाषणशिबिराणाम् आयोजने साहाय्यं करोतु ।
७. वर्षे पञ्च दिनानि संस्कृतप्रचारकार्याय ददातु ।
८. पञ्चविधानि प्रचारपत्रकाणि मुद्राप्य ददातु ।
९. पञ्च संश्लेषकान् कारयित्वा मुद्राप्य च ददातु ।
१०. पञ्च संस्कृतशुभाशयपत्राणि कारयित्वा / मुद्रयित्वा ददातु ।
११. पञ्चसु विद्यालयेषु संस्कृतच्छात्रेभ्यः दानाय पञ्च पुरस्कारान् ददातु ।
१२. Pride of India इत्यस्य पुस्तकस्य पञ्च प्रतिकृतीः क्रीणातु विक्रीणतां वा ।
१३. पञ्चसु मन्दिरेषु संस्कृतभारत्याः प्रचारफलकानि स्थापयतु ।
१४. पञ्चानां प्रभावि-प्रतिष्ठित-जनानां कृते संस्कृतभारत्याः परिचयं कारयतु ।
१५. प्रचारार्थं पञ्च वस्त्रफलकानि कारयित्वा ददातु ।
१६. पञ्चानां विद्यालयानां ग्रन्थालयेभ्यः संस्कृतभारत्याः पुस्तकानां गुच्छान् ददातु ।
१७. प्रतिदिनं पञ्च रूप्यकाणि संस्कृतप्रचारकार्याय दानरूपेण दानपात्रे स्थापयतु ।
१८. प्रतिदिनं पञ्चभिः जनैः सह किञ्चित् किञ्चित् संस्कृतसम्भाषणं करोतु ।
१९. पञ्च जनान् संस्कृतं पाठयतु ।
२०. प्रतिसप्ताहं पञ्च नूतनजनान् दूरभाषया सम्पर्क्य संस्कृतभारतीं परिचाययतु ।
२१. संस्कृतकार्ये सहयोगाय पञ्च संस्थाः प्रेरयतु ।
२२. संस्कृतकार्यविषये पञ्च लेखान् लिखतु ।
२३. पञ्चभ्यः जनेभ्यः संस्कृतविषये पत्राणि लिखतु ।
२४. पञ्चसु स्थानेषु संस्कृतविषये, संस्कृतभारत्याः विषये च भाषणं करोतु ।
२५. उपायनदानसमये पञ्चसु प्रसङ्गेषु संस्कृतपुस्तकानि ददातु ।

